# वैदिकी यज्ञविद्या

(मूलसंस्कृत)

लेखक :

डा० कुँवरलाल जैन व्यासशिष्य

इतिहासविद्या प्रकाशन, दिल्ली

१९९१

# प्राक्कथनम्

अद्यत्वे वैदिकज्ञानविज्ञानस्य दुर्विज्ञेयत्वं श्रौतयज्ञानां चाप्रचार एव स्तः, तत्रापि वेदविषयिक्यो यज्ञविषयिक्यो महत्यो भ्रान्त्यो मतभेदाश्च पौरस्त्येषु पाश्चात्येषु (यथा तिलककाणेकीथमैक्समूलरादिषु) विद्वत्सु विद्यन्ते, इदानीं वैदिकवाङ्मयस्यामध्ययनमतिविरलमस्ति, तत्रापि श्रौतसूत्राणां पठनपाठनस्य तु सर्वथा ह्यभावो वर्तते। ईदृश्यामवस्थायां मया प्रथमवारे अस्य विषयस्यानुसंधानं संसाधितम्, तत्र काश्चित् त्रुटयो भवितुं शक्याः, तस्माद्विद्वांसस्तास्त्रुटीर्मर्षयिष्यन्ति, इति मे विश्वासः।

सर्वेषां श्रौतसूत्राणां मूलं वेदश्रुतिरेवास्ति, तदनुसारेण आपस्तम्बश्रौतसूत्रस्य मूलं कृष्णयजुर्वेदीया तैत्तिरीयशाखा, तथा च कात्यायनश्रौतसूत्रस्य मूलं शुक्लयजुर्वेदीया वाजसनेयिसंहिता चास्ति। तत्र षट्सु वेदाङ्गेषु कल्पाख्यमङ्गं प्रधानं स्थानं लभते। कल्पास्तु यज्ञविद्याया अनिवार्याणि अङ्गानि सन्ति, तदुक्तं कुमारिलभट्टेन—

वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः।
न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकम्॥

श्रुतेरिव कल्पसूत्राणामपि महती प्रतिष्ठाऽऽसीत्—कल्पसूत्रकारा अपि ऋषिवत् स्मर्यन्ते च—

न तावदनृषिः कश्चित् स्मर्यते कल्पसूत्रकृत्।
कर्तृत्वं यदृषीणां तु तत्सर्वं मन्त्रकृत्समम्॥

(तन्त्रवार्तिके १।३।१०)

कल्पसूत्राणामपि बहवो विभागा भवन्ति, यथा श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, पितृमेधसूत्रम्, शुल्वसूत्रम् इत्यादीनि। तत्र श्रौतसूत्रं कल्पस्य प्रधानो विभागः। श्रौतसूत्रेषु आदर्शपूर्णमासाभ्यामश्वमेधपर्यन्तं सर्वेषां यज्ञानां विवेचनं क्रियते। अस्मिन् शोधग्रन्थे कात्यायनापस्तम्बश्रौतसूत्रयोस्तुलनात्मकमध्ययनं कृतम्। अत्राध्ययने तयोरुभयोः श्रौतसूत्रयोः क्रमयोः सूत्रशैल्योः, भाषायाः विधानानामन्येषां कथनानां च पदे पदे तुलना कृता। केचन विषयाः कात्यायन-

श्रौतसूत्रे नोपलभ्यन्ते ते आपस्तम्बेन विस्तरेण कथिता:, यथा प्रवरा:, हौत्रकल्प:, सावित्राद्या: चयनयज्ञा:, सवाश्चेति, एते कात्यायनेन नोक्ता:, एवं केचन विषया आपस्तम्बश्रौतसूत्रे नोपलभ्यन्ते, यथा मित्रविन्देष्टि:, पितृमेधश्च । एवं यत्र तत्रोभयोश्श्रौतसूत्रयोरन्तरमस्ति, उभयो: श्रौतसूत्रयोर्विषयवर्णनस्य क्रमे, सूत्ररचनायां, भाषायामपि महदन्तरं परिलक्ष्यते, एवं सत्यपि उभयो: श्रौतसूत्रयोस्साम्याधिक्यं हि प्राधान्येन वर्तते । अस्य सर्वस्य विषयस्य तुलनां कुर्वता मयेदमध्ययनं कृतम् ।

ग्रन्थेऽस्मिन् सर्वत्र मया भारतीयदृष्टिर्गृहीता सत्यसरणिश्च समादृता, तथ्यानां प्रकटीकरणं व्याख्यानं च सर्वत्रानया दृष्ट्यैव सम्पादिते । पाश्चात्यानामन्येषां वा विदुषामालोचनमत्र सत्यस्याग्रहाय सत्यविद्याया: प्रसारायैव कृतं नान्यया बुद्ध्या तद्द्रष्टव्यम् । यथासम्भवमत्र ग्रन्थे व्यर्थकल्पनानामभावो हि प्रेक्षितव्य:, अत्र सर्वाणि तथ्यानि प्रमाणैरेव पुष्टीक्रियन्ते वितायन्ते च । वेदस्य व्याख्याने ऐतिह्ये च सर्वत्र मया इतिहासपुराणानां चाधुनिकसत्यानुसन्धानैस्सह सहाय्यं गृहीतम् । वेदानामुपबृंहणमिहासपुराणाभ्यामेव सम्यग्रीत्या भवति—

इतिहासपुराणभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥
यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विज: ।
पुराणं चेन्न संविद्यान्न स स्याद् विचक्षण: ॥

कात्यायनापस्तम्बश्रौतसूत्रयोस्तुलनात्मकाध्ययनस्य व्याजेन सर्वेषामार्षग्रन्थानां सहाय्येन चात्र सर्वेषां यज्ञानां क्रतूनामैतिह्योल्लेखपूर्वकं च विस्तरेण प्रतिपादनं वर्णनं च स्त: । ग्रन्थोऽयं यज्ञविद्याया आकर इव कोश इव भविष्यति । श्रीमद्भि: काणेमहोदयैस्तु स्वस्मिन् 'धर्मशास्त्रस्येतिहास' नाम्नि ग्रन्थे श्रौतयज्ञानां सारेणैव वर्णनं कृतम्, किन्त्वत्र सर्वे विषया (यज्ञा:) विस्तरेणाभिहिता: । तथापि विषयास्यागाधतां गाम्भीर्यं च दृष्ट्वा आत्मनश्चाल्पज्ञतां विचार्यहं दोषानां कृते क्षमाप्रार्थी—

मन्द: कवियश:प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामन: ॥ (रघु० १।३)

तथापि सत्यप्रिया विद्वांसो हि सत्यस्यासत्यस्य, मम श्रमस्य च निर्णेतारः ।

## प्रत्यध्यायं वैशिष्ट्यं विषयसूचनं च

१. 'कात्यायनापस्तम्बचरणयोर्मूलम्' इत्यभिधे अध्याये सारेणैव श्रुतेरैतिह्यमूलकं विवेचनं कृतम् । अत्र 'ऋषय एव मन्त्राणां कर्त्तारः' इति मतमेव प्रमाणैर्दृढ़ीकृतम् । अस्मिन्नेव अध्याये पुराणानुसारेण वेदव्यासानां परम्परा निर्दिष्टा, अत्र प्रसङ्गे तैत्तिरीयवाजसनेयचरणयोर्मूलं पाराशर्यव्यासात्प्राग्देवयुगे वैवस्वतमनोः कालात्पूर्वं निश्चितम्, तैत्तिरीयचरणस्य मूलं-भृगुरथर्वा वा ऋषिरासीदिति च तथ्यं साधितम् । एवं च वाजसनेयचरणस्य मूलं विवस्वानादित्यः (कश्यपादित्योः पुत्रः) कृतयुगे बभूव । तेन विवस्वता कृते युगे आदित्यचरणं प्रवर्तितम्, तस्य परम्परायामेव वाजसनेयो याज्ञवल्क्यो बभूव । सर्व एष विषयोऽत्रैव विशदीकृतः । 'एते उभे चरणे एव कात्यायनापस्तम्बचरणयोर्मूले स्तः' इति च प्रतिपादितम् । तथा चास्मिन्नेवाध्याये 'वाजसनेयचरणस्यापस्तम्बकाले (प्राक्पाणिनिकाले) भूयसी प्रतिष्ठा महिमा चास्ताम्' इति च संसाधितम् । अत्र प्रसङ्गे डा० वासुदेवशरणाग्रवालमहोदयानां भ्रामकं मतमालोचनापूर्वकं खण्डितम् । उभयोश्चरणयोर्मूलं मौलिकया भारतीतदृष्ट्या प्रथमवारे संशोधितम् ।

२. द्वितीयेऽध्याये सर्वप्रथमं कल्पविद्यायाः प्राचीनता सूचिता । पाणिनिकालेऽपि कल्पानां भेदद्वयी प्रसिद्धा आसीदिति विषयोऽत्रैव विशदीकृतः । प्रसङ्गेन अत्रैव पाराशर्यस्य शौनकस्य पाणिनेश्च कालाः प्रमाणैर्निश्चीयन्ते, एतत्सहाय्येनैव सूत्रकाराणामैतिहासिकः क्रमो विनिर्दिष्टः । पैलवैशम्पायनशाम्बयास्कादयोऽपि कल्पसूत्रकारा अभूवन्निति चैतिह्यमत्रैव साकल्येन साफल्येन च प्रकटीकृतम् ।

ततोऽस्मिन्नध्याये कात्यायनापस्तम्बयोरितिवृत्तं विवृत्तम्, तयोरुभययोर्वाङ्मयस्य विशदवर्णनमत्रैव द्रष्टव्यम् । वाजसनेयप्रातिशाख्यस्य प्रणेतुः श्रौतसूत्रस्य च कर्त्तुश्च कात्यैकत्वमत्रैव प्रतिपादितम् । आपस्तम्बकल्पस्य एक एव आपस्तम्बाचार्यः प्रणेतेति च मतं प्रमाणैर्दृढ़ीकृतम् । उभयोश्श्रौतसूत्रयोः जैमिनिमीमांसासूत्रैस्सह सधर्मता चात्रैव निदर्शनमात्रेण प्रकटीकृता । अत्रैव-आपस्तम्बश्रौतसूत्रस्य भार-

द्वाजश्रौतसूत्रेण सह साम्याधिक्यं च संसूचितम् । आपस्तम्बश्रौतसूत्रोल्लिखितस्य वाङ्मयस्यात्रैव सूची निबद्धा । आपस्तम्बसम्प्रदायस्य वाजसनेयसम्प्रदायेन सह प्रतिद्वन्द्विता चात्र प्रकटीकृता । अत्रैवापस्तम्बस्य जन्मस्थानं साल्वजनपदेषु यमुनातटे निश्चितं क्रियते ।

३. तृतीयेऽध्याये उभयोश्श्रौतसूत्रयोर्भाषाभेदसाम्यादीनां च विवेचनं लभ्येत । अत्रैव सारेण श्रौतकालिकीभाषाया भेदाः (दैवीवाक्, मानुषीवाक्, आसुरीवाक्, म्लेच्छवाक् अपभ्रष्टभाषा च) निरूपिताः । ततः कात्यायनापस्तम्बयोः पृथक् पृथग् भाषावैशिष्ट्यमुदाहरणैः संसूचितम् । ततो निदर्शनमात्रेण मन्त्रेषूदाहरणेषु-गाथाश्लोकेषु च पाठस्य भेदः साम्यं च प्रदर्शिते ।

४. चतुर्थेऽध्याये उभयोराचार्ययोर्यज्ञपरिभाषाणां विशदा तुलना-कृता, अत्रैव मन्त्रादीनां लक्षणम् स्वरोच्चारणविधिः, पुराकल्पादीनां लक्षणं चाभिहतम् । अत्रैव ऐतिह्यसमाचरणेन मौलिकदृष्ट्या कात्यायनजैमिनिसूत्रपुरस्सरं दीर्घसत्रसम्बन्धिनी मीमांसा विवृता । एवं चात्रैव ऐतिहासिप्रमाणैरेव रथकारस्य वैदिककाले स्थितिः स्पष्टीकृता । एवं चान्यानि यज्ञसम्बन्धीनि पदानि चातिविस्तरेण व्याख्यातानि । ततो हौत्रकल्पः सारेणैवोपस्थापितः ।

५. पञ्चमेऽध्याये एता अष्टौ यज्ञसंस्था विस्तरेण निरूपिताः— दर्शपूर्णमासौ, अग्न्याधेयम्, पुनराधेयम्, अग्न्युपस्थानम्, अग्निहोत्रम्, चातुर्मास्यानि (वैश्वदेवपर्व, वरुणप्रघासः, साकमेधः, शुनासीरीयं च), निरूढपशुबन्धश्च । अत्रैव दर्शेष्टिप्रकरणे पिण्डपितृयज्ञः, दाक्षायणयज्ञः, आग्रयणयज्ञश्च उभयोः कल्पयोः विधानानां तुलनां कुर्वता मया विस्तरेण प्रतिपादिताः । पिण्डपितृप्रकरणे पितृपूजायाश्चैतिह्यमूलकं विवेचनं कृतम्, दाक्षायणयज्ञस्य परम्परा च शतपथप्रामाण्येन निर्दिष्टा, होलिकोत्सवश्चाग्रयणस्य प्रतिरूपमेवेति साधितम् । यज्ञानां प्रकृतिर्दर्शपूर्णमासौ इति कृत्वा तयोर्विस्तरेणात्र प्रतिपादनम् । सौकर्यार्थं मया सर्वत्र विषयवर्णने कात्यायनीयः क्रमः परिगृहीत इति च ज्ञेयम् ।

अग्न्याधेयप्रकरणे अग्न्याधेयकालादिविधानान्यनुविधीय पञ्चाक्षद्यूतस्यैतिह्यमूलकसमीक्षणं कृतम्, अत्र प्रथमवारे अनेकानि नवीनानि तथ्यानि प्रकटितानि ।

ततो अग्निहोत्रस्य महिमां वर्णयता श्रुतिप्रमाणैः प्रवासेऽपि अग्निहोत्रकर्मणो यादृशी आवश्यकता पुराकाले आसीदिति च संसाधितम्। अत्रैव शतपथजैमिनीयब्राह्मणयोः प्रमाणैर्होमद्रव्याणि चाम्नातानि, तथा चात्रैव पुराणोक्ताश्चतुर्दश ओषध्यः कथिताः। अत्रैव आर्षप्रमाणैर्होमकालमांमीसा प्रेक्षणीया।

चातुर्मास्यानि प्रायेण कृषकाणामार्तवानीज्यानि, ते पर्वसु पर्जन्यवरुणादीन् यजन्ति स्म, इत्येवं विधानैरुपवर्णितम्।

'वेदोक्तं पशुबन्धकर्म कथं ब्राह्मणकल्पेषु पशुवधकर्मण्येव परिवर्तितम्' इत्यैतिह्यं निरूढपशुबन्धप्रकरणस्यारम्भे प्रतिपादितम्। ततोऽत्रैव उभयोश्श्रौतसूत्रानुसारि पशुयज्ञवर्णनं व्याख्यातम्।

६. ततः षष्ठेऽध्याये चातिविस्तरेण सोमयागाः प्रतिपाद्यन्ते। ततोऽत्र सर्वप्रथमं 'सोमः कः पदार्थः,' 'सोमस्य मूलोद्भवस्थानानि', 'सोमसंग्रहे श्येनपक्षिणां सहाय्यम्' इत्येते विषयाः पूर्वं मीमांसिताः। ततो निदानसूत्रादीनां प्रामाण्यैः शाण्डिल्यादीनामार्याणां वचनैश्चाग्निष्टोमस्य प्राथम्यं संसाधितम्। ततः सवनत्रयात्मको ज्योतिष्टोमो विस्तरेण उभयोश्श्रौतसूत्रयोस्तुलनां विदधता मया अभिहितम्। ततो यथासंभवमुभयकल्पानुसारेण द्वादशाहयज्ञः, गवामयनम्, आ० कल्पे उत्सर्गिणामयनम्, वाजपेयम्, सौत्रामणीयागाश्च मीमांसिताः। अत्रानेकानि तथ्यानि प्रथमवारे ह्युद्घाटितानि, यथा मन्त्रेषु 'वेनाख्यो' ग्रहः (शुक्र) आंग्लभाषायाः (लेटिनभाषायाः) वेनस् (Venus) एवास्ति। गवामयने लौकिकनृत्यं लौकिकगीतं मैथुने च प्रयुञ्जाना यजमानास्तं यज्ञं सम्पादयन्ति स्म, 'स यज्ञो लौकिकं ग्राम्यं कृत्यमेवासीत्' इति चात्र प्रकटितम्।

वजपेयप्रकरणे 'वाज' इति सोमस्यान्नस्य वा बलकरस्य संज्ञा इति संसाध्य वाजपेयस्यैतिह्यं विवृत्य तस्य विधानं विहितम्। सौत्रामणीप्रकरणे सुरापानविधानस्यालोचनां कुर्वता मया सूत्रप्रमाणेन शौण्डिकानां सुरानिर्माणविधिस्ततो यज्ञविधानं कथितम्। अयं सौत्रामणीयागो राज्यच्युतस्य राज्ञः कृते विहित आसीदिति च प्रमाणैरनुकथितम्।

७. सप्तमेऽध्याये कात्यायनापस्तम्बसूत्रैस्सह ताण्ड्यब्राह्मणस्य तुलनात्मकं पाठमुपस्थापयन् एकाहानामहीनानां सत्राणां च क्रतूनां कार्त्स्न्येन च परिगणनं कृतम्। अत्र पाठत्रयेण तेषां मूलैक्यं च प्रसिध्यति। अत्रैव चतुर्णां व्रात्यक्रतूनामैतिह्यमूलकं विवरणमुपस्थाप्य व्रात्यपदस्यैतिह्यमृग्वेदाथर्ववेदमहाभाष्यप्रमाणैरनुसाधितम्। ततः श्येनादीनामभिचरणात्मकक्रतूनां मरुत्स्तोमादीनां च गणयज्ञानां परिगणनमवलोकनीयम्। ततो ज्योतिर्गौरायुरित्यादीनां बहूनामहीनानां वर्णनं विदधता मया आपस्तम्बोक्ता एकादश बृहस्पत्यादयः सवाश्चोक्ताः। ततः कल्पानुसारि दीर्घसत्राणां विधानं विहितम्।

८. अग्निचयनाख्ये अष्टमेऽध्याये अस्यातियज्ञस्य महिमामुपवर्ण्य, समानवानां पञ्चपशूनामुपाकरणादिकविधानमनुविधीय, सविशेषमुखासंभरणमुक्त्वा, यज्ञदीक्षां चाभिधायास्य क्रतोर्वेदिमानकर्षणादीनि च निरूप्य पञ्चचितीनां विधानं विहितम्।

अत्रैव मैत्रायणीसंहिताप्रमाणेन खगल्यादीनामुपकरणानां परिगणनं कृतम्। ततस्तैत्तिरीयाणामास्तम्बोक्ताः सावित्राद्याश्चयनयज्ञाः कथिताः। सावित्रचयनं तु सौरमण्डलस्य प्रक्रियामनुकरोति इति तथ्यं चात्रैव प्रकटीकृतम्। ततः काम्येष्टीनां संकलनं द्रष्टव्यम्।

९. नवमेऽध्याये चैतानि प्रकरणानि कथितानि (१) राजसूययज्ञः (२) अश्वमेधः (३) पुरुषमेधः (४) सर्वमेधः (५) पितृमेधः (६) प्रायश्चित्तानि (७) प्रवर्ग्यश्च। तत्र राजसूयप्रकरणे राजसूययज्ञस्यैतिह्यमनुसंधाय, अश्वमेधस्य मूलमयमेव राजसूय एवेति साधितम्। ततो राजसूयस्य विधानं सारेण विहितम्।

अश्वमेधप्रकरणे उभयसूत्रसहाय्येनास्य यज्ञस्य महिमामनुगीय तस्य मूलं चाभिहितम्। डा० सत्यप्रकाशस्य महति मते अश्वमेधो ब्रह्माण्डस्य सृष्टिप्रक्रियामनुवदति इत्येवं च ऋग्वेदमन्त्रप्रमाणैरेव संसादितम्। ततः कात्यायनापस्तम्बश्रौतसूत्रे चानुसृत्य विस्तरेण यज्ञस्य विधानं विदधता यत्र तत्र मया अनेकानि नवीनानि सत्यानि च तथ्यानि उद्घाटितानि, यथा पुराकाले वैश्याः शूद्राश्चापि युद्धे सैनिकाः भवन्ति स्म, अश्वस्य महिषीकर्तृकं शिश्नस्पर्शनकृत्यमपि विचित्रविधानं द्रष्टव्यम्। ततः पुरुषमेधसर्वमेधावपि चात्रभिहितौ।

ततोऽत्रैव पितृमेधप्रकरणे पितृयमाग्निस्वधापितृराज्यसृतियमदूतादीनां पदानां व्याख्यानमविधाय आर्याणामसुराणां चौर्ध्वदैहिकसंस्कारविधि-भेदानुल्लिख्य 'शम्ब' 'कम्ब' इति च पदद्वयी स्पष्टीकृता। तानि शम्बादीनि असुराणां श्मशानान्यासन्, एवं च देवकुलस्य सङ्केतोऽपि अत्र द्रष्टव्यः। ततः कात्यायनविधानेन पितृमेध उक्तः। आपस्तम्ब-श्रौतसूत्रे तु पितृमेधप्रकरणं नास्ति। तच्चात्र सूचितम्।

यद्यप्युभयोश्श्रौतसूत्रयोरुभाभ्यामाचार्याभ्यां प्रायश्चित्तानि विस्तरेण प्रोक्तानि, मया तु ग्रन्थविस्तरभिया तेषां प्रायश्चित्तानां सूचनीमात्रमेवोल्लिखितम्, तयोस्तुलनयैव तयोः साम्यं च स्पष्टी-भवतः। इतोऽग्रे सारेण कल्पानुसारि प्रवर्ग्यविधानं चानुक्रान्तम्।

१०. सांस्कृतिकाध्ययनाख्ये दशमे महत्यध्याये उभयोश्श्रौतसूत्रयो-स्सांस्कृतिकसामग्री सारेणैव सङ्कलिता। तत्र सर्वप्रथमं सरस्वतीदृष-द्वतीकुरुक्षेत्रकुरुपाञ्चालयमुनाकारपचवसाल्वगान्धारिकलिङ्गमगधपा-रस्करसौवीरनैमिषवनाख्यानि भौगोलिकपदानि स्पष्टीकृतानि। मन्त्रेषु सूत्रेषु धर्मशास्त्रेषु च सरस्वतीदृषद्वत्योर्यन्माहात्म्यं प्रगीतं तच्चात्र सारेण विवृतम्। अत्रैव साल्वानां षडवयवाश्च सङ्केतिताः। 'गन्धारि' इत्येवं गान्धारस्य प्राचीनमभिधानमासीदिति च संसाधितम्। पुराण-प्रामाण्यैराधुनिकप्रामाण्यैश्च नैमिषवनस्य महिमा स्थितिश्च निश्चिते। अस्य शोधप्रबन्धस्य चास्मिन्नेवाध्याये उभयोश्श्रौतसूत्रयोस्सामग्रीमनु-सृत्य चातुर्वर्ण्यम्, चातुराश्रम्यम्, राजवरणम्, सभा, समितिः, विदथः, परिषद्, द्वादशरत्निनः (राजकर्त्तारः), दूतः, चरः, मिश्रितवर्णाः, वीणागाथी, नापितः, आयोगवः, व्रात्याः, आनुजावरः, भ्रातृव्यः, गोघातः, इत्यादीनां विषयाणां सूत्रपुरस्सरमैतिह्यमूलकं विवेचनं कृतम्। मन्त्रकालिकी सामाजिकी (वर्णव्यवस्था, राजवरणम्) स्थितिः कथं सूत्रकाले परिवर्तिता अस्य चित्रमत्रोपस्थापितम्। मन्त्रेषु निषि-द्धानि गोघातमांसभक्षणसुरापानद्यूतविधानानि सूत्रेषु धार्मिककृत्यानि अभूवन् इति चात्रैवोपवर्णितानि। ततः सूत्रेषूल्लिखितानां वस्त्राल-ङ्कारवाहनपशुवनस्पतिवाणिज्यवाङ्मयादीनां सारग्राहिविवरणमत्रोप-स्थापितम्।

ततः परिशिष्टेषु केचन विषयाः सङ्कलिताः। ते चाश्वश्यका यज्ञ-विज्ञाने भवेयुरिति कृत्वाऽत्र तेषां सङ्कलनं कृतम्।

तत्र प्रथमे परिशिष्टे यज्ञेषु कालविज्ञानस्य महत्त्वम्, काष्ठानिमेषादीनां च मानानि कथयित्वा सदैवतानि नक्षत्राणि, तिथयः मासाः ऋतवः अयनम् पञ्चसंवत्सराश्चोक्ताः।

द्वितीये परिशिष्टे—अग्निविष्णुवरुणेन्द्रादीनां यज्ञियदेवानां परिगणनं कृतम्।

तृतीये परिशिष्टे—यज्ञप्रयुक्तानां मानानां सूचनी द्रष्टव्या।

चतुर्थे परिशिष्टे—अष्टाविंशतीनां वेदव्यासानां नामान्यभिहितानि।

पञ्चमे परिशिष्टे—प्रवराणामैतिह्यमूलकं विवेचनं कृतम्।

३१-३-१९९१.

विदुषां वशंवदः
**कुँवरलाल जैन**



# लघुसङ्केताः

| नाम | | सङ्केताः |
|---|---|---|
| अष्टाध्यायी | — | अष्टा० |
| अथर्ववेदः | — | अथर्व० |
| आपस्तम्बश्रौतसूत्रम् | — | आ० श्रौ० |
| आपस्तम्बगृह्यसूत्रम् | — | आ० गृ० |
| आपस्तम्बधर्मसूत्रम् | — | आ० ध० सू० |
| आपस्तम्बगृह्यमन्त्रपाठः | — | आ० गृ० म० पा० |
| आश्वलायनगृह्यसूत्रम् | — | आश्व० गृ० |
| आश्वलायनश्रौतसूत्रम् | — | आश्व० श्रौ० |
| उभयोः कल्पयः | — | उ० क० (कात्यायनापस्तम्ब-श्रौतसूत्रयोः) |
| उत्तररामचरितम् | — | उ० रा० |
| ऐतरेयब्राह्मणम् | — | ऐ० ब्रा० |
| ऋग्वेदः | — | ऋ० |
| कात्यायनश्रौतसूत्रम् | — | का० श्रौ० |
| कात्यायनशुल्वसूत्रम् | — | का० शु० |
| कौषीतकिगृह्यसूत्रम् | — | कौषि० गृ० |
| गोभिलगृह्यसूत्रम् | — | गो० गृ० |
| छान्दोग्योपनिषद् | — | छा० उ० |
| जैमिनीयब्राह्मणम् | — | जै० ब्रा० |
| जैमिनीयामीमांसासूत्राणि | — | जै० मी० सू० |
| तैत्तिरीयारण्यकम् | — | तै० आ० |
| तैत्तिरीयब्राह्मणम् | — | तै० ब्रा० |
| तैत्तिरीयसंहिता | — | तै० सं० |
| ताण्ड्यब्राह्मणम् | — | ता० ब्रा० |
| धर्मशास्त्र का इतिहास | — | ध० शा० इ० |
| निरुक्तम् | — | नि० |

| नाम | | सङ्केताः |
|---|---|---|
| पुराणम् | — | पु० |
| बृहदारण्यकोपनिषद् | — | बृ० उ० |
| वौधायनश्रौतसूत्रम् | — | बौ० श्रौ० |
| बृहद्देवता | — | बृ० |
| भारतवर्ष का बृहद् इतिहास | — | भा० बृ० इ० |
| मनुस्मृतिः | — | म० स्मृ० |
| महाभारतम् | — | म० अथवा महा० |
| मैत्रायणीसंहिता | — | मै० सं० |
| वाजसनेयिसंहिता | — | वाज० सं० |
| वाजसनेयिप्रातिशाख्यम् | — | वाज० प्राति० |
| वायुपुराणम् | — | वा० पु० |
| शतपथब्राह्मणम् | — | श० ब्रा० |
| शुक्लयजुर्वेदः | — | शु० य० |
| शान्तिपर्वणि | — | शा०, शान्ति० |
| शांखायनश्रौतसूत्रम् | — | शां० श्रौ० |
| सिद्धान्तकौमुदी | — | सि० का० |
| संस्कृत व्याकरणशास्त्र का इतिहास | — | सं० व्या० शा० इ० |
| Apstamba Srauta Sutra | – | App. S. S. |
| Indian Literature | — | Ind. Lit. |
| Introduction to Satpatha Brahman | — | Int. to S. B. |
| Development of Ancestoral Worship Ritual in India | – | D. R. |
| Katyayan Sraut Sutra | — | K. S. S. |



# विषयानुक्रमणिका

# प्रथमोऽध्यायः

## कात्यायनापस्तम्बचरणयोर्मूलम्

**वेदश्रुतिः**—सर्वेषां श्रौतसूत्राणां मूलं वेदश्रुतिरेवास्ति, तदनुसारेण आपस्तम्बीय-श्रौतसूत्रस्य मूलं कृष्णयजुर्वेदीया तैत्तिरीयशाखा, तथैव कात्यायनश्रौतसूत्रस्य मूलं शुक्लयजुर्वेदीया वाजसनेयिसंहिता चास्ति । अनयोः श्रौतसूत्रयोस्तुलनात्मकादध्ययनात्पूर्वं तयोर्मूलं श्रुतिःसारेण परिचीयतेऽत्र ।

श्रुतिशब्दस्य बह्वः पर्यायास्सन्ति, यथा—वेदः, ब्रह्मः, छन्दः, मन्त्रः, निगमः, आम्नायश्च । एषु सर्वेषु पदेषु 'वेद' इति सर्वाधिक्येन लोके प्रसिद्धतमं पदं वर्तते, स वै 'वेदः' श्रुतिरित्यपि शास्त्रेषूच्यते । वेदः श्रवणाच्च श्रुतिर्भवति, गुरुपरम्परया यज्ज्ञानं विद्या वा गृह्यते, सा श्रुतिपदवाच्या चाभवत् । परन्तु श्रुतिशब्दाल्लेखनस्य निषेधोऽपि नास्ति । तत्प्रामाण्ये 'लिख' रिख' वा धातुर्ऋग्वेदस्य पूषादिसूक्त-मन्त्रेषूपलभ्यन्ते, श्रुतर्षयो लिखितां वाणीमपि पश्यन्ति स्म, तथ्यमिद-मनया ऋचा दृढीभवति—

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।[1]

अमूर्ता वाक् लेखनेनैव दृष्टा भवति, अस्य मन्त्रस्यायमेव भावार्थः प्रतीयते ।

चरणानां शाखानां वा मूलमाम्नायो भवति–उक्तं च व्यासेन—

'आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः ।'[2]

'आम्नायमार्षं पश्यामि यस्मिन् वेदाः प्रतिष्ठिताः ।'[3] तथा च कात्यायन आह ऋक्सर्वानुक्रमण्याम्–'अथ श्रीऋग्वेदाम्नाये शाकलके ।'

एवं देवानां स्तुतयो ब्रह्माणीत्युच्यन्ते, ऋग्वेदे चास्मिन्नर्थे 'ब्रह्म'–पदं बहुधा दरीदृश्यते ।

---

1. ऋ० (१० ।७१।४)
2. मा० शा० (२६६ अ०)
3. म० शा० (२७४ अ०)

प्रजापतिना ब्रह्मणा (कश्यपेन) कृता श्रुतिर्ब्रह्मपदवाच्या भवितुमर्हति। उक्तं च श्रुतौ—'अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्।' (तै० आ० २। ६), स्वयं वेद ऋषीनुपतस्थे तेन स वेदो ब्रह्म उच्यते, स्वयम्भवनात् स स्वयम्भूरपि। एवं मन्त्रो मननात्, निगमनात् निगमोऽपि भवति, छादनात् छन्दः, इत्यादयो निरुक्तशास्त्रे व्याख्यायन्ते। पतञ्जलिमते—'न हि च्छन्दांसि क्रियन्ते। नित्यानि च्छन्दांसीति। यद्यप्यर्थो नित्यो या त्वसौ वर्णानुपूर्वी सानित्या। तद्भेदाच्चैतद्भवति काठकं कालापकं मौदकं पैप्पलादकमिति' (महाभाष्ये ४। २। १०४)। पुराणमते चैवं भवति—

'प्राजापत्या श्रुतिर्नित्या, तद्विकल्पास्त्विमे स्मृताः।'

(वायुपुराणे (६१।७५)

'वेद' शब्दो विद् धातोः करणाधिकरणयोः 'घञ्' प्रत्ययेन निष्पन्नो भवति। पाणिनिधातुपाठे 'विद्' धातुश्चतुर्षु अर्थेषु समुपलभ्यते, 'विद्' ज्ञाने, सत्तायां च, 'विदलृ' लाभे, 'विद्' विचारेण च। एतेभ्यो हलश्चेति सूत्रेण करणाधिकरणयोर्घञ्—प्रत्यये कृते वेदशब्दः साध्यते। तथा च स्वामिदयानन्दमहोदयाः—'विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति विचारयन्ति सर्वे मनुष्याः सर्वाः सत्यविद्या यैर्येषु वा तथा विद्वांसश्च भवन्ति ते वेदाः।' (ऋग्वेदभाष्यभूमिकायां, पृ० २५)। आचार्याणां मते जना वेदेनैव परमात्मनः संसारस्य च स्वरूपं जानन्ति। तथा चाहुरानन्दतीर्थाः—'नेन्द्रियाणि नानुमानं वेदा ह्येवैनं वेदयन्ति, तस्मादाहुर्वेदा इति पिप्पलादश्रुतिः।' (विष्णुतत्त्वे)।

तैत्तिरीयश्रुतौ च—

वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वम्।

(तै० सं० १।४।२०)

**वेदानां संख्या**—पुराकालात् प्रश्नोऽयं चोत्थाप्यते, कति वा वेदा आसन्–एकः, द्वौ, त्रयः, चत्वारः पञ्च वा।

एकवेदस्यास्तित्वे प्रामाण्यम्—

वेदश्चैकश्चतुर्धा तु व्यस्यते द्वापरादिषु।

(मत्स्यपुराणे १४४।११)

'एको वेदश्चतुर्धा तु यैः कृतो द्वापरादिषु।'

(विष्णुपुराणे ३।३।१९–२०)

महाभारतस्य सनत्सुजातीयपर्वणि परमर्षिः सनत्सुजातो धृतराष्ट्रं प्रति ब्रूते—(मतभेदादेव वेदस्यैकस्यैव पञ्च वेदा अभवन्)—

आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कत्थ्यते जनैः ।
तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे ॥
द्विवेदाश्चैकवेदाश्चानृचश्च तथापरे ॥ (२।३६–२६)
एकवेदस्य चाज्ञानाद् वेदास्ते बहवोऽभवन् ॥[1] (तदेव २।३७)

तत्र वेदत्रयी लोकेषु शास्त्रेषु च प्रसिद्धा--
'त्रयी वै विद्या ऋचो यजूंषि सामानि ।'
(शत० ब्रा० ४।६।७।१)

'ऋचो यजूंषि सामानि ब्रह्मणो अङ्गानि च श्रुतिः ।
(ब्रह्माण्डपुराणे १।३२।३६)

एवञ्च ऋग्वेदो यजुर्वेदश्च द्वावपि वेदौ भवतः ।
(सनत्सुजातीये पूर्वोक्तश्लोकः)

स्वामिदयानन्दस्य मते तु चत्वारोऽपि वेदाः सनातनाः सन्ति, सत्यार्थप्रकाशस्य एकादशे समुल्लासे स लिखति—'यः कश्चित् कथयति यद् वेदा व्यासेन संग्रहीतास्तद् वितथमस्ति यतो हि व्यासस्य पितृ-पितामहप्रपितामहादिभिश्चत्वारो वेदा अधीता आसन् ।[2]

परन्तु वेदमूर्तेः विद्यावाचस्पतेः मधुसूदनओझामहोदयस्य द्वौ परमशिष्यौ पण्डितप्रवरौ गिरधरशर्मचतुर्वेदमहोदयस्तथा च पण्डित-श्रेष्ठ आद्यादत्तठाकुरश्च स्वगुरोर्मतं कथयन्तौ श्रुतिप्रमाणपूर्वकमुल्लि-खतः ।[3] आदिब्रह्मा चतुर्खण्डात्मकमेकं वेदं निर्ममे । कालान्तरे अयं च वेदो लुप्तोऽभवत् । तदनन्तरमजपृष्णिबालखिल्यसप्तर्षिकृष्णद्वैपा-

---

1. 'वेदं तावदेकं सन्तम्' (निरुक्तस्य दुर्गटीकायाम् १ । २०)
2. 'जो कोई यह कहते हैं कि वेदों को व्यास जी ने इकट्ठा किया, यह बात झूठी है, क्योंकि व्यास के पिता, पितामह, प्रपितामह, पराशर, शक्ति, वसिष्ठ और ब्रह्मा आदि ने चारों वेद पढ़े थे । पृ० ४०४.
3. पं० गिरधरशर्मकृत वैदिकविज्ञान और भारतीय संस्कृति (प्रथमे अध्याये) पृ० ५०–५१ । पं० आद्यादत्त ठाकुर—वेदों में भारतीय–संस्कृति, पृ० २७–२८ ।

यनादिभिश्च स्वस्य-स्वस्य मन्त्राश्च दृष्टाः, वेदाश्च निर्मिताः।' उक्तं च शतपथे—

ये समुद्रान्निरखनन् देवास्तीक्ष्णाभिरभ्रिभिः।
सुदेवो अद्य तद् विद्याद् यत्र निर्वपणं दधुः॥
(शतपथे ७।५।२)

**वेदश्रुतिप्रणाशः**—तथ्यमिदमितिहासपुराणेषु बहुश उल्लिख्यते यद् बहुवारं वेदाः कारणान्तरैर्लुप्ताश्चाभवन्। तत्रेतिहासपुराणवचनानि श्रवणयोग्यानि सन्ति–विष्णुराह—

यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता पुनः।
सवेदाः सश्रुतिकाश्च कृताः पूर्वं कृते युगे॥
(शान्तिपर्वणि अ० ३४८।५६)

युगान्तरे चापान्तरतमाः प्रसिद्धो वेदर्षिर्वेदान् समुद्धृतवान्—
तेन भिन्नास्तदा वेदाः स्वायम्भुवेऽन्तरे।
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन।
(शान्ति० ३५९।४१।६६)

अयमेवापन्तरतमाः सारस्वत इत्युच्यते—
'सारस्वतश्चापि जगाद नष्टं वेदं पुनर्यं ददृशुर्न पूर्वे।[1]

एष एव भावार्थः शतपथे 'ये समुद्रान्निरखनन् देवा' इत्यादिभिरुक्तः। अर्थात् युगेयुगे लुप्तान् वेदान् ऋषयो मुहुर्मुहुः कृतवन्त इत्याशयः। तथैव चैकस्मिन् युगे दत्तात्रेयेण नष्टा वेदा प्रत्यानीताः—

'दत्तात्रेय इति ख्यातः क्षमया परया युतः।
तेन नष्टेषु वेदेषु प्रक्रियासु मखेषु च।
सहयज्ञक्रिया वेदाः प्रत्यानीता हि तेन वै॥
(हरिवंशपुराणे १।४१)

**वेदमन्त्राणां कर्तारः**—वेदमन्त्राणामुत्पत्तिसम्बन्धे न्यूनाधिक्येन चत्वारिंशत् मतानि विद्यन्ते, तेषु त्रीण्येव प्रधानानि—प्रथमे मते, वेदाः स्वतश्चाविर्भूताः, अतश्चापौरुषेयाः। द्वितीये मते, वेदाः पर-

---

1. बुद्धचरिते (१।४७); एष एवापान्तरतमास्ताण्ड्यब्राह्मणे, जैमिनीयब्राह्मणे, मनुस्मृतौ च शिशुर्वाऽऽङ्गिरसः कविरीतिनाम्ना स्मर्यते।

मेश्वरेण कृताः, इदमेव दयानन्दस्य प्रसिद्धं मतम् । तृतीये मते, तपः-प्रभावेण ऋषिभिर्मन्त्रा दृष्टाः, चतुर्थं नास्तिकमतमस्ति ये कथयन्ति स्वार्थहेतवे भंडधूर्तनिशाचरैर्वेदा विनिर्मिता यज्ञाश्च कल्पिताः । ईदृशमेव पाश्चात्यानां विदुषां मैक्समूलरादीनां मतम्, येषां विचारेण यायावराणां गोपालकानामार्याणां बर्बराणामेतानि ग्राम्यगीतानि सन्ति । अस्य मतस्य निस्सारता स्पष्टा, अत एव त्याज्यमुपेक्षणीय-मेवास्ति ।

प्रथममपौरुषेयसम्बन्धि मीमांसकानां मतम्, तेषां मते—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।'[1]

अस्य मते मन्त्रब्राह्मणेषु कस्यचित् ऐतिहासिकपुरुषस्य वर्णनं नास्ति । 'न कदाचित् अनीदृशं जगत्' इति मन्यमाना जगतः प्रवाहं नित्यं वदन्ति, तेन वेदा अपि नित्या इति तेषां चोदना ।

द्वितीयं मतं न्यायवैशेषिककाराणामस्ति, वेदेऽपि मतमिदमुपलभ्यते-

'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥'[2]

वेदोत्पत्तिसम्बन्धि तृतीयं मतं वात्स्यायनमुनिना न्यायभाष्ये समुल्लिखितम्—'द्रष्टृप्रवक्तृसामान्याच्चानुमानम् । य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम् ।'[3] पुनश्चाचार्यो ब्रवीति—'प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते 'ते वा खल्वेते अथर्वाऽङ्गिरस एतदितिहासपुराणमभ्यवदन्—इतिहासपुराणं पञ्चमं वेदानां वेदः । द्रष्टृप्रवक्तृसामान्याच्चानुपपत्तिः । य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति ।'[4]

ऐतिहासिकदृष्ट्याऽपि वात्यायनस्य मतं पुष्यति, ऋषय एव खलु मन्त्राणां द्रष्टारः (कर्तारः) आसन्, ये पराशरव्यासवैशम्पायनयाज्ञ-

---

1. ऋग्वेदभाष्यभूमिकायां (सायणः)
2. ऋग्वेदे (१०।६०।६)
3. न्यायभाष्ये (२।१।६६)
4. न्यायभाष्ये, पृ० २८३

वल्क्यादयो मन्त्रब्राह्मणादीनि दृष्टवन्तः, त एव इतिहासपुराणायुर्वेद-धर्मशास्त्राणि च कृतवन्तः। नात्र कस्यचिद् विप्रतिपत्तेरवसरो मनागपि। ऐतिहासिकप्रमाणैरपि सिद्धमिदं मतम्। वैदिकग्रन्थेषु मतमिदमुररीकृतम्—

'अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।'[1]

'यामृषयो मन्त्रकृतो मनीषिणो अन्वैच्छन् देवास्तपसा श्रमेण। तां दैवीं वाचं हविषा यजामहे।'[2]

तथा चाह यास्कः—

'साक्षात्कृतधर्माण ऋषयो बभूवुः। ते अवरेभ्योऽसाक्षात्कृत-धर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्म-ग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च।'[3] इति।

**मन्त्रनिर्माणकालः, व्यासपरम्परा च**—पाश्चात्यविदुषां मत-प्रवादैर्वितण्डावादैश्च भारतीयेतिहासस्य कलुषीकृतं पन्थानं घोरेण तमसाऽऽच्छादितं च श्रुतिमार्गं सत्यानुसन्धानपद्धत्या विमलीकुर्वन्नहं तं सम्यक् प्रकाशयितुमिच्छामि येनामलादर्शवत् सर्वे विपश्चितः पूर्णं सत्यं सम्यक् पश्येरन्।

यदा अष्टादशशताब्द्यामेकोनविंशतिशताब्द्यां च पाश्चात्यानां परिचयो वेदवाङ्मयेन सहाभवत्, तदा तेषामीदृशी विचारसरणिरासीद् यत् प्रत्येकं वैदिकपुस्तकं प्राचीनकालेन सह सम्बन्ध्यते इति। विण्टर-नीत्समहोदयेन मतमिदं स्वस्य 'प्राचीनभारतीयसाहित्य'नाम्नि ग्रंथे प्रकटीकृतम्।[4] पण्डितभगवद्दत्तमहोदयाः स्वमिन् 'भारतवर्ष का बृहद्

---

1. ऋग्वेदे (१।१।२)

2. तै० ब्रा० (२।७।७)

3. निरुक्तशास्त्रे (१।१)

4 "When Indian literature become first known in the west were inclined to ascribe a hoary age to every literary work hailing from India. They used to look upon India as something like cradle of mankind or human civilization. lceture in Culcutta university. 1923/p. 3. (प्रारम्भ में जब भारतीय वाङ्मय से पाश्चात्य विद्वानों का कुछ-कुछ परिचय हुआ था, तो उनकी प्रथम प्रतिक्रिया

इतिहास' नाम्नि ग्रन्थे लिखन्ति—'प्रभावोऽयं स्वाभाविको निष्कल्मषश्चासीत्। अस्मिन् मते कृत्रिमताऽपि नासीत्, भारतीयमनीषिभिर्यानि सत्यवृत्तान्तानि उद्घोषितानि तानि सत्यानवच्छिन्नपरम्परागतानि आसन्……तानि सत्यं मत्वा ते (श्लीगलादयः) पाश्चात्यविद्वांस ईदृशं कथयन्ति स्म। ते मनीषिण उदाराश्चासंकीर्णमतय आसन्।'[1]

परन्तु सत्यमिदं मतमन्ये षड्यन्त्रकारिणो मैकालेमहोदयस्यानुयायिनो मैक्समूलर—राथकीथप्रभृतयो न सेहिरे, ते सत्यभारतीयपरम्पराया उपरि गूढं प्रहरन्ति स्म। विषयोऽयमप्रासङ्गिकस्तेनात्र विरम्यते। तथापि इदानीं मैक्समूलरस्य ऋग्वेदस्य निर्माणकालस्य तिथिं (१२०० ई० पू०) प्रायः कोऽपि न मन्यते। विण्टरनीत्समहोदयो मन्त्रकालस्य प्रारम्भमीशात् द्विसहस्रवर्षाणां पूर्वं मन्यते स्म।[2] एवं पाश्चात्यानां भारतीयानां च कल्पिता बहवो मतवादा वेदस्य निर्माणकाले प्रचलितास्सन्ति, अलं बहुविस्तरेण विवादेन च।

---

'प्राचीन आर्ष वाङ्मय' को बाबा आदम के युग से यथावत् सुरक्षित, परम्परित ग्रहण की थी। श्लीगल ने क्या, सचमुच, यह आशा प्रकट नहीं की थी कि इस वाङ्मय के प्रकाश में आने से प्राचीन विश्व के अन्धकारमय इतिहास में कुछ स्पष्टता आने लगेगी। बेवर ने भी अपने इतिहास के प्रथम संस्करण (१८५२) में प्रकट किया था कि भारतीय वाङ्मय ही विश्व वाङ्मय का प्राचीनतम रूप है।' (प्राचीन भारतीय साहित्य, प्रथम भाग, पृ० २२५)।

1. भारतवर्ष का बृहद् इतिहास, प्रथम भाग, पृ० ३७

2. 'और अन्त में, जब सभी युक्तियां सभी साक्षियां व्यर्थ हो जाती हैं, तब—वेद की तिथि के सम्बन्ध में एक ही प्रमाण बचा रहता है—और वह (प्रमाण) है—भारतीय वाङ्मय की ऐतिहासिक परम्परा का स्वतोभ्युदयः भारत के ऐतिहासिक पुराण पुरुष पार्श्व, महावीर, बुद्ध—सम्पूर्ण वैदिक वाङ्मय की सत्ता को अपने से पूर्व 'विनिश्चित' स्वीकार करते हैं, अर्थात् वैदिक वाङ्मय के किसी भी अंग को हम ५०० ई० पूर्व से इधर (किसी भी हालत में) नहीं ला सकते और सुविधा के लिए यदि १२०० या १५०० ई० पूर्व को हम वैदिक वाङ्मय का प्रारम्भ बिन्दु मान लें तो शेष साहित्य की विपुलता को हम ७०० वर्षों की छोटी—सी अवधि में फलता—फूलता नहीं देख सकते। सो इस महान्

अथ ध्यातव्यं यद्वाङ्मयं मूलाधारं कृत्वा न हि कस्यचिद्देशस्य ऐतिहासिकयुगविभागः प्रवर्तते, प्रमाणैरनुपपन्नश्च भवति। भारतीयेतिहासे वैदिककालः, सूत्रकालः, महाकाव्यकालः, पौराणिककालः, इत्यादयः सर्वथा काल्पनिका युगविभागाः सन्ति। भारतीयेतिहासस्य परःशतैः प्रमाणैश्चेदं मतमपास्तं भवति। दार्शनिकप्रवरेण वात्स्यायनमुनिना चापास्तं मतमिदं 'यन्मत्राणां सूत्राणां पुराणानां धर्मशास्त्राणां, आयुर्वेदप्रभृतीनां कर्त्तारः पृथक् पृथगभूवन्,[1] अपितु यैर्ऋषिभिर्मन्त्रा दृष्टास्तैरेव सूत्राणि ग्रथितानि, इतिहासपुराणानि च प्रणीतानि।' तच्च मतं पुनरुध्रियते—'द्रष्टृप्रवक्तृसामान्याच्चानुपपत्तिः। य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति।' 'विषयव्यवस्थापनाच्च यथाविषयं प्रामाण्यम्।' 'यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, 'लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः।'[1] अतः पुराणान्येव भारतीयेतिहासस्य मूलाधाराणि सन्ति। तत्र अष्टाविंशतिव्यासानामष्टाविंशतियुगैस्सह दृढतरसम्बन्धो दरीदृश्यते। प्रतियुगम् एको हि व्यास आविर्बभूव। युगानां व्यासानां च सम्बन्ध ऐतिहासिकतिथिनिर्णयकारकश्चास्ति। वैदिकवाङ्मयप्रसङ्गे तस्य महत्त्वमतिरोहितं . तेन तेषां परम्परा क्रमेणोल्लिख्यते।

**व्यासाः**—ब्रह्मा, मातरिश्वा, उशना, बृहस्पतिः, विवस्वान्, वैवस्वतो यमः, इन्द्रः, वसिष्ठः, सारस्वतः (अपान्तरतमाः), त्रिधामा, शरद्वान्, त्रिविष्टः, अन्तरिक्षः, वर्षिः, त्रय्यारुणः, धनंजयः, कृतञ्जयः, तृणंजयः, भरद्वाजः, गौतमः, निर्यन्तरः, वाजश्रवाः, सोमशुष्मः, तृणविन्दुः, ऋक्षः

---

साहित्यिक युग का श्रीगणेश २५००–२००० ई० पूर्व में हुआ और अन्त ७५०। ५०० ई० पूर्व में ऐसा मानने से हम दोनों प्रकार की अतियों से बच सकते हैं।'

—प्राचीन भारतीय साहित्य, प्रथम भाग, पृ० २३७;
(विण्टरनीत्सकृत ग्रन्थ का लाजपतराय द्वारा अनुवाद)

1. विशेषेण द्रष्टव्यं—पं० भगवद्दत्तकृतः – भारतवर्ष का बृहद् इतिहासः, प्रथम भागः, अध्यायः—(चतुर्थः)—भारतीय इतिहास के स्रोत पृ० ७५–७८,

(वाल्मीकिः), शक्तिः, पराशरः, कृष्णद्वैपायनश्च ।'[1] एभिर्व्यासैः युगे-युगे वेदसंहिताः सम्पादिताः, इतिहासपुराणादीनि च विरचितानि, एषां सर्वेषां व्यासानां लौकिकवैदिकवाङ्मयैस्सह सम्बन्ध आसीत्, नात्र काचिद् विचारणा ।

पुरातनयुगगणनापद्धत्या युगानामष्टाविंशतिर्विभागाः परिवर्ता वाऽऽसन्, अष्टाविंशतियुगानामयं कालो अन्यया गणनापद्धत्या चतुर्षु युगेषु च विभज्यते, तदुक्तं च महाभारते—

'चत्वार्याहुः सहस्राणि वर्षाणां कृतं युगम् ।
तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप ।।
द्विसहस्रं द्वापरे ।। महाभारते (भीष्म० ११।६)

'एतद्द्वादशसाहस्रं देवानां युगमुच्यते ।' (मनुस्मृतौ १।७१)

एतानि द्वादशसहस्राणि वर्षाणि मानुषाणां सन्ति, न हि देवानामिति । वायुपुराणे च स्पष्टतया चोक्तम्—

'अत्र संवत्सराः सृष्टा मानुषेण प्रमाणतः ।[2] (वायुपुराणे ५७।२६)

एते मानुषाः संवत्सरा इति, मतमिदं शतपथब्राह्मणस्याग्निरहस्य-प्रकरणे इष्टक्या-संख्याव्याजेन बहुत्र चोल्लिखितम् यथा—'षष्टिश्च त्रीणि च शतानि यजुष्मतीः दश च सहस्राण्यष्टौ च शतानि (१०८००) उपधत्ते ।' (श० ब्रा० १० । ४ । ३ । ८) अनेनैव प्रमाणेन च 'युगं षष्टिश्च त्रीणि शतानि मानुषवर्षाणां, द्वादशसहस्रात्मकं देवयुगं चापि मानुषवर्षाणामासीदिति सिद्धम् ।

एते उभे गणनापद्धती दक्षप्रजापतेर्राज्यकालात् प्रारभ्येते । दक्ष-युधिष्ठिरयोर्मध्ये द्वादशसहस्रवर्षाणामन्तरमासीत्, एवम् आनहुषात् युधिष्ठिरपर्यन्तं च दशसहस्रवर्षाण्यभूवन्—

---

1. वायुपुराणे (२३ । ११४–२२६)

2. श्रीशंकरबालकृष्णदीक्षितमहोदयेन च 'भारतीय ज्योतिष' इत्याख्ये ग्रन्थे पाश्चात्यविदुषां मतानि चोदाहृतानि—'प्रो० ह्विटने कहते हैं कि इन १२००० वर्षों को देववर्ष मानने की कल्पना मनु की नहीं है । (पा० टि० बर्जेस के सूर्यसिद्धान्त के अनुवाद का दशम पृष्ठ देखिए । (पृ० १४८)

दशवर्षसहस्राणि सर्परूपधर महान्।
विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि।
(महाभारते उद्योगपर्वणि १७।१७)

तस्माद् वेदव्याख्याने, इतिहासे चेतिहासपुराणानामुपेक्षा न प्रशस्ता, तदुक्तम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति।'
'यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
पुराणं चेन्न संविद्यान्न स स्याद् विचक्षणः॥'
छान्दोग्ये च–'इतिहासपुराणानि पञ्चमो वेदानां वेदः।'[1]

व्यासपरम्परा युगगणना च वैदिकवाङ्मयस्य भारतीयेतिहासस्य च मूलभित्ती स्तस्तेन तेषां वर्णनेऽत्र लोभसंवरणं न कृतम्। इत्यलमनेन प्रसङ्गेन।

## तैत्तिरीयवाजसनेयचरणयोर्मूलरम्परा

**तैत्तिरीयचरणस्य मूलम्**—हिरण्यकशिपुविप्रचित्तिवृत्रासुरादयो असुराः पूर्वदेवा उच्यन्ते। देवेभ्यः पूर्वं यज्ञसंस्था असुरेष्वासीत्,— 'असुरेषु वा एष यज्ञ अग्र आसीत्' (श० ब्रा० १२।६।३।७)। पतञ्जलिना चोक्तम्—'तैः पुनरसुरैर्यज्ञे कर्मण्यपभाषितम्' (महाभाष्ये पस्पशाह्निके), 'ते असुरा आत्तवचसो हे अलवो हेऽलव इति वदन्तः पराबभूवुः' (श० ब्रा० ३।२।१।२३), तथा चेन्द्रशत्रुः स्वरतोपराधात्,' (पाणिनीयशिक्षा), अत एव अथर्वा भृर्गुर्वा तैत्तिरीयचरणस्य मूलप्रवर्त्तक आसीत्। शतपथे वेदसंहिताप्रवर्त्तकानां वंशपरम्परा चोपलभ्यते—'आभूतिस्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आर्थवर्णाद् दध्यङाथर्वणो दैवादथर्वा।'[2]

---

1. छा० उ० (७।१।२)
2. ब्रह्मा देवानां प्रथमः सम्बभूव। विश्वस्य कर्त्ता भुवनस्य गोप्ता।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्। अथर्वाय ज्येष्ठपुत्राय प्राह॥
अथर्वणे यां प्रवदेत ब्रह्माथर्वा। तां पुरोवाचाङ्गिरसे ब्रह्मविद्याम्।
स भारद्वाजाय सत्यवाहाय प्राह। भारद्वाजोऽङ्गिरसे परावराम्॥
(मुण्डकोपनिषदि १।१।१)

(श० ब्रा० १४ । ४ । ६ । ३) प्राकट्याद् असुराणां भृगुभिस्सह सम्बन्धो न विशेषेण विचारणीयः, तेषु भृगुषु काव्य उशना प्रसिद्धतमोऽसुर-गुरुः—

'भृगूणामधिपं चैव काव्यं राज्येऽभ्यषेचयत् ॥
(वायुपुराणे ७० । ४)

पुराणानुसारेण उशना काव्यः शुक्राचार्यस्तृतीयो व्यास आसीत्—
'तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः ।' (वायुपुराणे)

आथर्वणश्रुतेः तैत्तिरीयश्रुतेश्च मूलप्रवक्तारश्च भार्गवा ऋषयोऽभूवन् । महाभारते च भार्गवाणामृषीणां महत्वमतिरोहितमस्ति, इति च विपश्चितां ज्ञातमेव तथ्यम्, तच्च सुधनकरमहोदयेन एकस्मिन् प्रसिद्धे निबन्धे प्रकटीकृतम् । तथा च श्रीमद्भगवद्गीतायाम्—

'महर्षीणां भृगुरहम् ।' (१० । २५)

इत्यनेनैव भृगूणां माहात्म्यमितिहासे प्रसिध्यति । भृग्वङ्गिरसां वेदो हि छन्दोवेद उच्यते स्म, पारसीकाणां जेन्दा अवेस्ता छन्दोवेदस्यैव विकृतं रूपं धारयति ।[1] अतः कृष्णयजुर्वेदः (तैत्तिरीयसंहिता) व्यासानां गुरुशिष्यपरम्परया श्रीकृष्णद्वैपायनेन पाराशर्येण लब्धः, तस्मात् तस्य शिष्यो वैशम्पायनस्तां संहितामधीतवान्, ततस्तस्य

---

पं० रघुनन्दन शर्मणांमते च—'रावण के नाम से एक भाष्य का कुछ अंश मिलता है, पर वह उस रावण का भाष्य नहीं है । हां द्रवि में एक कृष्णवेद (तैत्तिरीय संहिता) अब तक अवश्य चल रह जिसमें प्राचीन रावण के भाष्य का अंत प्रतीत होता है । यद्यपि उ भाष्य अब अलग नहीं मिलता, पर उसका हिंसामय यज्ञ, सुराप मांसभक्षण, व्यभिचार, बलि, लिंगपूजन आदि धर्म जो वह मानता थ कृष्णवेद के साहित्य में लिखे हुए मिलते हैं ।'

(वैदिक सम्पत्ति पृ० ४७८)

1. कुरान इस समय अरबजाति की मान्यपुस्तक बन गई है । कुरान की अनेक आयत (वचन) पढ़कर कुरानाभ्यासी रोगियों की चिकित्सा करते हैं । उन्होंने यह बात भृगुओं के वंशजों में प्रचलित अनेक आथर्वण मन्त्रों से ली है ।

(भारतवर्ष का बृहद् इतिहास, प्रथम भाग, पृ० २३६

शिष्यो भ्राता च तित्तिरिमुनि: तैत्तिरीयसंहितामधीनवान्, तस्य नाम्ना सा तैत्तिरीयसंहिता चोच्यते । वर्तमानायास्तैत्तिरीयसंहिताया मूलं कृष्णद्वैपायनस्य चरणमासीत्, तस्मादत्र विस्तरेण तस्येतिहास उल्लिख्यते ।

**पाराशर्यस्य चरणप्रवर्तनम्**—आब्रह्मण: पराशरपर्यन्तं सप्तविंशतिर्वेदव्यासा अभूवन् । पाराशर्यस्य कश्चित् पूर्वज: पराशर: सप्तविंशो व्यासो बभूव । पराशरसगोत्रा बहवो मुनयोऽभूवन्, येषु प्रसिद्धतम: पाराशर्य: पञ्चशिख आचार्य: कृष्णद्वैपायनात्पूर्वमभवत्—

पराशरसगोत्रस्य वृद्धस्य सुमहात्मन: ।
भिक्षो: पञ्चशिखस्याहं शिष्य: परमसम्मत: ।।

(महाभारते १२।३२०।२४)

कृष्णद्वैपायनस्य पिता तु नादिपराशर:, किन्तु कश्चिदन्य: पराशर: तस्य पितेति प्रतीयते । आदिपराशरस्तु दाशरथेरमापूर्वं सौदासस्य[1] समानकालिक: त्रेतायुगे बभूव ।

पराशरगोत्रे हि कश्चित् 'जतूकर्णो' नामक ऋषिरभवत्, यस्य वंशज: पुत्रो का जातूकर्ण्यो हि कृष्णद्वैपायनपाराशर्यस्य व्यासस्य गुरुरासीत् । अनेनैव जातूकर्ण्यशिष्येण पाराशर्येण कलिसंवत्सरात् द्विशतीपूर्वं वेदशाखाचरणप्रवर्तनम् कृतमिति विविधै: प्रमाणैश्च निश्चीयते विपश्चिद्भि: । अस्य पाराशर्यव्यासस्य शिष्यै: प्रशिष्यैश्च वर्तमाने सर्वमुपलब्धं वाङ्मयं सम्पादितं प्रणीतं च विद्यते । पाश्चात्या विद्वांस: सर्वाधिक्येन व्यासादेव बिभ्यति स्म, तेन तस्यास्तित्वे हि प्रहारं चक्रु: ।[2] हाकिन्स नामको अमेरिकनलेखको लिलेख—

Vaishmpayana and Vyasa are mentioned as early as the Taittiriya Aranyaka, but not as author or editors of the epic which is now their chief claim to

1. 'सौदासस्य महायज्ञे शक्तिना गाधिसूनवे ।' बृहद्देवतायां (४।११२)
2. 'राथ, मैक्समूलर, मैकडानल, कीथ और हाकिन्स प्रभृति पाश्चात्य लेखकों को सबसे अधिक भय व्यासजी और महाभारत से था । इस हेतु उन्होंने व्यासजी को मिथिकल और उनके ग्रंथ को बहुविधकालों में रचित माना ।' (भा० बृ० इ०, प्र० भा०, पृ० १९६)

recognition (Cambridge History of India, Vol. I, p. 252)

यदा पाश्चात्यलेखका: पाराशर्यमेव हि न स्वीकुर्वन्ति, तदा का कथा पुरातनानां प्राक्पाराशर्याणां व्यासनाम् । पाराशर्यव्यासो हि मूलं वेदवाङ्मयस्य, यदा मूलमुत्पाटितं भवेत्, तदा कथं तस्य वृक्षस्य शाखा: प्रशाखाश्च प्ररुह्येरन् । अत: पाराशर्यव्यासो न केवलमैतिहासिक: पुरुष:, किं च प्रधानस्तम्भो भारतीयेतिहासस्य, अत्र कल्पनानां वा न किञ्चित् मूल्यमस्ति । अनेन पाराशर्येण व्यासेन द्वापरे युगे शन्तनुराज्ञो राज्यकाले स्वस्य वेदचरणस्य प्रवर्तनमकारि, तथ्यमिदं महाभारतग्रन्थस्यादिपर्वणो (६६।१४–२२), वर्णनाच्च प्रज्ञायते । तथा च स्मर्यते—

जातमात्रं च यं वेद उपतस्थे ससंग्रह: ।
धर्ममेव पुरस्कृत्य जातूकर्ण्यादवाप तम् ।।[1]

वेदानां विस्तारकरणात् स व्यासपदवीं लब्धवान्—
'विव्यास वेदान् यस्मात् स तस्माद् व्यास इति स्मृत: ।'[2]

तथा चोक्तम्—
ऋत्विक् समो नास्ति लोकेषु चैव
द्वैपायनेनेति विनिश्चितं मे ।
एतस्य शिष्या: क्षितिमाचरन्ति
सर्वर्त्विज: कर्मसु स्वेषु दक्षा: ।।[3]

वेदव्यासस्य विख्याताश्चत्वार: शिष्या बभूवुर्हि—'सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या: ।'[4]

इतिहासात्तथ्यमिदं विज्ञायते यद् द्वापरे युगे पाराशर्यचरणप्रवर्तनात् पूर्वं वेदानां बह्वीरस्तव्यस्ता: शाखा आसन्, पाराशर्येण ताभ्यो

1. वायुपुराण (१।४३), तुलनीयं च पाराशर्यो जातूकर्ण्यात्, (शतपथब्राह्मणे १४।४।६।३) ।
2. महा० आदि० (६३।८८)
3. महा० आदि० (५३।६)
4. आश्व० गृ० (३।३।५)

मन्त्राः संगृह्य सम्यग् व्यवस्थाप्य च चतस्रः संहिताः कृताः । स स्वशिष्याय पैलाय ऋग्वेदसंहितामूचिवान्, वैशम्पानाय यजुर्वेदसंहितां (कृष्णयजुर्वेदसंहितां–तैत्तिरीयशाखां), जैमिनये सामसहिताम्, सुमन्तवे च अथर्वसंहितां प्रोवाच । यद्यपि सर्वेषां वेदानां ११३१ शाखाः श्रूयन्ते, परन्तु अस्माकमध्ययनं केवलं यजुर्वेदस्य तैत्तिरीयवाजसनेयशाखयारेव सम्बद्ध्यते, तेनात्र यजुर्वेदशाखाविस्तारमेव वितन्यते । इदानीं यजुषां द्विविधो मन्त्रविभागः समुपलभ्यते—

शुक्लं कृष्णमिति यजुश्च समुदाहृतम् ।
शुक्लं वाजसनं ज्ञेयं कृष्णं तु तैत्तिरीयकम् ॥

अनयोर्नाम्नोर्हेतुस्तत्र कल्प्यते केनचिद् विदुषा—
बुद्धिमालिन्यहेतुत्वात्तद्यजुः कृष्णमीर्यते ।
व्यवस्थितप्रकरणात्तद्यजुः शुक्लमीर्यते ॥ (प्रतिज्ञासूत्रभाष्ये)

टीकाकारेण संसूचितोऽर्थो न समीचीनः प्रतिभाति मे, तत्र शुक्लकृष्णसंज्ञायाः कश्चिदन्यो हि हेतुः प्रतीयते । अस्माकं मते तु, आदित्यनाम्ना यजूंषि आदित्यान्युच्यन्ते, वाजसनेयनाम्ना वाजसनेयानि च कथ्यन्ते, तद्वत् शुक्लनाम्ना शुक्लानि भवन्ति, एवं च कृष्णेन (कृष्णद्वैपायनेन) प्रोक्तानि यजूंषि कृष्णानीर्यन्ते, इति दिक् । सर्वासां संहितानां नामानि प्रवक्तृनामभिरेव प्रसिध्यन्ति, इदानीमुपलभ्यमानानां यजुषां (कृष्णयजुषां) प्रवक्ता (सम्पादकः) कृष्णद्वैपायनो व्यासो बभूव, तस्य शिष्यो वैशम्पायनाख्यः चरकाचार्य एतेषां यजुषां प्रवक्ता, वैशम्पायनस्यान्यतमः शिष्यः तित्तिरिः, तेन तित्तिरिणा प्रोक्ता कृष्णयजुर्वेदसंहिता हि 'तैत्तिरीयसंहिता' चाभिधीयते । एवमेवात्र तैत्तिरीयचरणस्य मूलमभिहितम्, अतः परं वाजसनेयचरणस्य मूलमाख्यायते ।

**वाजसनेयचरणप्रवर्तनम्**—(आदित्यपरम्परा)--गोल्डस्टकरनामा[1] विद्वान् वाजसनेयिसंहिताया अस्तित्वं पाणिनिकालात् पूर्वं न हि मेने ।

---

1. 'I have adduced for the non–existence in Panini's time of the Vajasaneya Sanhita, arranged by Yaugyavalkya'.
(Panini : His Place in Sanskrit Literature by Theodor Goldstucker, p. 154)

एवं च डा० वासुदेवशरणअग्रवालमहोदयानां[1] मते पाणिनिकाले याज्ञवल्क्यकृतस्य ब्राह्मणस्य (वाजसनेयब्राह्मणस्य शतपथब्राह्मणस्य) भूयसी प्रतिष्ठा नासीत्। उभे एते मते भ्रमपूर्णे स्तः । अतस्तथ्यानामत्र विवेचनं क्रियते। एनयोर्मतयोः महती भ्रमततिः संगुफिता दरीदृश्यते। वाजसनेयिसंहिताकारस्य वास्तविकं नामधेयं 'वाजसनेय' इत्यासीत्, तस्य पिता 'वाजसनो माता वाजसना वा आसीत्', इति, तेन स 'वाजसनेय' इत्युच्यते स्म। अत एव चरणस्य याज्ञवल्क्यनाम्ना प्रसिद्धिः कथं भवेत्, याज्ञवल्क्यस्तु वाजसनेयस्य गोत्रनाम बभूव, अननैव अज्ञानेन महती भ्रमलता समुत्पन्ना इति नात्र संशयस्य मनागपि अवसरः। वाजसनेयो याज्ञवल्क्यो वैशम्पायनस्य शिष्यो अतस्तस्य समानकालिकः। यो वैशम्पायनस्य कालः स एव वाजसनेयस्य, तदा कथं स पाणिनेः समानकालिको भवेत्। पाणिनेस्तद्विषयताविषयकं सूत्रं वाजसनेयेन सहापि लगति न तु गोत्रप्रवर्तकेन याज्ञवल्क्येन सह। यथा शौनकिनः, शाट्यायनिनः, तथैव च वाजसनेयिन इत्यत्र सूत्रमिदं प्रवर्तते। अस्य वाजसनेयस्य चरणस्य प्रतिष्ठा तैत्तिरीयचरणादपि बहुतरा पुराकाले बभूव, तैत्तिरीयचरणस्यान्यतमेनाचार्येण आपस्तम्बेन भूयो भूयो वाजसनेयिनां कल्पविषयकाणि मतान्युदाहृतानि दृश्यन्ते स्वस्मिन् श्रौतसूत्रे[2], तस्मादाधुनिकविदुषां वासुदेवशरणादीनां मतं वितथमज्ञानमूलकमैतिह्यविपरीतमिति न संशयः। इतिहासपुराणाभ्या-

---

1. 'यदि यह बात सत्य है कि याज्ञवल्क्य भी शाटचायन आदि के समान ही प्राचीन आचार्य थे, तो प्रश्न होता है कि उनके ग्रन्थों में भी तद्-विषयता का नियम लागू क्यों नहीं हुआ और याज्ञवल्क्य के नाम से ही चरण का नाम क्यों नहीं प्रवृत्त हुआ, जैसा कि समस्त प्राचीन छन्द और ब्राह्मण एवं कहीं कल्पसूत्रों के रचयिता ऋषियों के नाम से भी हुआ।······ यह प्रश्न संगत है कि यदि याज्ञवल्क्य का ब्राह्मण भी प्राचीन था तो लोक में उससे सम्बन्धित चरण की स्थापना क्यों नहीं हुई? इस निश्चित और स्पष्ट प्रश्न का उत्तर यही ज्ञात होता है कि याज्ञवल्क्य तुल्यकाल (अचिरकाल) अर्थात् लगभग पाणिनि के आस-पास होनेवाले आचार्य थे, जिनके ब्राह्मण भाग पुराणप्रोक्त नहीं माने जाते थे। (पाणिनिकालीन भारतवर्ष, पृ० ३२३)

2. अष्टा० (४।३।१०६)

मपि वाजसनेयचरणस्य प्रतिष्ठा प्रख्याप्यते, तथा 'शतपथब्राह्मण-मिदानीमपि तस्य प्रतिष्ठायाः साक्षान्मूर्तिरिवास्ति, तच्च मूर्धन्यमेवास्ति सर्वेषु ब्राह्मणग्रन्थेषु इत्यलं बहुवादेन ।

**वाजसनेयचरणस्य मूलमादित्यपरम्परा**—अदितेः कश्यपस्य च द्वादश पुत्रा बभूवुः, तेषु विवस्वनादित्यो ज्येष्ठ आसीत्, विवस्वतो द्वौ प्रसिद्धौ पुत्रौ—यमो मनुश्च ।[1] यमपित्रा विवस्वता शुक्लयजुषामादिकाले प्रवचनं कृतम् । पुराणे च विवस्वानादित्यः पञ्चमो व्यास इति च श्रूयते ।[2] यदा द्वापरान्ते व्यासशिष्येण वैशम्पायनेन स्वशिष्यो वाजसनेयो याज्ञवल्क्यः कारणान्तरात्तिरस्कृतस्तदा तेन तैत्तिरीयश्रुतिरपि परित्यक्ता, तदा तेन उद्दालकादारुणेश्चादित्यानि यजूंषि चाधीतानि, महाभारते स्वयं याज्ञवल्क्यः कथयति—

यथाऽऽर्षेयेणेह विधिना चरताऽवनतेन ह ।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप ! ।।[3]

याज्ञवल्क्येनादित्यानि यजूंषि न साक्षाद् विवस्वतो लब्धानि, किन्तु शिष्यपरम्परयैव गुरोः सकाशादधीतानि । इयं शिष्यपरम्परा बृहदारण्यकोपनिषदि चोपलभ्यते ।[4] तत्र तदन्ते चोक्तम्—'आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते, एतेन च ज्ञायते शुक्लयजुर्वेदो नार्वाक्कालिकः, परन्तु तस्यापि परम्परा कृष्णयजुर्वेदस्य समानकालिका आसीदिति मन्तव्यम् । शुक्लयजुर्वेदस्य मूलप्रवक्ता विवस्वानासीत्, तथेयं चादित्यपरम्परा संकेतिता वासुदेवेन गीतायाम्—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ।[5] (४।१)

---

1. 'स वाव विवस्वानादित्यो यस्य मनुश्च वैवस्वतो यमश्च' मैत्रा० सं० (१।६।१२), मनुः भारतवर्षस्याधिपो बभूव, यमः पारस्यदेशस्य—'यमो वैवस्वतो राजेत्याह तस्य पितरो विशः' श० ब्रा० (१३।४।३।६)
2. 'पञ्चमे द्वापरे चैव व्यासस्तु सविता यदा ।' (वायुपुराण अध्यायः २३)
3. महा० (१२।३१८।२)
4. बृ० उ० (६।५।४)
5. तुलनीयम्—"T was Vivahrant, first of mortals,
To whom was a son begotten.

शतपथे त्वादित्यशिष्यपरम्परा चैवंप्रकारेणोपलभ्यते[1]—

(१) आदित्यः
|
(२) अम्भिणी वाक्
|
(३) नैध्रुविः काश्यपः
|
(४) शिल्पः काश्यपः
|
(५) हरितः काश्यपः
|
(६) वार्षगणोऽसितः
|
(७) बाध्योगः जिह्वावान्
(८) वाजश्रवाः
(९) कुश्रिः
(१०) उपवेशिः
(११) आरुणिरुद्दालकः
(१२) वाजसनेयः याज्ञवल्क्यः ।

**चरकाचार्यः वैशम्पायनः तित्तिरिश्च**—'चरक' इति वैशम्पायनस्याख्येति काशिकायां[2] चोक्तम्, वाजसनेयिसंहितायां[3] चायं चरकाचार्यः स्मृतः । शतपथे च चरकाणां[4] बहुधोल्लेखो दृश्यते ।

---

Yima of fair flocks all shining.
(Some Auestian Translation, Bhandarker's Commomoration Vol. p. 61, 62).

1. श० ब्रा० (१४।६।४।३३)
2. काशिकाया (४।३।१०४)
3. वाज० सं० (३०।१८)
4. श० ब्रा० (३।८।२।२४, ६।२।२।१० इत्यादयः)
ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः ।
वैशम्पायनशिष्यास्ते चरकाः समुदाहृताः ॥

**शाखाविस्तारः**—पुराणेषु कृष्णयजुषां षडशीतिः शाखाः प्रकीर्तिताः। तदुच्यते—

वैशम्पायनगोत्रोऽसौ यजुर्वेदं व्यकल्पयत्।
षडशीतिस्तु येनोक्ताः संहिताः यजुषां शुभाः॥
सर्वेषामेव तेषां वै त्रिधा प्रकीर्तिताः।
उदीच्या मध्यदेशाश्च प्राच्याश्चैव पृथग्विधाः॥
श्यामायनिरुदीच्यानां प्रधानः सम्बभूव ह।
मध्यदेशप्रतिष्ठाता चारुणिः प्रथमः स्मृतः॥
आलम्बिरादिः प्राच्यानां त्रयो देश्यादयस्तु ते।
इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः॥[1]

काशिकावृत्तौ चरकाणां प्रधाना नवभेदाः प्रकीर्तिताः—

आलम्बिश्चरकः प्राचां पलङ्ककमलावुभौ।
ऋचाभारुणिताण्ड्यश्च मध्यमीयास्त्रयोऽपरे॥
श्यामायन उदीच्येषु उक्तः कठकलापिनौ॥[2]

कृष्णयजुर्वेदस्य षडशीतिशाखासु चैताः प्रसिद्धाः—

(१) चरकशाखा
(२) आलम्बिनीयशाखा
(३) पालङ्किनीयशाखा
(४) कामलीयशाखा
(५) आर्चाभिनीयशाखा
(६) आरुणीयशाखा
(७) ताण्ड्यशाखा
(८) श्यामायनीयशाखा
(९) काठकशाखा
(१०) कालापशाखा
(११) मैत्रायणीयशाखा
(१२) हारिद्रवीयशाखा
(१३) छागलेयशाखा
(१४) आह्वरकशाखा
(१५) कपिष्ठलशाखा
(१६) चारायणीयशाखा
(१७) वारायणीयशाखा
(१८) वार्तन्तवीयशाखा
(१९) श्वेताश्वतरशाखा
(२०) औपमन्यवशाखा
(२१) पाताण्डनीयशाखा
(२२) मानवीयशाखा
(२३) बाराहीशाखा
(२४) दुन्दुभीयशाखा
(२५) ऐकेयीशाखा
(२६) तैत्तिरीयशाखा
(२७) औरवेयीशाखा
(२८) आत्रेयीशाखा

1. ब्रह्माण्डपुराण (३४।८–१३)
2. काशिकायां (४।३।१०४)

(२९) वैखानसशाखा
(३०) खण्डकीयशाखा
(३१) कालेताशाखा
(३२) शाट्यायनीयशाखा
(३३) हिरण्यकेशीयशाखा
(३४) भारद्वाजीयशाखा
(३५) आपस्तम्बीयशाखा
(३६) बौधायनीयशाखा
(३७) सत्याषाढ़ीयशाखा
(३८) वाधूलशाखा
(३९) कौण्डिन्यशाखा
(४०) आग्निवेशीयशाखा
(४१) हारीतशाखा ।

कृष्णयजुर्वेदे अष्टादशसहस्राणि यजूंषि सन्ति । इदानीमिमाः शाखाः प्रकाशिता उपलभ्यते—तैत्तिरीयकाठकमैत्रायणीयकठकपिष्ठलाख्याश्च ।

**वाजसनेयचरणस्य शाखाविस्तारः**—विष्णुपुराणे चाख्यानमुपलभ्यते, तदनुसारेण—

यजुर्वेदतरोश्शाखास्सप्तविंशतिर्महामुनिः ।
वैशम्पायननामाऽसौ व्यासशिष्यश्चकार वै ॥
याज्ञवल्क्यस्तु तत्राभूद्ब्रह्मरातसुतो द्विजः ।

केनचित् कारणेन गुरुशिष्ययोर्वैशम्पायनयाज्ञवल्क्ययोर्विवादोऽभूत्, तेन—

ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् ।
मुच्यतां यत्त्वयाधीतं मत्तो विप्रावमानक ! ॥

+ + +

इत्युक्तो रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै ययौ स स्वेच्छया मुनिः ॥
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज ।
जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥

(विष्णुपुराणे ३।५)

तथा च महाभारते शान्तिपर्वणि याज्ञवल्क्यजनकयोः संवादे—
यथाऽऽर्षेयेणेह विधिना चरताऽवनतेन ह ।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप ।
ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥
कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् ।
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥ (अध्याये ३२३)

अनेन प्रमाणेन च ज्ञायते यद् याज्ञवल्क्यस्य वैशम्पायनो मातुलो बभूव। अनेनैव याज्ञवल्क्येन वाजसनेयेन वैशम्पायनस्य चरकाचार्यस्य वेदचरणं परित्यज्य आरुणेरुद्दालकाद् आदित्ययजूंषि पुनरधीत्य स्वस्य नवीनचरणं प्रवर्तितम्, तच्च वाजसनेयचरणमुच्यते।

श्रीमद्भिरुदयवीरशास्त्रिभिः 'वेदान्तदर्शनस्येतिहासे' पृष्ठे ३३, श्रीमताम् आचार्यप्रवराणां रामकृष्णमहोदयानां मतमुद्धृतम्' यदि वयं परम्परया बृहदारण्यकोपनिषदं नित्यं मन्यामहे, तदपि विष्णुपुराणात् प्रतीयते, यद् उपनिषदियं तथा चास्या मूलवेदः शुक्लयजुर्वेदो व्यासाय नोपलब्धौ आस्ताम्, यत्सर्वप्रथमं भुवि याज्ञवल्क्येनैव शुक्लानि यजूंषि सूर्याल्लब्धानि, लोके च प्रचारितानि, इत्यैतिह्यम्।[1]

श्रीमद्भिरुदयवीरशास्त्रिभिर्मतमिदं स्थापितं—शुक्लयजुषां मूलप्रवक्ता विवस्वानादित्य आसीत्, शिष्यपरम्परयैव याज्ञवल्क्येनेमानि शुक्लानि यजूंषि लब्धानि। शास्त्रिणां मते याज्ञवल्क्यगोत्रीया अनेके ऋषयो याज्ञवल्क्याभिधानेन[2] कीर्त्यन्ते स्म।

तन्मते महाभारतस्य साक्ष्येण प्रतीयते शतपथस्य प्रणेता न पाराशर्यस्य व्यासस्य प्रशिष्यः परन्तु दैवरातिर्जनककालिकः कश्चित् पुरातन ऋषियाज्ञवल्क्य आसीदिति, तदुक्तम्—

याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदां वरः॥[3]

---

1. यदि बृहदारण्यक की परम्परा के अनुसार नित्य माना जाये, तब भी विष्णुपुराण से स्पष्ट है कि उक्त उपनिषद्, उसका मूल वेद—शुक्लयजुर्वेद–भी वेदव्यास को उपलब्ध नहीं था, उसे सर्वप्रथम इस भूतल पर याज्ञवल्क्य ने ही सूर्य से प्राप्त किया।

   वेदान्त दर्शन का इतिहास, पृ० ३३ पर ब्राह्मसूत्रों के वैष्णव भाष्यों का तुलनात्मक अध्ययन, पृ० १४ से उद्धृत।

2. इतिहासपुराणेषु 'याज्ञवल्क्य' इति विश्वामित्रस्य शतपुत्रेषु गण्यते—द्रष्टव्यम्—अनुशासनपर्वणि (४।५१),

   महीदासस्य ऐतरेयस्य पिता अपि कश्चित् याज्ञवल्क्यो बभूव—
   'आसीद् विप्रो याज्ञवल्क्यो द्विभार्यस्तस्य द्वितीयामितरेति चाहुः॥'
   षड्गुरुशिष्यस्य ऐतरेयब्राह्मणस्य सुखप्रदवृत्तौ (पृ० ४ प्रारम्भे)

3. महा० (१२।३१०।३)

उदयवीरशास्त्रिणां मते रामायणाच्चेतत् प्रज्ञायते 'अयं दैवरातिर्जनको बृहद्रथनाम्ना चाभिधीयते यः सीरध्वजाद् जनकात् षोडशपुरुषपूर्वमभवत्—

सुकेतोरपि धर्मात्मा देवरातो महाबलः ।
देवरातस्य राजर्षेर्बृहद्रथ इति स्मृतः ॥[1]

पण्डिप्रवराः भगवद्दत्तमहोदया महाभारतस्य पाठेऽत्र त्रुटिं पश्यन्ति स्म ।[2] याज्ञवल्क्योऽसौ गोत्रनाम इति निश्चयेन कथयितुं पार्यते, इतिहासे याज्ञवल्क्यवंशजा याज्ञवल्क्यसनामानो वा बहवोऽपि ऋषय बभूवुरत्रापि न काचिद् विप्रतिपत्तिः, तथापि वाजसनेयिसंहिता, शतपथब्राह्मणं च वैशम्पायनान्तेवासिनो वाजसनेयस्य याज्ञवल्क्यस्यैव कृतिः, अत्रापि नास्ति कस्यचित् संशयस्यावसरो मनागपि । आदित्यसम्प्रदायस्य मूलं तु पूर्वमेवाभिहितमलं तदावृत्त्याऽत्र ।

इतिहासपुराणेषु याज्ञवल्क्यस्यास्य (शतपथप्रणेतुः) पितुर्नामानि ब्रह्मरातब्रह्मवाहदेवरातादीनि चोपलभ्यन्ते । 'याज्ञवल्क्य' इति तु गोत्र नामधेयम्, 'वाजसन' इति तु तस्य पितुर्मूलं नामधेयम्, तेन स वाजसनेयः उच्यते स्म, वाजसनेययाज्ञवल्क्यस्य वास्तविकं नाम तु अज्ञातमेव विद्यते । अनेनैव वाजसनेयेन शुक्लयजुर्वेदः प्रोक्तः शतपथञ्च प्रणीतम् । वाजसनेययाज्ञवल्क्यस्य द्वौ गुर्वास्ताम्, प्रथमगुरुस्तस्य मातुलश्चरकाचार्यो वैशम्पायनः, द्वितीयस्तु उद्दालक आरुणिस्तेन गुरुर्वृतः, तस्मात्तेन शुक्लानि यजूंष्यधीतानि । पुराणादिष्विदमाख्यानमलंकृतभाषया चोक्तम्—'याज्ञवल्क्येन आदित्यात् अश्वरूपधारिणः शुक्लानि यजूंषि प्राप्तानि इत्यादि, तन्न श्रद्धेयम्, यद्यपि सर्वांशेन काल्पनिकं नास्ति ।

इतिहासपुराणानुसारेण वाजसनेयस्य याज्ञवल्क्यस्य शतमनके वा शिष्या आसन्, तेषां पञ्चदश शिष्याः प्रधाना अभूवन्, तैश्च शुक्लयजुर्वेदस्य पञ्चदशशाखाः प्रोक्ताः, पुराणे च वर्णितम्—

याज्ञवल्क्यस्य शिष्यास्ते काण्वबोधेयशालिनः ।
मध्यंदिनश्च शापेयी विदग्धश्चाप्युच्छलः ॥
ताम्रायणश्च वात्स्यश्च तथा गालवशैशिरी ।

---

1. वाल्मीकिरामायणे (१।७१।६)
2. द्रष्टव्यम्—वैदिक वाङ्मय का इतिहास, भाग १, पृ० २६४

आवटी च तथा पर्णो वैणेयः सपराशरः।
इत्येते वाजिनः प्रोक्ता दश पञ्च च स्मृताः ॥[1]

अन्येभ्यः स्रोतोभ्यश्च ज्ञायते तथ्यमिदं यद् याज्ञवल्यशिष्यैरिमाः पञ्चदश शाखाः प्रोक्ताः—

(१) जाबालशाखा
(२) बोधेशाखा
(३) माध्यंदिनशाखा
(४) शापेयशाखा
(५) काण्वशाखा
(६) तापनीयशाखा
(७) कापोलशाखा
(८) पौण्ड्रवत्सशाखा
(९) आवटिकशाखा
(१०) परमावटिकशाखा
(११) पाराशरशाखा
(१२) वैणेयशाखा
(१३) वैधेयशाखा
(१४) कात्यायनीयशाखा
(१५) वैजवापीयशाखा

इदानीं केवलं काण्वीयमाध्यंदिनीयशाखे उपलभ्येते, कात्यायनीयश्रौतसूत्रं कात्यायनशाखायाः श्रौतसूत्रमस्ति। तत्र ब्रह्माण्डपुराणे शुक्लयजुषां मन्त्रसंख्योच्यते—

द्वे सहस्रे शतं न्यूने मन्त्रे वाजसनेयके।
ऋग्गणः परिसंख्यातो ब्राह्मणं तु चतुर्गुणम् ॥[2]

**कात्यायनापस्तम्बयोः श्रौतसूत्रयोर्मूलम् कात्यायनस्यापस्तम्बस्य च शाखे** कृष्णयजुर्वेदस्य षडशीतिः शाखा अभूवन्, तासु चैका आपस्तम्बशाखा आसीत्। सा आपस्तम्बशाखैव आपस्तम्बश्रौतसूत्रस्य मूलमासीत्, सा शाखा त्विदानीमनुपलब्धा, तथाप्यनुमीयते सा आपस्तम्बशाखा तैत्तिरीयशाखया तुल्यैव भवेत्। एवं च वाजसनेयचरणस्य पञ्चदशसु शाखासु कात्यायनशाखाऽपि प्रसिद्धाऽभवत्। तथा चानुमानेन कात्यायनशाखावाजसनेयिशाखया तुल्या भवेत्। कात्यायनश्रौतसूत्रस्य मूलमेव कात्यायनशाखा आसीत्, सा चानुपलब्धा विद्यते। एवं प्रायेण स्वा स्वा शाखा तस्य तस्य श्रौतसूत्रस्य मूलमासीत्, नात्र काचिद् विचारणा।



1. वायुपुराणे (६१।२४।२६)
2. ब्रह्माण्डपुराणे (६१।६७)

## द्वितीयोऽध्यायः

# श्रौतसूत्रवाङ्मये कात्यायनापस्तम्ब-श्रौतसूत्रयोस्स्थानम्

कल्पः - वेदाङ्गेषु कल्पाख्यमङ्गं प्रधान लभते । कल्पग्रन्था यज्ञविद्याया अनिवार्याणि शास्त्राणि सन्ति, तदुक्तं कुमारिलभट्टेन—

'वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ।
न तु कल्पैर्विना केचिन्मन्त्रब्राह्मणमात्रकम् ॥'[1]

कल्पसूत्रकाराणामपि महती प्रतिष्ठाऽऽसीत्—तेऽपि ऋषिवत् स्मर्यन्ते पूज्यन्ते च—

'न तावदनृषिः कश्चित् स्मर्यते कल्पसूत्रकृत् ।
कर्तृत्वं यदृषीणां तु तत्सर्वं मन्त्रकृत्समम् ॥'[2]

ब्राह्मणोपनिषन्निरुक्तादिषु ग्रन्थेषु कल्पसूत्रणामुल्लेखो बहुधा दृश्यते ।[3] इतिहासपुराणानुसारेण शिवबृहस्पती द्वौ आचार्यौ वेदाङ्गानां प्रवर्तकावास्ताम्, उक्तं च महाभारते शिवं प्रति—

'वेदात्षडङ्गान्युद्धृत्य' (शान्ति० २८४।९२)

एवं बृहस्पतिं प्रति—

'वेदाङ्गानि बृहस्पतिः' (शान्ति० ११२।३२)

तथा च स स्वयमावेदयति—

अधीत्य च व्याकरणं सकल्पम् ।
शिक्षां च भूतप्रकृतिं न वेदम् ॥ (शान्ति० १९९।८)

---

1. शिक्षा कल्पोऽथ व्याकरणं निरुक्तं छन्दसां च यः ।
ज्योतिषामयन चैव वेदाङ्गानि षडेव तु ॥ (पाणिनीयशिक्षा)

2. तन्त्रवार्तिके (१।३।१०)

3. यास्कः—'इमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च ।' निरुक्ते (१।२०); तैत्तिरीयब्राह्मणे—'कल्पतन्त्राणि तन्वानाह - संस्थाश्च सर्वशः ।' (३।१२।९), मुण्डकोपनिषदि च द्रष्टव्यम्—(१।१।५) ।

अननैव देवगुरुणा[1] बृहस्पतिना मन्त्रा दृष्टाः कल्पाश्च प्रणीताः। अनेन प्रमाणेन कल्पसूत्राणां प्राचीनता विज्ञायते, एते 'पुराकल्पाख्या' ग्रन्था नेदानीमुपलभ्यते, कालगर्भे समाविष्टा इति मन्ये। वेदानां सहस्राधिकं शतमेकत्रिंशच्च शाखा आसन्, पुराकाले एतावन्ति कल्पसूत्राणि च भवेयुः, परमिदानीं न्यूनाधिक्येन विंशतिरेव कल्पसूत्राणि विद्यन्ते।

**पाणिनिकाले कल्पानां भेदद्वयी**—अद्यत्वे उपलब्धानां कल्पसूत्राणां पाणिनेः प्राक्कालिकत्वं पाश्चात्यैः भारतीयैश्च सर्वैरेव विद्वद्भिश्च ऊरीकृतम्। कल्पसूत्राणां निर्माणकालस्य निर्धारणाय पाणिनिरेव स्तम्भ इव स्वीक्रियते। परमस्माकं मते भारतीयेतिहासस्य कालनिर्धारणाय त्रयः स्तम्भा स्वीकरणीयाः, यानवलम्ब्य सर्वेषां सूत्रकाराणामन्येषां च महापुरुषाणां कालनिर्धारणं कर्तुं शक्यते। वैदिकवाङ्मये भारतीयेतिहासस्य त्रयोऽतिप्रसिद्धाः स्तम्भाः—व्यासः, शौनकः, पाणिनिश्च सन्ति। उपलब्धाः कल्पग्रन्थाः पाणिनेः प्राक्कालीना व्यासाच्चार्वाक्कालीनास्सन्ति नात्र संशयः। परन्तु पाणिनिकाले तु व्यासात्प्राक्कालिकान्यपि सूत्रायुपलब्धानि आसन्, तेन पाणिनिनोक्तम्—

'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (अष्टा० ४।३।१०५)

तत्र काशिकायां जयादित्यः—'पुराणेन चिरन्तनेनर्षिणा प्रोक्तम्। ब्राह्मणेषु तावत् भाल्लविनः शाट्यायनिनः, ऐतरेयिणः, कल्पेषु—पैङ्गीकल्पः आरुणपराजी। वार्तिककारकात्यायनस्य मते—'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात्।'

जयादित्यमते ऐतरेयादय ऋषयः पुरातना आसन्, तथा च 'याज्ञवल्क्यादयोऽचिरकाला इत्याख्यानेषु वार्ता।' जयादित्यस्य मतमिदं न न्याय्यम्। अत्र पतञ्जलिनाऽप्युक्तम्—पुराणप्रोक्तेष्विति अत्र याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः, याज्ञवल्क्यानि ब्राह्मणानि, सौलभानीति च, किं कारणम्, तुल्यकालत्वात्, एतान्यपि तुल्यकालानि। मन्ये, काशिकाकारेण जयादित्येन आख्यानेषु वार्ता न सम्यगधीता; यत्तु पैङ्गीकल्पस्य प्रणेता पैङ्गी (मधुकः) राथीतरस्य शाकपूर्णेः शिष्यो बभूव, स व्यासशिष्यस्य पैलस्य शिष्यपरम्परायां सप्तम आसीत्,

1. 'बृहस्पतिर्देवानां पुरोहित आसीत्'—जैमिनीयब्राह्मणे (१।१२५)

याज्ञवल्क्य: (वाजसनेय:) तु व्यासशिष्यस्य वैशम्पायनस्य शिष्य-परम्परायां प्रथम आसीत्, अनेनेतिहासेन याज्ञवल्क्यस्तु पैङ्गिमुनेर-पेक्षया पुरार्णषिरेव सिध्यति, एवम् आश्मरथ्यकल्पस्य प्रणेता बादरा-यणेन ब्रह्मसूत्रेषु स्मृत:, तस्मात् स च व्यासस्य समानकालिक:। श्रीयुधिष्ठिरमीमांसकमहोदयानां मते—'पाणिनिना 'पुराणप्रोक्तपदेन' ते प्राक्पाराशर्या: सूत्रग्रन्था: संकेतिता: प्रतीयन्ते, येषां सूत्राणां व्यासेन व्यासशिष्यप्रशिष्यैश्च प्रवचनं कृतम् ।'[1]

**पाराशर्यव्यासस्य प्रवचनकाल:**—नेदानीं प्राक्व्यासकालिको हि कश्चित् सूत्रग्रन्थ उपलभ्यते अत एव सर्वप्रथमं वयं व्यासस्य वेद-प्रवचनकालस्य तिथिं निर्णेतु यतामहे । पाश्चात्यलेखकास्तु व्यासं कल्पितकथानां[2] पुरुषं मन्यन्ते । यदा पाश्चात्यलेखका व्यासस्य मूलमुच्छेत्तुमिच्छन्ति, तदा तेऽस्य शिष्यप्रशिष्याणामैतिहासिकतां कथं मंस्यन्ति । पाश्चात्यानामेतानि वचनानि च श्रद्धातुं शक्यानि । यदा जैमिनिशौनकाश्वलायनापस्तम्बकात्यायनबौधायनादय: सर्वे सूत्रकारा व्यासस्य शिष्यपरम्परायामभूवन्, व्यासस्तु अस्य परम्परावृक्षस्य मूल-मासीत्, मूलहीनास्तस्य शाखाप्रशाखा: कथं प्ररुह्येरन् । डा० राम-गोपालसदृशो भारतीयलेखक: पाश्चात्याननुकुर्वन् लिखति—'वर्तमान-स्थितौ वेदसूत्रकाराणां तिथिनिर्णयं कर्त्तुं कोऽपि समर्थो नास्ति,

---

1. सृष्टि के आदि से लेकर भगवान् वेदव्यास और उनके शिष्य प्रशिष्यों पर्यन्त वेदशास्त्रों का अनेक बार प्रवर्त्तन हुआ है........, अतः हमारा विचार है कि पाणिनि के पुराणप्रोक्त शब्द से उन ब्राह्मणों की ओर संकेत है जिनका प्रवचन भगवान् वेदव्यास और उनके शिष्य प्रशिष्यों के प्रवचन से पूर्व हो चुका। यही अभिप्राय लाट्यायन श्रौत-सूत्र के पूर्व निर्दिष्ट सूत्र के पुराण पद का है।' संस्कृत व्या० शा० का इतिहास, प्रथम भाग, पृ० १७४।

   बृहद्देवतायां च पाराशर्यव्यासस्य प्रशिष्या मधुकादय: पुराणा
   उच्यन्ते नवभ्य इति नैरुक्ता: पुराणा: कवयश्च ये।
   मधुक: श्वेतकेतुश्च गालवश्चैव मन्यते ॥ (१।२४)

2 'Vyas Parasarya is the name of a mythological Sage."
—Vedic Index, p. 339.

वयं केवलं तेषामुपरिकालमर्यादां निम्नसीमानं चानुमातुं समर्थाः स्म ।'[1]

महाभारतग्रन्थस्यान्तःसाक्ष्येण पण्डितप्रवरा भगवद्दत्तमहोदया लिखन्ति[2]–'पाराशर्यव्यासेन वेदप्रवचनं कलेः पञ्चाशदधिकशतं वर्षाणां (१५०) पूर्वं कृतमासीत् । यद्यपि पार्जीटरः पूर्णं तथ्यमवगन्तुं न शशाक

---

1. "It is not possible in the present state of researches into Vedic literature to assign precise date to indivi-sual – Sutrakara; and we cen at the most determine approximately the lower and upper limits of the Sutra period."

   India of Vedic Kalp Sutras by Dr. Ram Gopal, p. 75.

2. 'युधिष्ठिर राज्य की समाप्ति पर कलि का प्रारम्भ माना जाता है । युधिष्ठिर राज्य तक द्वापर अथवा २०० वर्ष का सन्धिकाल था । सब शास्त्रों का मत है कि शाखाप्रवचन द्वापरान्त में हुआ । ईश्वर को धन्यवाद है कि महाभारत आदिपर्व ६६।१४–२२ में शाखा प्रवचन का काल मिलता है । वहां लिखा है कि विचित्रवीर्य की पत्नियों में नियोग करने से पूर्व व्यास जी शाखा-विभाग कर चुके थे ।······वेद शाखा प्रवचन कलि से कोई १५० वर्ष पूर्व हुआ । शाखाप्रवचन के समय व्यास जी लगभग ५० वर्ष के थे ।' वैदिकवाङ्मय का इतिहास, प्रथम भाग, पृ० १७१ ।

   **पुनश्च**—'शन्तनु के राज्यारम्भ से लेकर भारतयुद्ध तक १६३ वर्ष बीते थे । इसका ब्यौरा निम्नलिखित है—

| | | | |
|---|---|---|---|
| शन्तनु | — | ५० वर्ष | (राज्यकाल) |
| विचित्रवीर्य | — | १२ ,, | ,, |
| भीष्मनेतृत्व | — | २० ,, | ,, |
| पाण्डु | — | ५ ,, | ,, |
| धृतराष्ट्र | — | ४० ,, | ,, |
| दुर्योधन | — | ३६ ,, | , |
| भारतयुद्ध तक कुल— | | १६३ वर्ष | |

किन्तु स एतावत्तथ्यं बुद्धवान् यत् व्यासस्य वेदचरणप्रवर्तनं भारत-युद्धात्पूर्वमभवत्।[1] इयमुपलब्धसूत्रग्रन्थानामुपरिसीमा निश्चीयते। व्यासशिष्यस्य सुमन्तोः धर्मसूत्रस्य केचनांशाः प्राप्यन्ते, एवं जैमिनिमुनेः कृतं श्रौतसूत्रमुपलभ्यते[2], अतो व्यासशिष्यैः सूत्रग्रन्थाः प्रणीता नात्र संशयः। अतः परं सूत्रग्रन्थानां निम्नसीमा निरीक्ष्यते। इदानीमुपलब्धाः सर्वे सूत्रग्रन्थाः पाणिनेः पूर्वकालिकास्सन्ति, अत एव पाणिनिमुनेस्तिथिर्निर्णीयतेऽत्र।

**पाणिनेस्तिथिः**—पाणिनिमुनेः प्रादुर्भावकालस्य सम्बन्धे इतिहासज्ञेषु बहवो मतभेदाः प्रस्फुटिताः, डा० भण्डारकरमहोदया विक्रमात् सप्तशतीपूर्वं तस्य कालं मेनिरे, डा० काशीप्रसाद जायसवालमहोदया नन्दकाले (५०० ई० पू०) पाणिनिस्थितेः कालं विदुः। अग्रवालमहोदयाश्चेदं मतं मन्यन्ते स्म, यत् बौद्धग्रन्थे आर्यमञ्जुश्रीमूलकल्पे चोक्तम्—

'तस्याऽप्यन्यतमः सखा पाणिनिर्नाम माणवः।' (पृ० ४२७)

अस्मिन् श्लोके पाणिनिर्नाम माणवो नन्दस्य सखा चोक्तः, तदानीं च वर्षोपवर्षौ द्वावाचार्यौ च बभूवतुः—

अथ कालेन वर्षस्य शिष्यवर्गो महानभूत्।
तत्रैकः पाणिनिर्नाम जडबुद्धितरोऽभवत्॥[3]

---

इसमें युधिष्ठिर राज्यकाल के ३६ वर्ष जोड़ने पर १६६ वर्ष हुए। व्यास जी ने वेदशाखाप्रवचन शन्तनु के राज्यकाल में किया था। यदि शन्तनु राज्यकाल के ५० वर्ष कम कर दिए जाएं तो १५० वर्ष बचते हैं।' द्रष्टव्य—भारतवर्ष का बृहद् इतिहास, द्वितीय भाग, पृ० १५४।

1. "He (Vyas) would probably have completed that work (of Vedic recensions) about a quarter of a century before the Bharat Battle..."

—Ancient Indian Historieal Tradition, p. 318.

2. तवल्कारगुरुणा जैमिनिना जैमिनीयब्राह्मणं श्रौतसूत्रं च प्रणीते (द्रष्टव्यं भवत्रातकृतं जैमिनीयकल्पभाष्यम्, प्रारम्भे)।

3. कथासरित्सागरे (ल० १ त० ४।२०)

अष्टाध्यायीसूत्रेषु च यवनः, मस्करी श्रमणः, निर्वाणादयश्च शब्दाः परिदृश्यन्ते ।[1] तान् शब्दान् डा० अग्रवालमहोदयाः बौद्धप्रभावयुक्तान् मेनिरे ।

एभिः शब्दप्रमाणैः (हेत्वाभासैर्वा) डा० अग्रवालमहोदयाः पाणिनिं नन्दकाले स्थापयन्ति । तत्रेतिहासपुराणेषु च यवना म्लेच्छा ययातिपुत्रस्य तुर्वसोर्वंशजाः स्मर्यन्ते[2], वासुदेवेन कृष्णेन च कालयवनः[3] कौटिल्येन (चातुर्येण) हतः, स चान्यत्र महाभारते कशेरुमान् यवन इति पदेनाभिहितः । अतः यवनशब्दो न पाणिनिमुनेः स्थितिकालस्य निर्णायकः । एवं श्रमणनिर्वाणादीनि पदानि शतपथब्राह्मणदिषूपलभ्यन्ते, अत एषु पदेषु बौद्धत्वमपि नास्ति । मस्करि[4]शब्दोऽपि गोशालमंखलेराचार्यस्य वाचको नास्ति । यथा दण्डयुक्तो पुरुषो दण्डीति उच्यते तथैव मस्कर (वेणु) युक्तः पुरुषो मस्करीति उच्यते । यदि मस्करिशब्दो गोशालस्य वाचको भवेत्तर्हि सूत्ररचना ईदृशी भवेत्—'मस्करमस्करिणौ वेणुगोशालयोः', तस्मादीदृशैः हेत्वाभासैः पाणिनेस्तिथिः निर्णेतुं न शक्यते ।

**कुलपतिशौनकस्य दीर्घसत्रस्य कालः**—पाणिनिमुनेः प्रादुर्भावकालस्य शौनककालेन सह घनिष्ठरूपेण सम्बन्ध आसीत् । व्यासादनन्तरं शौनको हि सर्वाधिक्येन वैदिकवाङ्मयं रक्षितवान्, स च व्यास इव वैदिकसाहित्यस्य महान् स्तम्भः । वैदिकसूत्रग्रंथानां प्रणयनं शौनकस्य दीर्घसत्रे प्राधान्येन समाप्तिं गतम् । यास्कशौनकपिङ्गलमधुककौत्सभागुरिकात्यायनबौधायनपाणिनिप्रभृतिमुनयः प्राणेय सर्वे समानकालिका आसस्तत्र पण्डितप्रवराणां युधिष्ठिरमीमांसकानामुदाहृतानि प्रमाणानि सारेण चात्र लिख्यन्ते[5]--(१) पाणिनेरनुजः पिङ्ग-

---

1. पाणिनिकालीन भारतवर्ष (अध्याय ८)
अष्टाध्यायी (६।१।१४५, ८।२।५०, ४।१।१७५)
2. महा० आदि० (८६।३४),
3. हरिवंशेषु० (२।५७ अध्याये);
महा० (३।१२।३२)
4. अष्टा० 'मस्करमस्करिणौ वेणुपरिव्राजकयोः' (६।१।१५४)
5. द्रष्टव्यम्—संस्कृत व्याकरणशास्त्र का इतिहास, प्रथम भाग, पृ० १३९–४०

लाचार्यं 'उरोबृहती यास्कस्य' इत्यस्मिन् सूत्रे यास्काचार्यं स्मरति। (२) निरुक्तशास्त्रे (१।५) यास्केन कौत्सः स्मर्यते, महाभाष्यानुसारेण कौत्सः पाणिनेः शिष्यो बभूव। (३) शौनकादिभ्यश्च्छन्दसि (अष्टा० ४।३।१०६) इत्यस्मिन् सूत्रे शाखाप्रवक्तारं शौनकं स्मरति। (४) शाखा-प्रवक्ता शौनकश्च ऋक्प्रातिशाख्ये व्याडिमतानि प्रदर्शयति। व्याडे-रपरनामधेयं दाक्षायण इति प्रसिद्धो बभूव, दाक्षायणः पाणिनेर्मातुल आसीत्। (५) बौधायनश्रौतसूत्रे प्रवराध्याये (३) पाणिनेः साक्षान्नि-र्देशो दृश्यते। (६) मत्स्यपुराणे (१९७।१०), वायुपुराणे (९१।९९) पाणिनिगोत्रो निर्दिश्यते। एभिः प्रमाणैस्तथ्यमिदं प्रकटीभवति यद् यास्कशौनकपाणिन्यादयः सर्वे तुल्यकाला आसन्, तेषां पौर्वापर्यम् अतिन्यूनमासीदिति मन्तव्यम्। अतः कस्यापि मुनेः कालो यदि साध्यते, तदस्माकं सिद्धिर्भवेत्।

पाण्डववंशजस्य अधिसीमकृष्णस्य राज्यकाले शौनको द्वितीयं दीर्घसत्रं चकार।[1] तथा च तस्मिन् काले शौनकस्य शास्त्रावतार उच्यते—

शौनको गृहपतिर्वै नैमिषीयैस्तु दीक्षितः।
दीक्षासु चोदितः प्राह सत्रे तु द्वादशाहिके॥

अत एव शौनकः पाणिनिश्चाधिसीमकृष्णस्य काले अभवताम्, एतस्मिन् काले हि सौतिना पुराणप्रवचनं कृतम्, तदानीं मगधे सेना-जितः, अयोध्यायां दिवाकरस्य हस्तिनापुरे चाधिसीमकृष्णस्य शासनानि बभूवुः।[2] तदानीमेव आर्षकालोऽन्तं जगाम।[3] पं० भगवद्दत्त-युधिष्ठिरमीमांसकयोर्मतेनायं कालः २७६० विक्रमात् पूर्वमासीत्। अस्मिन् काले हि शौनकपाणिन्यादयो बभूवुरित्याशयः।[4]

---

1. 'अधिसीमकृष्णे विक्रान्ते राजन्येऽनुपमत्विषि
   धर्मक्षेत्रे कुरुक्षेत्रे दीर्घसत्रं तु ईजिरे॥
   —वायुपुराणे (१।१३।१५)
2. द्रष्टव्यं—भारतवर्ष का बृहद् इतिहास, प्रथम भाग, पृ० २३१
3. 'ऋषिषूत्क्रामत्सु', निरुक्त० (१३।१२)
   वायुपुराणे (९९।२५७)
4. भारतवर्ष का बृहद् इतिहास, द्वितीय भाग, पृ० २३४
   संस्कृत का शा० इ०, पृ० १४०

पाश्चात्यविदुषां सूत्रकाराणां तिथिविषयकाणि मतानि तु भिन्नानि भिन्नानि सन्ति। तत्र मैक्समूलरः सूत्रयुगं ६०० ई० पूर्वात् २०० ई० पूर्वपर्यन्तं मन्यते (द्रष्टव्यं—ए हिस्ट्री आफ एंशेण्ट संस्कृत लिटरेचर)। एवं च मैकडानलकीथादीनां[1] मतानि सन्ति। एतेषां मतानां कल्पनानां वा किं मूल्यमिति कृत्वा विदुषां विचारणाय विस्तरेण विवेचनं न क्रियते।

**सूत्रकाराणामैतिहासिकः क्रमः**—वैदिकवाङ्मयस्याध्येतृभिरेषां सूत्रकाराणां कालक्रमो बहुविधकल्पनाभिः प्रपञ्चितो दृश्यते। पाश्चात्यविदुषां दृष्टौ तु बौधायनः कल्पसूत्रकारः प्रायेण सर्वेषां प्राचीनतम आसीदिति।[2] किन्तु भगवद्दत्तमहोदया बौधायनमर्वाचीनतमं मन्यन्ते स्म।

श्रीमद्भिः पाण्डुरङ्गवामनकाणेमहोदयैः स्वकीये स्वनामधन्ये महाग्रन्थे 'धर्मशास्त्रीयेतिहासे'[3] सूत्रकाराणां निम्नलिखितः क्रमः प्रदर्शितः—

बौधायनः
|
गौतमः

1. We shall, therefore, probably not go very far wrong in assigning 500 and 200 B. C. as the chronological limits within which the sutra literature was developed."
—A History of Sanskrit Literature by A. Macdonell, p. 35.

2. "Mahadev, a commentor of the Kalpasutra of Satyashadha Hiranyakeshi, when enumerating the Taittiriya Sutras in successive order in his introduction, leaves out these four altogether, and names at the head of list the sutra of Bodhayan as the oldest, that of Bhardwaj, next that of Apastamba, next that of Hiranya Keshi, himself, and finally two names, not otherwise mentioned in this connection, Vadula and Vaikhanasa."
—The History of Indian Lit. by A. Weber, p. 99-100.

3. धर्म० इतिहासे प्रथमभागे, पृ० ८

|
आपस्तम्ब:
|
हिरण्यकेशी
|
आश्वलायन:, इति ।

श्रीकाणेमहोदय एतेषां सूत्रकाराणां कालं निर्णेतुं न शशाक, केवलमनुमानेन कल्पनया च तान् विक्रमात् चतु:शतीपूर्वं मेने ।[1]

तत्र हालैण्डदेशनिवासिना वैदिकविदुषा कालेण्डमहोदयेनायं क्रमो विनिश्चित: सूत्रकाराणाम्—

बौधायन:
|
वाजसनेय:
|
आपस्तम्ब:
|
भारद्वाज:
|
हिरण्यकेशी
|
वैखानस:[2], इति ।

एष कालैण्डप्रदर्शित: क्रमोऽपि इतिहासविरुद्धोऽस्ति इति इतिहासज्ञप्रवराणां भगवद्दत्तमहोदयानां मतम् । तत्र तेन हेतव: प्रादर्शिषत, तथा च हेतुमद्भि: प्रमाणैस्तेन क्रमो विनिश्चीयते स्म । तत्र प्रथमो हेतु: (१) बौधायन: स्वस्मिन् श्रौतसूत्रे प्रवराध्याये पाणिन्यादीन् वैयाकरणान् स्मरति । पाणिनिगणपाठे (४।३।१०६) वाजसनेयोऽपि स्मृतस्तेन बौधायनात् पाणिनि: पूर्वकालिक:, वाजसनेयस्तु वैशम्पा-

1. भ० श० इतिहासे, प्रथमभागे, पृ० ८

2. द्रष्टव्यं—वैखानसश्रौतसूत्रस्य कालेण्डकृतायां भूमिकायां, पृ० ९४
"That the Sutra of Baudhayana must have been known to the authors of Vajasaneya Brahman (p. 98).

यनस्यान्तेवासी इति पूर्वमेव प्रतिपादितः। पाणिनेरुल्लेखात् (प्रवराध्याये) बौधायनः सर्वेषाम् अर्वाचीनतमः सूत्रकार इति मन्यामहे वयम्। तथाहि—आचार्यो बौधायन इतिहासपुराणाभ्यां श्लोकानुदाहरति, यथा, तेन महाभारतस्यादिपर्वण एका गाथा उदाहृता—

'स्तुवतो दुहिता त्वं वै याचतः प्रतिगृह्णतः।
अथाहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः॥'[1]

तथा च बौधायनश्रौतसूत्रे महाभारतकालीनः सुरथः शैव्योऽपि स्मृत।[2]

(३) स्वस्मिन् धर्मसूत्रे बौधायन आपस्तम्बादीन् मुनीन् तर्पयति—'काण्वं बौधायनं तर्पयामि, आपस्तम्बं सूत्रकारं तर्पयामि, सत्याषाढं हिरण्यकेशिनं तर्पयामि, वाजसनेयिनं याज्ञवल्क्यं तर्पयामि, आश्वलायनं शौनकं तर्पयामि। व्यासं तर्पयामि, (बौ० धर्म० २।५।६।१४), एते सर्वे आपस्तम्बादय आचार्या बौधायनात्पूर्ववर्तिन आसन् इत्यत्र न कश्चित् संशयः। काण्वो बौधायनस्तु (शुक्लयजुःशाखायाः प्रवक्ता) श्रौतसूत्रकाराद् बौधायनात्पूर्ववर्त्ती, तेन स पृथक् चासीत्।

(४) अनेन श्रौतसूत्रकारेण बौधायनेन 'विंशत्यध्यायनिबद्धस्य मीमांस्यशास्त्रस्य कृतकोटिनामधेयं भाष्यं कृतम्, तद्ग्रन्थबाहुल्यादुपेक्ष्य किञ्चित् संक्षिप्तमुपवर्षेण कृतम्', (प्रपञ्चहृदये, पृ० ३६)। अयमुपवर्षाचार्यो वैयाकरणपाणिनेः समानकालिकस्तेन बौधायनो प्राचीनतमः सूत्रकारः। अत एव इतिहासज्ञप्रवरेण भगवद्दत्तमहोदयेन तेषां सूत्रकाराणामयं क्रमो विनिश्चितः—

कृष्णद्वैपायनो व्यासः
|
सुमन्तुः, जैमिनिः, वैशम्पायनः, पैलः, शाकपूणिः;
|
याज्ञवल्क्यो वाजसनेयः, औपमन्यवः;

---

1. बौधायनधर्मसूत्रे (२।२।२७) तथा च महाभारते (१।७८।१०)

2. 'अथ हैतेन सुरथः शैव्य ईजे आस्तिष्ठ्यं परतामियामिति'
बौ० श्रौ० १८।१९)

तुलनीयम्—'अहं तु राज्ञः सुरथस्य पुत्रो यं कोटिकास्येति विदुर्मनुष्याः।
अथाब्रवीद् द्रौपदी राजपुत्री पृष्टा शिबीनां प्रवरेण तेन॥
महाभा० वनपर्वणि (२६६।६७)

|
शाकटायनः (काण्वो बौधायनस्तस्य गुरुः)
|
शाम्बव्यः, यास्कः
|
शौनकः
|
आश्वलायनः, गौतमादयश्च
|
गोभिलः मशकादयश्च ।
|
आपस्तम्बः, सत्याषाढः (हिरण्यकेशी)
|
कात्यायनः, पाणिनिः,
|
बौधायनः[1]

## कल्पानां प्रणेतारः

इदानीमपि सूत्रकाराणां द्विविधो विभागो अवलोकनीयः, प्रथमविभागे प्राचीनसूत्रकारा येषां सूत्रग्रन्था नोपलब्धाः, द्वितीयविभागे—उपलब्धसूत्राणां प्रणेतारस्तत्र प्रथमविभागे—

(१) पैलः
(२) ऐतरेयः
(३) पाराशरः
(४) शाम्बव्यः
(५) यास्कः
(६) जातूकर्ण्यः
(७) पैङ्ग्यः
(८) शौनकः
(९) आसुरिः
(१०) वैशम्पायनः
(११) हारीतजाबालौ द्वौ
(१२) कठः
(१३) कालापः
(१४) काश्यपः
(१५) आरुणपराजी
(१६) आश्मरथ्यः
(१७) आलेखनः
(१८) धानाञ्जयः (सुषामा)

1. भारतवर्ष का बृहद् इतिहास, प्रथम भाग, पृ० २८०, २८२

(१९) शाण्डिल्यः (२१) भाल्लविः
(२०) गौतमः

अत्र एषां सूत्रकाराणां सारेण किञ्चिदैतिह्यं संगृह्यते।

# अनुपलब्धानां कल्पानां प्रणेतारः

## प्राचीनसूत्रकाराः

**पैलः**—अयं व्यासस्य प्रथमः शिष्य ऋग्वेदसंहितायाः प्रवचनकारो यश्च सूत्रकार आसीदिति च स्मर्यते। कौषीतकिशौनकाश्वलायनादिभिः।[1] पाणिनिना चाष्टाध्यायीग्रन्थे पैलाचार्यः स्मृतो दृश्यते, पाणिनिसूत्रेण[2] चैतद् विज्ञायते यत् पैलस्य माता पीलानाम्नी स्त्री बभूव। परन्तु नेदानीं पैलस्य कश्चित् सूत्रग्रन्थ उपलभ्यते।

**ऐतरेयः**—ऐतरेयब्राह्मणस्य प्रणेत्रा महीदासेनैतरेयेण कल्पसूत्रमपि विरचितमासीदिति ज्ञायते—

नव श्राद्धानि पञ्चाहुराश्वलायनशाखिनः।
आपस्तम्बाः षडित्याहुर्विभाषामैतरेयिणः॥[3]

अनेन वचनेन ऐतरेयकल्पस्यास्तित्वमनुमीयते।

**शाम्बव्यः**—शाम्बव्यविरचितं कौषीतकिगृह्यसूत्रमिदानीं प्रकाशितमुपलभ्यते।[4] अस्मिन् ग्रन्थे मनुस्मृतेश्श्लोका उद्धृता दृश्यन्ते। जैमिनीयश्रौतभाष्ये भवत्रातेनोल्लिखितम्—'तदेव चतुर्विंशत्यावदत् शाम्बव्यः।' अनेन प्रमाणेन शाम्बव्यकल्पस्यास्तित्वं च सम्भाव्यते। पाणिनिना गर्गादिगणे 'शम्बु' नाम पठितम्, तेन शाम्बव्यस्य पिता शम्बुरिति चानुमीयते, महाभारताच्च विज्ञायते यत् शाम्बव्येन वनं यियासुर्धृतराष्ट्र उपदिष्टः—

ततः स्वाचरणो विप्रः सम्मतोऽर्थविशारदः।
शाम्बव्यो बह्वृचो राजन् वक्तुं समुपचक्रमे॥[5]

---

1. 'सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यमहाभारतधर्माचार्याः',
   आश्व० गृह्य० (३।३।५)
   कौषी० गृह्य० (२।५।३)
2. अष्टा० (४।१।११८)
3. शिवस्वामिकृते धर्मशास्त्रसंग्रहे, पृ० १७५
4. नत्वा कौषीतकाचार्यं शाम्बव्यं सूत्रकृत्तमम्।' (शाम्बव्यकृतकारिकायाम्)
5. आश्रमवासिकपर्वणि (१०।१९)

अनेन शाम्बव्य ऋग्वेदीय आचार्यो विनिश्चीयते, येन स्वस्य स्वतन्त्रं वैदिकचरणञ्च प्रवर्तितमिति च विज्ञायते।

**पराशरः**—पैलशिष्यस्य वाष्कलस्य चत्वारः शिष्या आसँस्तेषु चैकः पाराशरो बभूव। अनेन पाराशरेण काचित् ऋग्वेदशाखा (पाराशरशाखा) प्रोक्ता, पाराशरकल्पश्च प्रणीतः पतञ्जलिना महाभाष्ये चोदाहृतम्—

'पाराशरकल्पिकः' (४।२।६०)

**जातूकर्ण्यः**—उपर्युक्तस्य पाराशरस्य कश्चित् सतीर्थ्यो जातूकर्ण्याख्यः कल्पसूत्रकार[1] आसीत्। कविराजसूरमचन्द्रमहोदयस्य मतमिदमतिभ्रमपूर्णमस्ति—'यदयं पाराशरः, तस्य सतीर्थ्यो जातूकर्ण्यश्च पाराशर्यव्यासस्य पूर्वजो बभूवतुरिति'।[2] पैलशिष्यस्य वाष्कलेः शिष्यौ पाराशरजातूकर्ण्यौ कथं व्यासस्य पूर्वजौ भवितुमर्हतः। वस्तुतस्तु पाराशरजातूकर्ण्यौ गोत्रनामनी स्तस्तेनात्र महाभ्रान्तिरुत्पन्ना।

**पैङ्ग्यः**—पैलस्य शिष्यपरम्परायां शाकपूणेः शिष्यः पैङ्गिरासीत्, तस्य पिता पिङ्गिः, पिङ्गेः पुत्रः पैङ्गिर्मधुकनामा। शतपथब्राह्मणे बृहद्देवतायाञ्च पैङ्ग्यस्य (मधुकस्य) वचनान्युपलभ्यन्ते। महाभाष्ये, काशिकायां च पैङ्ग्यकल्पसूत्रं पुराणप्रोक्तेषु कल्पेषु परिगणितम्।

**यास्कः**—प्रख्यातो निरुक्तकारो यास्कमुनिरपि कस्यचित् कल्पस्य कर्त्ता बभूव—'कल्प इति ज्योतिष्टोमानुष्ठानपद्धतिर्यास्कवाराहबौधायनीयाः।[3]' यास्कर्षिः स्वमिन् युगे महान् याज्ञिकोऽभवत् तथाहि चोच्यते महाभारते—यदनेनैव यास्केन नैकयज्ञाः कृताः।[4]

---

1. जातूकर्ण्यधर्मसूत्रस्य वचनानि याज्ञवल्क्यस्मृतेर्बालक्रीडाटीकायामुपलभ्यन्ते।
2. 'ऋग्वेद का अध्येता पैल था। उसका शिष्य वाष्कल हुआ। वाष्कल के चार शिष्यों में एक पराशर था। उसने पराशर संहिता का प्रवचन किया। उसका प्रोक्त ब्राह्मण और कल्प भी हो सकता है। वह एक व्यास था।' (आयुर्वेद का इतिहास, पृ० २१४)
3. हारलता, पृ० ८
4. यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्।
   स्तुत्वा मां शिपिविष्ट इति यास्क ऋषिरुदारधीः।
   मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान्॥
   (महाभारते शान्ति० ३४२।७२–७३)

**शौनकः**—आश्वलायनगुरुणा शौनकेन कुलपतिनाऽपि कल्पसूत्रं रचितम्, तथ्यमिदं षड्गुरुशिष्येण प्रकटीकृतम्—

शौनकस्य तु शिष्योऽभूद् भगवानाश्वलायनः।
स तस्याच्छ्रुतसर्वज्ञः सूत्रं कृत्वा न्यवेदयत्॥
प्रबोधपरिशुद्धार्थं शौनकस्य प्रियं त्विति।
सहस्रखण्डं स्वकृतं सूत्रं ब्राह्मणसन्निभम्।
शिष्याश्वलायनप्रीत्यै शौनकेन विपाटितम्॥[1]

**आसुरिः**—महाभाष्ये (४।१।१६) पतञ्जलिना आसुरिकल्पः स्मृतः नेदानीं स लभ्यते। शतपथब्राह्मणस्य वंशपाठे च आसुरिरिति आचार्यः स्मर्यते।[2] आसुरिः कस्य वेदस्याचार्य आसीदिति न निश्चीयते।

**वैशम्पायनः**—'दुष्कृतं चरकाचार्याय'[3] इति वाजसनेयेन याज्ञवल्क्येन शुक्लयजुषु स्वगुरुरेव वैशम्पायनः स्मर्यते। अनेन वैशम्पायनेन कश्चित् सूत्रग्रन्थोऽपि प्रणीत इति प्रमाणैर्विज्ञायते। आश्वलायनेनापि[4] वैशम्पायनः—सूत्राचार्य उक्तः।

**जाबालः**—अयं चोपनिषत्सु प्रसिद्धः सत्यकाम जाबालः। अनेन शुक्लयजुषां जाबालशाखा, जाबालब्राह्मणम्, जाबालकल्पः, जाबालधर्मसूत्रमिति, एतानि प्रोक्तानि। अस्य गुरुपरम्परा[5] चात्र द्रष्टव्या—

उद्दालक आरुणिः
|
वाजसनेयो याज्ञवल्क्यः
|
मधुकः पैङ्ग्यः
चूलो भागवित्तिः
जानकिरायस्थूणः
|
जाबालः सत्यकामः

---

1. द्रष्टव्यं—एंशेण्ट हिस्ट्री ऑफ संस्कृत लिटरेचर—मैक्समूलर, पृ० २१०–२१२
2. बृ० उ० (२।६।३)
3. वाज० सं० (३०।१८)
4. आश्वलायनगृ० (३।३।५)
5. बृहदारण्यकोपनिषदि (६।३।७–१२)

**हारीतः**—बृहदारण्यके हि (४।६।३) कुमारहारीत आचार्यो निर्दिष्टः। अनेन हारीतेन श्रौतगृह्यधर्मसूत्राणि च प्रणीतानि।[1]

**कठकलापिताण्ड्यादीनां सूत्राणि** वैशम्पायनस्य प्रसिद्धेषु नवशिष्येषु चैते त्रयोऽतिविख्याताः सूत्रकाराः। तेष्वपि कठस्य सूत्रं लोकेषु पाणिनिसूत्रतुल्यं सुविहितमासीत्—'यथेह भवति पाणिनीयं महत् सुविहितम् इत्येवमिहापि स्यात् 'कठं महत् सुविहितमिति।[2] इदानीं काठकगृह्यसूत्राणि तु प्रकाशितानि विद्यन्ते।

**काश्यप**—अयं कस्याः शाखायाः प्रवक्ता इति न ज्ञायते। अस्य कल्पसूत्रं पाणिनिना पुराणप्रोक्तेषु कल्पसूत्रेषु चाभिहितम्।[3]

**आरुणपराजी**—काशिकामेवायं सूत्रकारः स्मर्यते[4], अस्याचार्यस्य शुद्धं नामधेयम् 'आरुणपराशर' इति प्रतीयते।

**आश्मरथ्यालेखनौ**–एतवाचार्यौ कृष्णयजुर्वेदस्य कर्मकाण्डेषु विश्रुतावास्ताम्। अनयोर्मतानि भारद्वाजश्रौतसूत्रे, आपस्तम्बश्रौतसूत्रे च बहुधोल्लिखितानि दृश्यन्ते तथा चोक्तं काशिकाकारमहोदयेन—तत्र आश्मरथ्यालेखनसंज्ञकयोराचार्ययोर्मतनिर्देशो न केवलं भारद्वाजसूत्रेऽपि तु अन्येष्वपि सूत्रेषु तट्टीकासु चोपलभ्यते। भारद्वाजश्रौतगृह्यपरिशेषसूत्रेषु च यथैतयोर्निर्देशो बाहुल्येनोपलभ्यते तथैवापस्तम्बसूत्रेऽपि।'··· आश्मरथ्यालेखनयोरैतिह्ये विचार्यमाणे बौधायनप्रवरसूत्रे वशिष्ठगोत्रीये कुण्डिनगणे आश्मरथस्तथा च भृगुगोत्रीये वत्सगणे आलेखनाः निर्दिष्टाः। कात्यायनप्रवरसूत्रानुसारेण आश्मरथ्या विश्वामित्रगोत्रेऽन्तर्गताः।[5]

**धानाञ्जय[6]शाण्डिल्यगौतमभाल्लविनामानः सामवेदस्याचार्याः**—लाट्यायनश्रौतसूत्रे चैतेषामाचार्याणां मतान्युद्धृतानि, तेनावगम्यते

1. द्र०—आयुर्वेद का इतिहास, पृ० २१९—२२०
2. महाभाष्ये (४।२।६६)
3. 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिः' (अष्टा० ४।३।१०३), तथा चाह जयादित्यः 'काश्यपेन प्रोक्तं कल्पमधीयते काश्यपिनः;'
(काशिकायाम् ४।३।१०३)
4. काशिकायाम् (४।३।१०५)
5. भारद्वाजश्रौतस्य प्रास्ताविके (पृ० २४—२५)
6. महाभारते (२।३६।२४)
'धनञ्जयानामृषभः सुषामा स्मृतः'।

सर्वैरेभिराचार्यैः कल्पसूत्राणि प्रणीतानीति । गौतमस्य तु धर्मसूत्रमिदानीमपि लोकेषु विश्रुतं विद्यते ।

## उपलब्धाः श्रौतसूत्रग्रन्थाः

अधोलिखितानि श्रौतसूत्राणि प्रकाशितान्युपलभ्यन्ते—

ऋग्वेदीयानाम्—

(१) आश्वलायनश्रौतसूत्रम्
(२) शांखायनश्रौतसूत्रम्

कृष्णयजुर्वेदीयानामष्टौ श्रौतसूत्राणि[1]—

(१) भारद्वाजश्रौतसूत्रम्
(२) वाराहश्रौतसूत्रम्
(३) सत्याषाढश्रौतसूत्रम्
(४) आपस्तम्बश्रौतसूत्रम्
(५) बौधायनश्रौतसूत्रम्
(६) मानवश्रौतसूत्रम्
(७) वाधूलश्रौतसूत्रम्
(८) वैखानसश्रौतसूत्रम्

सामवेदस्य त्रीणि श्रौतसूत्राणि प्रकाशितानि—

(१) लाट्यायनश्रौतसूत्रम्
(२) जैमिनीयश्रौतसूत्रम्
(३) माशकश्रौतसूत्रम्

अथर्ववेदस्य एकमात्रं श्रौतसूत्रं—

(१) वैतानश्रौतसूत्रम् विद्यते ।[2]

---

1. शुक्लयजुर्वेदीयानां एकमात्रं कात्यायनश्रौतसूत्रं विद्यते भुवि ।
2. अथर्ववेदीयानां केवलं द्वे सूत्रे आस्ताम् । कौशिकसूत्रम्, वैतानसूत्रं च । तत्र वैतानसूत्रे श्रौतकर्माणि, कौशिकसूत्रे तु गृह्यकर्माणि प्रोक्तानि, तथा हि भवत्रातेनोदाहृतम्—'उक्तानि वैतानिकानि, इदानीं स्मार्तानि वक्ष्यामः । तेषां गृह्यसंज्ञा', तथा हि शौनकेनोक्तम्—उक्तानि वैतानिकानि, गृह्याणि वक्ष्यामः (आश्व० गृ० १।१।१ भवत्रातविवरणम्) तत्राधिसीमकृष्णस्य राज्यकाले द्वौ वेदाचार्यौ बभूवतुः—श्रविष्ठायाश्च पुत्रौ द्वौ—पिप्पलादश्च कौशिकः ।' (हरि० पु० ३।१।१२)

एषां सर्वेषां श्रौतसूत्राणां विस्तरेण परिचयो अनावश्यको भवेदिति मत्वा अत्र विरम्यते।

**कात्यायनस्येतिवृत्तम्**—कात्यायनश्रौतसूत्रस्य रचयितुः कात्यायनस्य मूलपुरुषः 'कतः' इति नामधेयः ऋषिरासीत्, पाणिनिना 'गर्गादिभ्यो यः' (अष्टा० ४।१।१०५) इत्यस्मिन् सूत्रे 'कतपदं' पठितम्, कतस्य पुत्र 'कात्य' इति कथ्यते, तस्य कश्चिदपि वंशजः 'कात्यायन' इति अभिधानं लब्धुमर्हति। अतः 'कात्यायन' इति गोत्रनाम, श्रौतसूत्रस्य कर्त्तुः कात्यायनस्य वास्तविकं नाम किमासीदिति ज्ञातुं न पार्यते। पुरुषोत्तमदेवकृते त्रिकाण्डशेषे कात्यायनस्य पञ्चाभिधानान्याख्यायन्ते—

मेधावी च मेधाजित्कात्यः कात्यायनश्च सः।
पुनर्वसुर्वररुचिः.................... ...... ॥
(त्रिकाण्डशेषे २।२५)

भगवता पतञ्जलिनापि कात्यायनः क्वचित् 'कात्य'[1] इति नामधेयेन स्मृतः। स कात्यायनो 'वररुचिः' इति नामधेयेनापि स्मर्यते।[2] मुद्राराक्षसनाटकस्य नन्दस्य मन्त्री राक्षसो 'वररुचिरेव' कथासरित्सागरे कात्यायनः कथितः, स च तत्र (कथासरितसागरे) पाणिनेः प्रतिद्वन्द्वी वार्तिककारः कात्यायन उच्यते। पण्डितयुधिष्ठिरमीमांसकानां मते प्राचीनवाङ्मये अनेके कात्यायनाभिधा मुनयो बभूवुरिति। तेषाम्मतमधः पठितव्यम्—'कात्यायन गोत्र प्रत्ययान्त है, इससे इतना स्पष्ट है कि कात्यायन वंश का मूलपुरुष कत है। प्राचीन वाङ्मय में अनेक कात्यायनों का उल्लेख मिलता है। एक कात्यायण कौशिक है, दूसरा आंगिरस, तीसरा भार्गव, चौथा द्वयामुष्यायण। स्कन्दपुराण, नागरखण्ड अध्याय १३० श्लोक ७१ के अनुसार एक कात्यायन याज्ञवल्क्य[3] का पुत्र है। इसने वेदसूत्र की रचना की—

'कात्यायनं सुतं प्राप्य वेदसूत्रस्य कारकम्।
कात्यायनाभिधश्च यज्ञविद्याविचक्षणः।

---

1. 'प्रोवाच कात्यस्तेनासिद्धिः······।' महाभाष्ये (३।२।३)
2. नाम्ना वररुचिः किं च कात्यायन इति श्रुतः' कथासरित्सागरे (१।२।१)
3. सम्भवतो अनेनैव याज्ञवल्क्यस्य (वाजसनेयस्य) पुत्रेण कात्यायनेन 'कात्यायनीयशाखा', कात्यायनश्रौतसूत्रं च' प्रणीते इति मन्तव्यम्।

पुत्रो वररुचिर्यस्य बभूव गुणसागरः ॥
(स्क० ना० ख० १३०।७०–७१, १३१।४८)

स्कन्दपुराण में ही इस कात्यायन को यज्ञविद्याविचक्षण कहा है और उसके वररुचि नामक पुत्र का उल्लेख है। याज्ञवल्क्य पुत्र कात्यायन ने ही श्रौत, गृह्य, धर्म और शुक्ल यजुः पार्षद आदि सूत्र ग्रन्थों की रचना की थी। यह कात्यायन कौशिक पक्ष का है, इसने वाजसनेयों के आदित्यायन को छोड़कर आंगिरसायन स्वीकार कर लिया था। वह स्वयं प्रतिज्ञापरिशिष्ट में लिखता है—'एवं वाजसनेयानामङ्गिरसां वर्णनं सोऽहं कौशिकपक्षशिष्यः पार्षदः पञ्चदशसु तत्तच्छाखासु साधीयः क्रमः।' यही कात्यायन शुक्ल यजुर्वेद के आंगिरसायन की कात्यायन शाखा का प्रवर्तक है। कात्यायन शाखा का प्रचार विन्ध्य के दक्षिण में महाराष्ट्र आदि प्रदेशों में रहा है।

हमारा अमुमान है कि याज्ञवल्क्य का पौत्र, कात्यायन का पुत्र 'वररुचि कात्यायन' अष्टाध्यायी का वार्तिककार है।' द्रष्टव्यम्—'संस्कृत व्याकरणशास्त्र का इतिहास, भाग १, पृष्ठ २११–२१२)। मतमिदं सत्यं प्रतिभाति मे, बृहदारण्यकोपनिद्ग्रन्थाच्चैतद्[1] ज्ञायते यद् याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः, सम्भाव्यते चेदं, तस्य याज्ञवल्क्यस्य द्वितीयायाः पत्न्या कात्यायन्याः पुत्र एव 'कात्यायन' इति नामधेयेन प्रसिद्धोऽभवत्। अननैव कात्यायनेन बहवस्तु वैदिकग्रन्था विनिर्मिताः, इति वक्तुं पार्यते। महतां मनीषिणां पण्डितप्रवराणां भगवद्दत्तमहोदयानां च मते कात्यायनमुनिस्तु शौनकस्य शिष्यः आश्वलायनस्य च सतीर्थ्य आसीत्, अनेन कात्यायनेन शुक्लयजुर्वेदस्य कात्यायनीयशाखा प्रोक्ता, कात्यायनश्रौतसूत्रं च प्रणीतम्, अनेनैव कात्यायनेन भ्राजनाम्नां श्लोकानां च प्रणयनं कृतम्। सर्वानुक्रमण्याः टीकाकारः षड्गुरुशिष्यस्त्वेवं सूचयति[3] मैक्समूलरोऽपि षड्गुरुशिष्यस्य मतं स्वस्मिन् ग्रन्थे

---

1. 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च, मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञेवेतर्हि कात्यायनी'··· ।' (४।५।१)

2. 'आश्वलायन का साथी पर वयः में बहुत छोटा साथी मुनि कात्यायन था। कात्यायन से कुछ बड़ा और मुनि व्याडि का भागिनेय वैयाकरण पाणिनि था। इनका समकालिक और जैमिनि के सूत्रों पर भाष्य

उदाहृतवान्[1]। अत एवमैतिह्ये विचार्यमाणे श्रौतसूत्रकारः कात्यायनः वाजसनेयस्य याज्ञवल्क्यस्य पुत्रः शौनकस्य शिष्यश्च आसीदिति निश्चिनुमः। या तिथिरितिहासे शौनकस्य सैव कात्यायनस्य, अयं सूत्रकाराणामैतिहासिकः क्रमस्तु पूर्वमेव विचारितोऽस्माभिरिति अलं तदावृत्त्या। कात्यायनस्य जन्मस्थानमपि ज्ञातुं न पार्यते, तत्र कल्पनातरुप्ररोहणाय व्यर्थं प्रयत्नो न कृतो अस्माभिरिति बुद्धिमद्भिः ज्ञेयम्। यद्यपि कात्यायनशाखायाः प्रचारो महाराष्ट्रादिष्वासीत् तथापि एतेन कात्यायनस्य जन्मस्थानादीनां निर्णये न हि किञ्चित् प्रामाण्यं लभ्यते।

**कात्यायनेन कृतं वाङ्मयम्**—वेदाचार्येण पण्डितप्रवरेण विद्याधरशर्मणा कात्यायनश्रौतसूत्रस्य भूमिकायां (पृ० २८) कात्यायनप्रणीतानां

---

रचनेवाला आचार्य उपवर्ष था। कात्यायन अपने श्रौतसूत्र में जैमिनीय मीमांसा के सूत्रों का संक्षेप करता है।'

(भारतवर्ष का बृहद् इतिहास, प्रथम भाग, पृ० २८१)

तथा हि—षड्गुरुशिष्य आह—

शौनकस्य प्रसादेन कर्मज्ञः समपद्यत। कात्यायनमुनिर्मेने त्रयोदशकपंच तु॥ शौनकीयं च दशकं तच्छिष्यस्य त्रिकं तथा। द्वादशाध्यायकं सूत्रं चतुष्कं गृह्यमेव च॥ चतुर्थमाश्यकं चेति ह्याश्वलायनसूत्रकम्। सशिष्यशौनकाचार्यस्त्रयोदशकविन्मुनि.॥ वाजिनां सूत्रकृत्साम्नामुपग्रन्थस्य कारकः। स्मृतेश्च कर्त्ता श्लोकानां भ्राजनाम्नां च कारकः। अथर्वणां निर्ममे यः सम्यग्वै ब्राह्मकारिकाः। महावार्तिकनौकारः पाणिनीयमहार्णवे॥

यत्प्रणीतानि वाक्यानि भगवांस्तु पतञ्जलिः। व्याख्यच्छान्तनवीयेन महाभाष्येण हर्षितः।

तपोयोगाग्निर्ममे यः सर्वानुक्रमणीमिमाम्। सशिष्यशौनकाचार्यः सर्वग्रन्थार्थवर्तनात्॥

(सर्वानुक्रमण्याः भाष्ये, षड्गुरुशिष्यः)

1. From all these indications, we should naturally be led to expect that relation between Saunak and Katyayana was very intimate, that both belong to the same. Sakha, and that Saunaka was anterior to Katyayana.

A History of Ancient Sans. Lit., p. 119.

ग्रन्थानां सूची लिखिता, सा ह्यत्र यथावत् उद्ध्रियते—'(१) श्रौत्रसूत्रं, (२) गृह्यसूत्रम्, (हस्तलिखितानि गृह्यसूत्राणि पुस्तकभाण्डागारेषूपलभ्यन्ते, नेदानीतनं प्रकाशितम्), (३) धर्मसूत्रम् (प्रकाशितम्), (४) शुल्वसूत्रम्, (५) वाजसनेयप्रातिशाख्यम्, (६) ऋक्सर्वानुक्रमसूत्रम्, (७) शुक्लयजुःसर्वानुक्रमसूत्रम्, (८) छागलसूत्रम्, (९) कूर्मलसूत्रम्, (१०) प्रतिज्ञासूत्रम्, (११) अनुवाकसूत्रम्, (१२) सामसर्वानुक्रमणी, (१३) अथर्वसर्वानुक्रमणी, (१४) त्रिकण्डिकासूत्रम्, (१५) मूल्याध्यायः (स्नानसूत्रम्), (१६) वार्तिकपाठः, (१७) कर्मप्रदीपः, (१८) छन्दोगपरिशिष्टम्, (१९) कात्यायनस्मृतिः, (२०) गृह्यपरिशिष्टम्, (२१) श्राद्धसूत्रम्, (२२) रुद्रसूत्रम्, (२३) प्राकृतमञ्जरी, (२४) यूपलक्षणपरिशिष्टसूत्रम्, (२५) उपग्रन्थसूत्रम्, (२६) चरणव्यूहपरिशिष्टम्, (२७) पार्षदसूत्रम्, (२८) ऋग्यजुःपरिशिष्टम्, (२९) इष्टकापूरणसूत्रम्, (३०) प्रवराध्यायः, (३१) उक्थ्यशास्त्रम्, (३२) क्रतुसंख्यापरिशिष्टम, (३३) निगमपरिशिष्टम्, (३४) हौत्रपरिशिष्टम्, (३५) प्रसवोत्थानम, (३६) भाषिकसूत्रम्। चरणव्यूहे तु कात्यायनकृतानि अष्टादशपरिशिष्टान्युक्तानि।

अत्र कात्यायनस्य भ्राजनामानः श्लोकाः, वाररुचं काव्यं च न सम्मिलिते कृते। तत्र कात्यायनाचार्यस्यैते अष्टौ ग्रन्था हि लोकेषु ख्यातिं लब्धवन्तः—(१) श्रौतसूत्रम, (२) वाजसनेयिप्रातिशाख्यम्, (३) वार्तिकपाठः, (४) शुल्वसूत्रम, (५) ऋक्सर्वानुक्रमणी, (६) कर्मप्रदीपश्च, सप्तमाष्टमौ भ्राजश्लोकग्रन्थौ वाररुचं काव्यं चानुपलब्धौ स्तः। तथापि तावुभौ वाङ्मये प्रसिद्धौ स्तः।

## वाजसनेयप्रातिशाख्यस्य वार्तिकपाठस्य च कर्त्ता

वैयाकरणकात्यायनस्य वेदसूत्रकारककात्यायनस्य चैक्यं स्थापयितुं न कानिचिन् निश्चितानि प्रमाणान्युपलभ्यन्ते। पाश्चात्यदेशीयैरपि वैदिकविद्वद्भिर्विषयेऽस्मिन् सन्दिहानैरेवमेव स्थीयतेऽद्यपर्यन्तम्। मैक्समूलरस्य मते वाजसनेयिप्रातिशाख्यस्य कर्त्ता कात्यायनश्रौतसूत्रस्य वार्तिकानां च रचयिता एक एव कात्यायन आसीत्।[1] बेबरस्तु तयोरुभयोः कात्यायनयोर्भेदं चकार।[2] गोल्डस्करस्य मते एकेनैव कात्या-

1. द्रष्टव्यं—हिस्ट्री आफ एंशेण्ट संस्कृत लिटरेचर, पृ० ७१

2. द्रष्टव्यं—वाजनेयिप्रातिशाख्ये, भूमिकायां, बेबर।

यनेन वाजसनेयिप्रातिशाख्यं, वार्तिकपाठः, कात्यायनश्रौतसूत्रं च प्रणीतानि ।[1] श्रीयुधिष्ठिरमीमांसकास्तु प्रातिशाख्यस्य वार्तिकस्य च कर्त्तारं एकमेव कात्यायनं मेनिरे ।[2] परन्तु तन्मते स कात्यायनो याज्ञवल्क्यस्य पौत्रः, श्रौतसूत्रकारकात्यायनस्य पुत्रो वररुचिरासीत् इति पूर्वमेव संसूचितम् । तन्मते च वाजसनेयिप्रातिशाख्यवार्तिकयोरनेकत्र समानता वर्तते तेन तयोर्ग्रन्थयोः कर्त्रेकत्वं पुष्यति ।

**भ्राजसंज्ञकाः श्लोका वाररुचं काव्यं च**—षड्गुरुशिष्यस्य कात्यायनकृताया ऋक्सर्वानुक्रमण्याः वृत्तौ पाठं मैक्समूलरस्तु एवंविधं पपाठ—

'स्मृतेश्च कर्त्ता श्लोकानां भ्राजमानां च कारकः ।[3]'

मैक्समूलरो अत्र पाठशुद्धिं कर्त्तुं न शशाक, अत्र 'भ्राजमानां' इत्यस्य पदस्य स्थाने 'भ्राजनाम्नामिति' पाठस्तु शुद्धः । पतञ्जलिनापि भ्राजसंज्ञकाः श्लोका महाभाष्ये स्मृताः ।[4] पतञ्जलिनैव 'वाररुचं काव्यमपि' स्मृतम् ।[5] तत्र गुप्तवंशावतंसः श्रीसमुद्रगुप्तः कृष्णचरितनाम्नि काव्ये पूर्वकवीन् वर्णयन्—श्लोकमिमं सुश्लोक—

य: स्वर्गारोहणं कृत्वा स्वर्गमानीतवान् भुवि ।
काव्येन रुचिरणैव ख्यातो वररुचिः कविः ॥
न केवलं व्याकरणं पुपोष दाक्षीसुतस्येरितवार्तिकैर्यः ।
काव्योऽपि भूयोऽनुचकार तं वै कात्यायनोऽसौ कविकर्मदक्षः ॥
(कृष्णचरिते, श्लोकौ १४–१५)

---

1. द्रष्टव्यं—पाणिनिः हिज प्लेस इन संस्कृत लिटरेचर, पृ० २००
2. द्रष्टव्यं—शुक्लयजुर्वेदीयप्रातिशाख्य के अनेक रूप कात्यायनीय वार्तिकों से समानता रखते हैं । यह समानता भी इनके पारस्परिक सम्बन्ध की पुष्टि करती है ।' —संस्कृत व्या० शा० इतिहास भाग १, पृ० २१३
3. द्रष्टव्यं—'ए हिस्ट्री आफ संस्कृत लिटरेचर', पृ० २३५
4. 'भ्राजा नाम श्लोकाः । किं च भो श्लोका अपि प्रमाणम् ? यदि श्लोका अपि प्रमाणम्, अयमपि श्लोकः प्रमाणं भवितुमर्हति
'यदुम्बरवर्णानां घटीनां मण्डलं महत् । पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत् ॥' (महाभाष्ये, प्रथमाह्निके, प्रारम्भे)
5. महाभाष्ये (३।२।४)

**शुल्वसूत्रम्**—कात्यायनकृतोऽयं ग्रन्थश्च पर्याप्तां प्रसिद्धिं लभते। ग्रन्थोऽयं कात्यायनश्रौतसूत्रात्पृथग्भूतोऽपि परिशिष्टेष्वन्तर्गतः, तेनैव च महर्षिणा प्रणीतः। अल्पीयानप्ययं[1] ग्रन्थोऽतिकठिनो बहुभिर्व्याख्यातृभिर्व्याख्यातोऽपि दुर्विज्ञेय इवास्ति। आपस्तम्बीयशुल्वसूत्रम् बहुमानेन कात्यायनशुल्वसूत्रेण सहानुवदति।

**कर्मप्रदीपः**—अयमपि कर्मकाण्डस्य यज्ञविद्यायाश्च प्रसिद्धो ग्रन्थः। एष च कात्यायनकृतेष्वष्टादशपरिशेष्टेषु गण्यते। अत्र ग्रन्थे दर्भारणिमन्थनयन्त्रादिनां यज्ञोपकरणानां पितृतर्पणश्राद्धादीनां च विवरणं श्लोकेषु निबद्धमुपलभ्यते। श्रौतसूत्रस्य व्याख्यानार्थम् अस्य ग्रन्थस्य महती आवश्यकता चानुभूयते।

**कात्यायनश्रौतसूत्रस्याध्यायानां सूचना**— कात्यायनश्रौतसूत्रं षड्विंशत्यध्यायात्मकमस्ति तत्राध्यायानामेवंविधः क्रमः—

प्रथमेऽध्याये—परिभाषापाठः।
द्वितीयेऽध्याये—पौर्णमासेष्टिनिरूपणम्।
तृतीयेऽध्याये—पौर्णमासेष्टिनिरूपणम्।
चतुर्थेऽध्याये—दर्शेष्टिः पिण्डपितृयज्ञश्च।
पञ्चमेऽध्याये—चातुर्मास्यानि।
षष्ठेऽध्याये—निरूढपशुबन्धः।
आसप्तमाद् दशमाध्यायपर्यन्तम्—अग्निष्टोमः।
एकादशेऽध्याये—ब्रह्मत्वनिरूपणम्।
द्वादशेऽध्याये—द्वादशाहयज्ञः।
त्रयोदशेऽध्याये—गवामयनम्।
चतुर्दशेऽध्याये—वाजपेयः।
पञ्चदशेऽध्याये—राजसूयः।
षोडशसप्तदशाष्टादशेषु—अग्निचयनम्।
एकोनविंशेऽध्याये—सौत्रामणीयागः।
विंशेऽध्याये—अश्वमेधः।
एकविंशेऽध्याये—पुरुषमेधसर्वमेधपितृमेधाः।
द्वाविंशेऽध्याये—एकाहयज्ञाः।
त्रयोविंशेऽध्याये—अहीनयागाः।

---

1. शुल्वसूत्रे तु सप्तकण्डिकास्सन्ति।

चतुर्विंशेऽध्याये—सत्राणि ।
पञ्चविंशेऽध्याये—प्रायश्चित्तानि ।
षड्विंशेऽध्याये—प्रवर्ग्यः ।

**कात्यायनेन स्मृता आचार्याः**—कात्यायनेन त्वापस्तम्बवत् न हि कस्यचित् ब्राह्मणग्रन्थस्याथवा वेदशाखाया नाम्नोल्लेखः कृतः, अत्र श्रौतसूत्रे कस्यचिदपि ग्रन्थस्याभिधानं नोपलभ्यते, परन्तु केषुचित् सूत्रेष्वाचार्यः कात्यायनः कांश्चन आचार्यान् सस्मार, तत्र यत्र क्वचित् कात्यायन एतेषामाचार्याणां मतान्युदाजहार, तद् अवलोकनीयम्—

| | |
|---|---|
| वात्स्यः | (का० श्रौ० १।१।११) |
| जातूकर्ण्यः | (का० श्रौ० ४।१।२२) |
| कार्ष्णाजिनिः | (का० श्रौ० १।६।२०) |
| लौगाक्षिः | (का० श्रौ० १।६।२४) |
| भारद्वाजः | (का० श्रौ० १।६।२१) |
| बादरिः | (का० श्रौ० ४।३।१८) |

**कात्यायनश्रौतसूत्रस्य वाजसनेयिसंहिताशतपथब्राह्मणाभ्यां सह सम्बन्धः**—षड्गुरुशिष्येण कात्यायन एवंविधः स्मृतः—
'वाजिनां सूत्रकृत्' इति ।

अयं कात्यायनो वाजसनेयिनां सर्वासां शाखानामन्यतमः सूत्रकारो विद्यते । इदानीं न हि किमपि अन्यत् श्रौतसूत्रं वाजसनेयिनामुपलभ्यते । तत्रापस्तम्बेनोदाहृतानि वाजसनेयिनामनेकानि मतानि द्रष्टव्यानि—

१. चतुरश्रमसंभिन्नं षोडसीनं वाजसनेयिनः
समामनन्ति । (१६।१९।९)

२. सौर्यं त्रयस्त्रिंशे पूर्वस्मिंस्त्र्यहे
वाजसनेयिनः समामनन्ति । (२१।१३।२१)

३. खर्विकां तृतीयां वाजसनेयिनः
समामनन्ति । (२४।२।२३)

४. प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरदिति
वाजसनेयकम् । (१।४।७)

५. अशमीगर्भस्येति वाजसनेयकम् । (१।१।३),
तुल० (का० श्रौ० ४।७।२३)

इदानीं वाजसनेयिसंहिताया द्वौ पाठावुपलभ्येते—माध्यंदिनः काण्वश्च। एवं च शतपथब्राह्मणस्यैव चैतावुभौ पाठौ स्तः। कात्यायनः स्वस्मिन् श्रौतसूत्रे तु माध्यंदिनं पाठं जग्राह, तेनाचर्येण माध्यंदिन-संहिताया एव मन्त्रा उदाहृताः, वाजसनेयिसंहिताया मन्त्रास्त्वाचार्येण प्रतीकेनैवोदाहृताः, ये अल्पीयांसो मन्त्राः पूर्णरूपेणोदाहृतास्तेषां तु पूर्णपाठो ह्युदाहृतो दृश्यते। उभयविधो मन्त्रपाठस्तु परिशिष्टेषु द्रष्टव्यः।

प्रथमं परिभाषाणामध्यायं विमुच्य कात्यायनश्रौतसूत्रस्य सप्तदश अध्यायाः (आद्वितीयाद् अष्टादशपर्यन्तम्) शतपथब्राह्मणस्य प्रथमानि नवकाण्डान्यनुकुर्वन्ति, तथाहि कात्यायनस्य एकोनविंशपञ्चविंशा-ध्याययोः शतपथब्राणस्य द्वादशकाण्डं मूलम्, एवं प्रवर्ग्यसम्बन्धी षड्-विंशो (अन्तिमः) अध्यायः शतपथस्य चतुर्दशकाण्डस्य प्रथमेषु त्रिष्व-ध्यायेषु आधृतः।

कात्यायनश्रौतसूत्रस्य ये अध्यायाः ताण्ड्यब्राह्मणेन सह सम्बद्धाः, तत्सम्बन्धे त्वग्रे यथास्थानं विवेचनं भविष्यति।

**कात्यायनश्रौतसूत्रस्य जैमिनिसूत्रसधर्मता**—अत्र विषये पण्डित-विद्याधरशर्मणा प्रस्फुटीकृतानि वचनानि द्रष्टव्यानि—'एवं सर्वेष्वपि सूत्रकारेषु तत्तच्छाखामवलम्ब्य सूत्राणि रचयितुं प्रवृत्तेषु तत्तच्छाखाग-तानां केषांचिच्छाखान्तरगतानां चानुष्ठेयपदार्थानां मन्त्रक्रमाद्यवबोध-नार्थं सूत्राणि प्रणिनीषुर्महर्षिरयं कात्यायनस्तेभ्यो विलक्षणमेव स्वग्रंथ-मिमं मीमांसान्यायशबलमरीरचत्। विशेषोऽयमस्यैवासाधारणः। प्रायशो जैमिनिसूत्रस्थाऽऽनुपूर्व्यत्र ग्रन्थे बहुत्र बहुलं तत्तद्विचारस्थलेषु स्वीकृता-ऽनेन महर्षिणा, तद्यथा—

| **कात्यायनश्रौतसूत्राणि** | **जैमिनीयमीमांसासूत्राणि** |
|---|---|
| रथकारस्याधाने। (१।१।८) | वचनाद्रथकारस्य। (६।१।४४) |
| विष्णुर्वाऽमावास्यायां होत्राम्नानात् (३।३।२४) | विष्णुर्वा स्याद्धौत्राम्नानात्। (१०।८।५३) |
| अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत्। (१।७।६) | सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वे-षामुपलक्षणं प्रकृत्यन्वयात् (११।४।२८) |
| परार्थेष्वेकः कृतत्वात्। (१२।१।१४) | परार्थेष्वेकः (१२।४।३२) |

| कात्यायनश्रौतसूत्राणि | जैमिनीयमीमांसासूत्राणि |
|---|---|
| माघी वा क्रयश्रुतेः (१३।१।५) | माघी वैकाष्टकाश्रुतेः (६।५।३१) |
| छागं मन्त्राम्नानात् (६।३।१८) | छागो वा मन्त्रवर्णात् (६।८।३१) |
| सोमाच्चावभृथे (४।३।५) | तथाऽवभृथः सोमात् (७।३।१२) |
| प्रकृतेर्वा नामत्वात् (५।४।५) | प्रकृतं वा नामत्वात् (७।३।२१) |
| विषये लौकिकमयुक्तत्वात् (४।३।७) | विषये लौकिकः स्यात् (७।३।३०) |
| दध्नः सङ्घातात् (४।३।१२) | दध्नः सङ्घातसामान्यात् (८।२।२४) |
| द्वादशाहः सत्रमहीनश्च (१२।१।४) | सत्रमहीनश्च द्वादशाहः (८।२।२४) |
| होता वा वचनमन्त्रवर्णकारणेभ्यः (६।११।१२) | होता वा मन्त्रवर्णाद्वचनाच्च कारणानुपूर्व्याच्च (३।५।३७–३९) |
| उपगादर्शनाच्च (६।७।३) | उपगाश्च लिङ्गदर्शनात् (२।७।३०) |
| स तद्धर्मा कर्मयोगात् (१।६।१२) | स तद्धर्मा स्यात् कर्मसंयोगात् (६।३।२६) |
| कालान्तरेऽर्थवत्त्वं स्यात् (१।८।६) | कालान्तरेऽर्थवत्त्वं स्यात् (१२।३।५) |
| आहवनीययजतयो ध्रुवायाः (१।८।३७) | ध्रौवाद्वा सर्वसंयोगात् (१०।८।४८) |
| संख्याविकल्पो दानसंयोगे कृतत्वात् (१।८।२०) | संख्यासु तु विकल्पः स्यात् (१२।४।९) |
| विक्रयी त्वन्यः शूद्रसंयोगात् (६।७।४) | विक्रयी त्वन्यः कर्मणो अचोदित्वात् (५।१।१) |
| श्रुतिक्रमादानुमानिकत्वात् (१।५।६) | श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् (५।१।१) |
| एवं प्रवृद्धौ समं विभजेत् (८।३।४) | विवृद्धिः कर्मभेदात् (५।३।१) |
| कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् (७। । ) | दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् (६।५।३८) |

| कात्यायनश्रौतसूत्राणि | जैमिनीयमीमांसासूत्राणि |
| --- | --- |
| पशोः साम्नायस्य तदुक्तम् (४।३।४) | साम्नायं वातत्प्रभवत्वात् (८।२।१३) |
| हिरण्यगर्भं हृत्पृचा स्रुवाधारः (१६।२।३) | हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् (१०।३।१३) |
| नित्यानुवादोऽनुप्रयाजप्रतिषेधः (७।४।२६) | नित्यानुवादो वा कर्मणः स्यात् (१०।७।३८) |
| | का. श्रौ. भूमिकायां पृ. २७-२८ |

## आपस्तम्बस्येतिवृत्तं वाङ्मयं च

**आपस्तम्बस्येतिवृत्तम्**—एष महर्षिरापस्तम्बः प्राचीनसूत्रकारेषु परिगण्यते, यस्य कल्पसूत्रं सम्पूर्णमुपलभ्यते, आपस्तम्बगणः प्रवरसूत्रेषु भार्गवगोत्रान्तर्गतः परिसंख्यातो विद्यते, अस्य भार्गववंशस्य वैदिकवाङ्मयस्येतिहासपुराणानां च प्रणयने प्रथमं स्थानम्, नात्र कस्याचित् शंकाया अवसरो अस्ति ।[1] आह च बौधायनकल्पव्याख्याता यज्ञेश्वरः—

मेधां बौधायनो वो वितरतु सहितष्षष्टिसाहस्रशिष्यैः ।
यस्यापस्तम्ब एकाधिकशतयजुषां पारगो मुख्यशिष्यः ॥

बौधायनस्तु गोत्रनामधेयमिति मन्तव्यम् । तत्र गोत्रे अनेके बौधायना बभुवुरिति ज्ञेयम्, आपस्तम्बोऽपि गोत्रनाम प्रतीयते । अस्माकं कल्पसूत्रकारस्य आपस्तम्बस्य गुरुस्तु कण्वपुत्रः कण्वगोत्रीयो वा बौधायन आसीत्, पूर्वोक्तेन यज्ञेश्वरेणैव चोक्तम्—

कल्पामृतं क्षितिसुरप्रकराय योऽदात् ।
वेदाम्बुराशिमधिमथ्य निजप्रभावात् ॥
बौधायनाय मुनिवन्दितपादपद्मद्वन्द्वाय ।
कण्वतनयाय नमोऽस्तु तस्मै ॥[2]

तत्रापस्तम्बादयस्तु वैशम्पायनशिष्यस्य तैत्तिरीयस्य शिष्यपरम्परायां बभूवुः—'तैत्तिरीया नाम द्विभेदा भवन्ति, औरवेयाः, खण्डिकेयाश्चेति । तत्र खण्डिकेयानां पंचभेदा भवन्ति—'कालेता, हिरण्यकेशी,

1. ते वा एतेऽथर्वाङ्गिरसः एतदितिहासपुराणमभ्यवदन् ।' छां० उ० ३।४।२ न्यायभाष्ये च वात्स्यायनः (४।१।६२)
2. आ० श्रौ० भूमिकायां उद्धृताः, पृ० ७

भारद्वाजी, आपस्तम्बी चेति ॥' चरणव्यूहे द्वितीयखण्डे आपस्तम्बप्रवर्तितशाखास्तन्नाम्ना व्यवहारमूलप्रसिद्धिकीर्तनात् शाखाचार्यरूप एव भगवानापस्तम्बकल्पनिबन्धकृदपीत्यवगन्तुं शक्यते, तदीयकल्पसूत्रेषु 'इति वाजसनेयिन: समामनन्ति', 'इति एके', 'कङ्कतिब्राह्मणम्', काठका:', 'कालवबिब्राह्मणम्', 'कौषीतकिन:', 'छन्दोगब्राह्मणम्', ताण्डकम्'–'बह्वृचब्राह्मणम्', 'भाल्लविकम्', 'शाट्यायनकम्', 'शैलालिब्राह्मणम्' इत्यादीनि स्मृतानि। एते आचार्या अपि तत्रोदाहृता: कण्व:, कुणिक:, कौत्स:, कुत्स:, पुष्करस्यदि:, वार्ष्यायणि:, श्वकेतु:, हारीतश्च (आपस्तम्बधर्मसूत्रेषु)। आपस्तम्बसूत्राणि यत्र तत्र जैमिनीयमीमांसासूत्रैस्सह संवदन्ते, एतद्विषये तु पृथगग्रेऽभिधास्याम:।

पाणिनिना विदादिगणे (अष्टा० ४।१।१०४) आपस्तम्बस्य नाम पठितम्, महाभारतस्यानुशासनपर्वण्यपि सूत्रकार आपस्तम्ब: स्मृत:। श्रौतसूत्राणां प्रवरसूत्रेष्वपि आपस्तम्बगण: परिगणित:, एभि: प्रमाणैराचार्यापस्तम्बस्य प्राचीनता सुस्पष्टा सुव्यक्ता च भवति। आपस्तम्बस्य जन्मस्थानं निश्चेतुं न पार्यते। बूहलरनामा पाश्चात्यदेशोद्भवो विद्वान् महार्णवनाम्नो ग्रन्थस्य प्रमाणेनापस्तम्बमान्ध्रनिवासिनं मन्यते स्म। महार्णवनाम्नि तन्त्रग्रन्थे तु वेदशाखानामध्ययनक्षेत्राणि प्रचारस्थानानि वा कथितानि न सूत्रकाराणामिति वृत्तं तत्रास्ति। आन्ध्रजनपदेषु त्वापस्तम्बशाखा तन्त्रकाले प्रचलिता आसीत्, केवलमिदं तथ्यं महार्णवस्य वर्णनेन ज्ञायते। डा० रामगोपालस्य मतमिदं[1] मान्यतां लब्धवदिति प्रतीयते 'यदापस्तम्बस्तु युगन्धरजनपदानां निवासी भवेदिति', यत्तेन सूत्रकारेण स्वस्मिन् गृह्यसूत्रेऽयं श्लोक: पठित:—

'यौगन्धरिरित्येव नो राजा शाल्वीरवादिषु।
विवृत्तचक्रा आसीनास्तीरेण यमुने तव ॥[2]

पुराकाले शाल्वानां षड् जनपदा आसन्—
उदुम्बरास्तिलखला मद्रकारा युगन्धरा:।
भुलिङ्गा: शरदण्डाश्च शाल्वावयवसंज्ञिता: ॥[3]

---

1. India of Vedic Kalpsutras, p. Chap. V.
2. आप० गृह्य० (६।१५।५)
3. काशिकायाम् (४।१।१७३)

एषु युगन्धरदेशो वर्तमाने पञ्चनदे (पञ्जाबे-हरियाणे वा) कुरुक्षेत्रस्य दक्षिणे प्रदेशे स्थित आसीदिति प्रतीयते ।[1]

**आपस्तम्बकल्पस्योपक्रमः**—तत्रोदारबुद्धिना मनीषिणा सूत्रकारेण 'यज्ञं व्याख्यास्यामः' इति परिभाषायामेकविंशतियज्ञान् संक्षेपतो व्याख्याय तावन्मात्रेणानुपयोगात्–'अथातो दर्शपूर्णमासौ व्याख्यास्यामः इत्यारभ्य श्रौतहविसंस्थाः क्षामवत्यादयो नैमित्तिकाः चेष्टयः, प्रसङ्गात्, काम्याश्च विशेषतो व्याख्याता' इत्याह सुदर्शनाचार्यः 'सति चैवं यज्ञशास्त्रव्याख्या तत्परिगृहीतवेदव्याख्यानिबन्धा इव मीमांसादर्शनमपि यज्ञशास्त्रव्याख्यारूपमेवेति सिद्धं भवति ।'

कल्पसूत्रं चापस्तम्बीयं किमुपक्रममिति विचार्यमाणे, तत्र तावत् 'अथातो दर्शपूर्णमासौ व्याख्यास्यामः' इति दर्शपूर्णमासप्रकरणे प्रथमं सूत्रमिति तच्च विवृण्वन् रुद्रदत्तो 'अथ शब्दोऽयं प्रकरणारम्भे प्रायः प्रयुज्यते वृद्धैः। अनेन च 'ग्रन्थेन अथातो दर्शपूर्णमासौ' इत्यारभ्य कल्पसूत्रं प्रवृत्तमिति अवगम्यते। सायणादर्वाचीनः चौण्डपाचार्योऽपि प्रयोगरत्नमालायाम्—

त्रिंशत्प्रश्नात्मकं सूत्रमापस्तम्बमुनीरितम् ।
श्रौतगार्ह्यस्मार्तकर्म बोधव्यं तत्र पञ्चभिः ॥
इत्युपक्रम्य—
त्रयोविंशे ततः प्रश्ने सत्रायनाविधिक्रमः ।
चतुर्विंशे ततः प्रश्ने न्यायप्रवरहोत्रकम् ॥
पञ्चविंशे च षड्विंशे गार्ह्यमन्त्राः प्रपञ्चिताः ।
प्रश्नेऽथ सप्तविंशे स्यात् गार्ह्यतन्त्रविधिक्रमः ।
अष्टाविंशैकोनविंशप्रश्नयोः स्मार्तसत्क्रियाः ।
सामान्यतः त्रिंशे शुल्वविनिर्णयः ।
एवं सामान्यतस्सर्वप्रश्नानामर्थविनिर्णयः ॥

इति आपस्तम्बीयकल्पनिखिलप्रश्नार्थसंग्रहप्रसङ्गेन न्यायसंज्ञया परिभाषाभागस्य चतुर्विंशप्रश्नाधिकतामुपवर्णयन् न परिभाषाप्राथम्यपक्षं सूचयति ।

---

1. द्रष्टव्यम्—भारतवर्ष का बृहद् इतिहास, भाग–२, पृ० १८५
तथा—पाणिनिकालीन भारत, पृ० ७१–७४

ततोऽन्ये केचिदाचार्यास्तत्र तावत् मन्वते—आपस्तम्बकल्पे परिभाषाप्रश्नस्य प्राथम्यमस्ति, इति न्यायपक्षः। अनयोः पक्षयोश्च आद्ये पक्षे परिभाषासूत्राणि चतुर्विशः प्रश्नः, न तूपक्रमः, द्वितीये पक्षे तूपक्रम एव।

तत्रापस्तम्बसूत्रेष्टिहोत्रकल्पभाष्यविवरणारम्भे वृत्तिकारो रामाण्डारः—'इष्टिहोत्रपरिभाषाप्रकरणे उक्तेऽपि दर्शपूर्णमासप्रयोगसाकल्यार्थमिह भाष्यकारेणोच्यते इति भाष्यमवतारयति।

अत्र चोक्तेऽपि इत्येतेन परिभाषापाठः पूर्वमेवेति स्फुटमुक्तं भवति। अनेन च विचारेण परिभाषोपक्रमः कल्पनिबन्ध इति स्पष्टेन सिद्धो भवति। हिरण्यकेशिलाट्यायनद्राह्यायणशाङ्खायनकात्यायनाश्वलायनादिकल्पेषु परिभाषोपक्रमत्वं दृश्यते, एतच्च तत्तद्व्याख्यातृभिरपि स्पष्टमुक्तं भवति।

**आपस्तम्बसूत्रपाठसम्प्रदायः**—आपस्तम्बकल्पसूत्रेषु संहितारूपेणैव पाठः खण्डिका रूपा एव त्ववान्तरविभागाः कतिपयाः खण्डिकाभिश्च पटलाभिधाना विभागाः पटलैश्च कतिपयैः प्रश्ना इति स्थितिर्दृश्यते प्रायो हस्तलिखितसूत्रकोशेषु वेदभाष्यकारास्सायणाचार्या अपि तत्र तत्र अनुवाकारम्भादिषु 'अत्र कल्पः' इत्युपक्रम्य वाक्यान्युदाहरन्ति न च तानि खण्डिकात्मिकानि वा सूत्रात्मकानि च दृश्यन्ते किन्तु तत्तदपेक्षितवाक्यसमुदायात्मकान्येव।

रुद्रदत्तवृत्त्या सह कैलेण्डनाम्ना पाश्चात्यविदुषा मुद्रापिते जर्मनभाषारूपेणानूदिते तु संपुटत्रयं विभक्तसूत्रक्रमचतुर्विशतिप्रश्नघटितमेव विलसति। वाजपेयादिभागे कपर्दिभाष्येऽपि प्रायस्सूत्रपरिग्रहेण विवरणं दृश्यते। अनेन च कल्पसूत्रेष्वेषु सूत्रविभागेन पाठोऽपि साम्प्रदायिक इत्यवगन्तुं शक्यते।

**आपस्तम्बीयकल्पसूत्रविभागाः**—तदिदं कल्पसूत्रं—श्रौतसूत्रं, गृह्यसूत्रं, पितृमेधसूत्रं, धर्मसूत्रं शुल्वसूत्रमिति षड्भिर्भागैर्विभक्तो दृश्यते। अत्र केचनाचार्या रुद्रदत्तादयः परिभाषासूत्रभागं श्रौतसूत्रस्यान्ते चतुर्विशप्रश्नरूपं मन्यन्ते, तत्र धूर्तस्वाम्यादयस्तु तस्य भागस्य कल्पसूत्रादिमभागतां संगिरन्ते।

ततश्चात्रायमापस्तम्बकल्पसूत्रार्षक्रमस्संगृह्यते।

**श्रौतसूत्रम्**—ततस्त्रयोविंशतिप्रश्नपरिमितिः श्रौतसूत्रभाष्ये आदितस्त्रिषु प्रश्नेषु दर्शपूर्णमासौ, चतुर्थे याजमानम्, पञ्चमे—अग्न्याधेयपुनराधेये, षष्ठे–अग्निहोत्राग्न्युपस्थाने, सप्तमे निरूढपशुबन्धः, अष्टमे–वैश्वदेववरुणप्रघासाः, साकमेधशुनासीरोपाख्यानि चातुर्मास्यानि, दशमैकादशद्वादशेषु—अग्निष्टोमप्रातस्सवने, त्रयोदशे माध्यंदिनतृतीयसवने, चतुर्दशे—उकथ्यषोश्यातिरात्राप्तोर्यामिमेकादशिनी चातुर्होत्रपंचहोत्रषड्होत्रसप्तहोत्रादयः सोमप्रायश्चित्तं च, पञ्चदशे—प्रवर्ग्यः, षोडशसप्तदशयोरग्निचयनम्, अष्टादशे—वाजपेयराजसूयौ, एकोनविंशे सौत्रामणी–कोकिल्यौ, सावित्रनाचिकेतचातुर्होत्रवैश्वसृजानि, काम्याः पश्विष्टयश्च, विंशे–अश्वमेधपुरुषमेधसर्वमेधाः, एकविंशे—द्वादशाहोगवामयनमुत्सर्गिणामयञ्च। द्वाविंशे—एकाहा अहीनास्सवाश्च। त्रयोविंशे—सत्राणीत्येतानि श्रौतानि यज्ञकर्माणि निरूपितानि विद्यन्ते।

ततश्चतुर्विंशे परिभाषाप्रश्ने–सर्वयज्ञकर्मसाधारणन्यायाः प्रवरो होत्रं च निरूप्यन्ते।

**आपस्तम्बीयो मन्त्रपाठो: गृह्यसूत्रं च**—तदुक्तम्—'पञ्चविंशे च षड्विंशे, गार्ह्य मन्त्राः प्रपञ्चिताः। प्रश्नेऽथ सप्तविंशे स्यात् गार्ह्यतन्त्रविधिक्रमः॥' एव आपस्तम्बीयो मन्त्रपाठस्तु सर्वप्रथमं विण्टरनीत्सेन जर्मनविदुषा, आक्सफोर्डे (१८८९ ई० संवत्सरे) प्रकाशितः। आपस्तम्बीयमन्त्रपाठस्तु गृह्यकृत्यसम्बन्धिमन्त्राणां संग्रहोऽस्ति न तु आपस्तम्बस्य स्वतन्त्रा कृतिः। एते च मन्त्रा आपस्तम्बीयशाखाया भवेयुः। तस्माद् विण्टरनीत्सस्य मतमिदं[1] 'वितथं क्लिष्टं च प्रतिभाति मे यन्मन्त्रपाठस्तु काचित् स्वतन्त्रा कृतिरासीत् तैत्तिरीयशाखिनामिति।' आपस्तम्बीयशाखायाः प्रवचनकारस्तु आपस्तम्ब एव, तस्मात्स एव एषां मन्त्राणां सङ्कलनकर्त्ता नात्र शङ्का करणीया। यथा श्रौतसूत्रे

---

1. "The Mantrapath existed as an independent Vedic work, forming a kind of appendix to the literature of Taittiriyas......This proves, I believe, conclusively, that Apstamba is niether the author nor compiler of the Mantrapath, whieh must have existed as an independent collection before the Graya Sutra composed."

(आपस्तम्बीय मन्त्रपाठः, पृ० XXXVII, XXXVIII)

आपस्तम्बेनैव विभिन्नाभ्यः संहिताभ्यो मन्त्राः सङ्कलिताः, तथाहि गृह्या मन्त्रा अपि तेनैव सङ्कलिता भवेयुः, अत्र विण्टरनीत्समहोदयो न सत्यानुसंधित्सुरिव प्रतीयते, किन्तु तेन अपुष्टपक्ष एव परिगृहीतः ।

आपस्तम्बाचार्येण सप्तविंशे प्रश्ने गृह्यसूत्राणि प्रकीर्तितानि, तत्र सूत्रेषु विवाहोपनयनादीनि कर्माणि व्याख्यातानि, स नास्माकमयं विषयः तस्मान्न प्रपञ्च्यते विस्तरेण ।

**धर्मसूत्रम्**—भगवानापस्तम्ब अष्टाविंशैकोनविंशप्रश्नयोस्तु स्मार्तधर्मानाह । आपस्तम्बीयधर्मसूत्रं तु प्रसिद्धा प्रांजला च कृतिराचार्यस्य, तत्राचार्येण सूत्रेषु ये शास्त्रकाराः शास्त्राणि च स्मृतानि तान्यग्रे वक्ष्यामः ।

**शुल्वसूत्रम्**—त्रिंशे प्रश्ने ज्यामितिप्रख्यापकानि वेदिनिर्माणार्थं शुल्वसूत्राणि प्रोक्तान्याचार्येण, इदमपि यज्ञानामर्थे आवश्यकं ग्रन्थरत्नं विद्यते ।

**कृत्स्नस्य कल्पसूत्रस्य रचयिता आपस्तम्ब एव**—केचित् पाश्चात्यविद्वासो भारतीयमनीषिणश्च शाखाविशिष्टस्य श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्रादीनि च नैकस्याचार्यस्य कृतिं न कार्त्स्न्येन मन्यन्ते, ते तु कल्पसूत्रस्य तत्तद्भागानां पृथक् पृथक् प्रणेतॄनभिप्रयन्तीति । एवमापस्तम्बकल्पस्य विषये तेषां विमतयः प्रस्फुटिता अभूवन्, एतेषां पाश्चात्यविदुषामेतत्सम्बन्धीनि वचनानि न श्रद्धातुं शक्यानि । भारतीयपरम्परायां कृत्स्नस्य षड्भागात्मकस्य कल्पसूत्रस्य भगवानापस्तम्ब एव रचयिता इति एतद्देशीयीनां पुरातनानां विदुषां च सम्मतिः विनिर्णयश्च । डा० रामगोपालमहोदया[1] अपि एतन्मतं मन्वते, आपस्तम्बकल्पसूत्रस्य प्रथमसम्पादकगार्वे[2]महोदयानामप्येतन्मतमस्ति ।

---

1. "There is hardly any ground to doubt the tradition regarding these sutras."
   –Dr. Ram Gopal, India of Vepic Kalpsutras, Chap. I. p. 6

2. "The whole of the Sutra collection being the work of one and the same author has been proved by Prof. Buhler and Dr. Winternitz."
   —See–Garb's Introduction to Ap. SS. Vol. III, p. 13.

इदानीं आपस्तम्बमहर्षेः कल्पसूत्रमेव प्रधाना कृतिर्लोके विख्याता, किन्त्वन्ये बहवो ग्रन्था[1] अपि तस्य नाम्ना प्रसिद्धा दृश्यन्ते, तेषु आपस्तम्बस्मृतिः विद्वत्सु बहुचर्चिता विद्यते, तत्र धर्मशास्त्रकारेषु आपस्तम्बः प्राधान्येन गण्यते—

यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती ।
पराशरव्यासशङ्खलिखिता दक्षगोतमौ ।
शातातयो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ।
(याज्ञवल्क्यस्मृतौ आरम्भे १।४, ५)

**आपस्तम्बस्य तैत्तिरीयस्सह सम्बन्धः**—तथ्यमिदं तु पूर्वमेव विज्ञापितं यदापस्तम्बश्रौतसूत्रस्य तैत्तिरीयसंहिताया सह विशेषसम्बन्धो निश्चितः । आचार्येण बहुलांशेन मन्त्रास्तु तैत्तिरीयसंहिताब्राह्मणारण्यकेभ्यः समुदाहृताः, तत्राचार्येण स्वस्मिन् श्रौतसूत्रे 'विज्ञायते' इति सङ्केतेन प्रायेण तैत्तिरीयसंहिताब्राह्मणादिभ्यो मन्त्रा उदाहृताः, प्रवचनानि चोदाहृतानि, क्वचित् 'इत्युक्तमित्येतेनापि', मन्त्राः प्रवचनानि च सङ्कलितानि, एवमाचार्यो 'यथाब्राह्मणम्', 'यथासमाम्नातम्', 'वदति' चेभिः शब्दैश्च तैत्तिरीयाणां वचनान्युदाहरति (द्रष्टव्यं विशेषेण आपस्तम्बश्रौतसूत्रस्य गार्वेकृतभूमिकायाम्, तृतीयो भागः, पृ० २६०) ।

**अन्यासां वेदसंहितानां मन्त्राः**—याभ्यो अन्याभ्यः संहिताभ्य आचार्येण मन्त्राः सङ्गृहीतास्तास्सन्ति—मैत्रायणीयसंहिता, काठकसंहिता, कपिष्ठलसंहिता, ऋग्वेदसंहिता, अथर्ववेदसंहिता च । ब्राह्मणेषु तावत्—शतपथपञ्चविंशब्राह्मणयोर्वचनानि सङ्कलितानि, आपस्तम्बश्रौतसूत्रस्य प्रथमसम्पादकेन गार्वेमहोदयेन एतत्सर्वं भूमिकायां परि-

---

1. "इतना ही नहीं, आपस्तम्ब के नाम से गृह्य एवं श्रौतसूत्रसम्बन्धी बहुत से प्रकरण ग्रन्थ मिलते हैं, यथा आपस्तम्ब गृह्यप्रयोग, दर्शपद्धति, पूर्वप्रयोगकारिका, पौण्डरीकप्रयोग, महाग्निचयनप्रयोग, स्मार्तप्रयोग आदि । पुनः धर्मविषयक आपस्तम्ब यल्लजीम, आपस्तम्बश्राद्ध, आपस्तम्बरुद्र एवं शुल्वसम्बन्धी आपस्तम्ब शुल्वोपधान इत्यादि ग्रन्थ हैं ।……धर्मसूत्र ग्रन्थ के अतिरिक्त श्लोकबद्ध स्मृति भी आपस्तम्ब के नाम से उपलब्ध है । वह दस अध्यायों का छोटा ग्रन्थ है, इसमें २०७ श्लोक हैं । (वैदिक साहित्य और संस्कृति, पृ० २६२)

संख्यातम्, तत्सर्वमुद्धृत्य वयमस्य ग्रन्थस्य कलेवरं न वर्धयितुमिच्छामः। तदेतत्सर्वं तत्रैव द्रष्टव्यम्।

**स्मृताः ग्रन्थाः**–आचार्येणापस्तम्बेन स्वेषु सूत्रेष्वेते ग्रन्था उदाहृताः–
कङ्कतिब्राह्मणम् (१४।२०।४)
काठकाः (२१।२३।६)
कालबविब्राह्मणम् (२०।६।६)
छन्दोगब्राह्मणम् (१०।१।३, १०।२।५)
ताण्डकम् (२१।१६।५)
पैङ्गायनिब्राह्मणम् (५।१५।८)
बह्वृचब्राह्मणम् (१।२१।१०, इत्यादिषु)
भाल्लविकम् (२१।१६।१५)
शाट्यायनकम् (१०।१२।१३)
शाट्यायनिब्राह्मणम् (५।२३।३)
शैलालिब्राह्मणम् (६।४।७)

**चरकाणां प्रतिद्वन्द्वि वाजसनेयकम् (आपस्तम्बेन बाहुल्येनोदाहृतम्)**–चरकाणां वाजसनेयिनां परम्परा त्वस्य ग्रन्थादौ एवोपवर्णिता। याज्ञिककर्मसु तयोरुभयोर्महती प्रतियोगिता आसीदिति प्रतीयते, शतपथे वाजसनेयेन याज्ञवल्क्येन चरकाणां याज्ञिकविषयकाणि मतानि[1] बाहुल्येनोदाहृतानि दृश्यन्ते। एवमास्तम्बश्चरकाणां प्रधानाचार्योऽपि स्वस्य श्रौतसूत्रे वाजसनेयिनामेव मतानि बाहुल्येनादाजहार–तत्र–वाजसनेयकमिति चैतेषु सूत्रेषु[2]–१।४।७; २।६।८; ४।१।५; ५।१।३; ६।२।१६; ८।२।१७; ८।६।४; ६।११।२३; १०।३।४; ११।१।१५; १४।२४।१२; १६।४।८; १७।५।८; २०।८।११; २१।२३।१३ इत्येवमादिषु। 'वाजसनेयिन' इति चैतेषु सूत्रेषु–

1. (क) "अथ पृषदाज्यं तदु ह चरकाऽध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति प्राणः पृषदाज्यमिति वदन्तस्तदु ह याज्ञवल्क्यं चरकाध्वर्युस्तु व्याजहार,' (श० ब्रा० ३।८।२।२४)।
(ख) 'प्राजापत्यं ह चरका आलभन्ते।' श० ब्रा० (६।२।२।१)
(ग) 'इति ह स्माह माहित्थिर्यं चरकाः प्राजापत्ये पशावाहुतिरितिः' (श० ब्रा० ६।२।२।१०)।
2. आपस्तम्बेन स्वस्मिन् धर्मसूत्रे (१।४।१२।३), 'वाजसनेयिब्राह्मणम् (शतपथब्राह्मणम्) स्मृतम्।

१।८।१२; ५।२२।८; ६।२७।१; ८।१०।१२; ६।१३।१५; ११।१५।७; १३।१८।७; १६।१६।६; २१।१३।२१; २४।२।२३ ।

**आपस्तम्बेन स्मृता आचार्याः**—आलेखनः[1], आश्मरथ्यः[2], कौषीतकिनः[3], ताण्डिनः[4], पालिङ्गायनिकाः[5], बह्वृचाश्च[6] स्मृताः श्रौतसूत्रे ।

**आपस्तम्बश्रौतसूत्राणां जैमिनीयमीमांसासूत्रैस्सह साम्यम्**—जैमिनेर्मीमांसादर्शनं यज्ञशास्त्रमेवेति निश्चितम्, कात्यायनापस्तम्बयोरुभयोस्सूत्रैस्सह जैमिनीयमीमांसासूत्राण्यनुवदन्ति इति च दृश्यते, तत्र प्रथमं निदर्शनार्थं कानिचित् आपस्तम्बसूत्राणि जैमिनीयसूत्रैस्सह उदाहृतानि अवलोकनीयानि—

| आ० श्रौ० | जै० मी० सू० |
| --- | --- |
| १. नास्यैता रात्रिं कुमाराश्चन पदसो लभन्ते (१।४।२) | १. तथा पयः प्रतिषेधश्च कुमाराणाम् (११।१।५१) |
| २. नर्तु सूत्रेन्न नक्षत्रम् (५।१।२१) | २. ऋतुनक्षत्रातिक्रमवचनात् (५।४।६) |
| ३. स्वामिनोऽग्नेरित्यादि (परिभा० ४।१) | ३. न देवताग्निक्रियमिति । (६।३।१८) |

1. आ० श्रौ० सू० ५।२६।१४, इत्यादिषु दशादिकस्थानेषु ।
2. आ० श्रौ० सू० ५।२६।१४, इत्यादिषु दशादिकस्थानेषु ।
3. आ० श्रौ० सू० १०।१।१० ।
4. आ० श्रौ० सू० २४।१०।१८ ।
5. आ० श्रौ० सू० २१।२३।५ ।
6. आ० श्रौ० सू० ६।२७।२ ।

धर्मसूत्रेष्वाचार्येणापस्तम्बेन त्वेते आचार्याः स्मृताः, काण्वः (१।६।१६।७) कण्वः (१।६।१६।३), कुत्सः (१।६।१६।७), कौत्सः (१।६।१६।४), पुष्करस्यदिः (१।६।१६।७), वार्ष्यायणिः (१।६।१६।५), हारीतः (१।४।१४।११), श्वेतकेतुः (१।२।५।६), तथा हि धर्म० सू० (२।११। २६।११–१२), आथर्वणश्रुतिः, पुराणम् (१।६।१६।१३), नामतो भविष्यत्पुराणं च (२।६।२४।६), उदाहृतम्—'पुनस्सर्गे बीजार्था भवन्तीति भविष्यत्पुराणे ।' 'स्मृतिश्च' (धन० २।६।१५।२५) इत्यत्र धर्मशास्त्रं स्मृतम्, एवं वेदाङ्गानि (धर्म० सू० २।४।८।१०-११), योगविद्या (२।६।१७।४-७) च स्मर्यन्ते ।

| | |
|---|---|
| ४. पितृयज्ञ: स्वकालविधानादनङ्गं स्यात् (परिभा० २।३५) | ४. पितृयज्ञ: स्वकालविधानादनङ्गं स्यात् (४।४।१९) |
| ५. अर्थद्रव्यविरोधेऽर्थो बलीयान् । (परिभा० ३।४६) | ५. अर्थद्रव्यविरोधेऽर्थो बलीयान् । (६।३।३९) |
| ६. प्रतिषिद्धे च दर्शनात् (परिभा० २।३७) | ६. प्रतिषिद्धे च दर्शनात् (४।४।२१) |
| ७. तुल्यवच्च प्रसंख्यानात् (परिभा० २।१९) | ७. तुल्यवच्च प्रसंख्यानात् (४।४।२०) |

केषांचित् विपश्चितां विचारे 'कल्पसूत्राणि जैमिनीयमीमांसादर्शनादपि पुरातनानीति निश्चय: । तदेतन्न सत्यं मतं प्रतिभाति मे । श्रीमन्त: काणेमहोदया अपि मीमांसासूत्राणि त्वापस्तम्बात् पूर्वकालिकानीति अभिप्रयन्ति, यद्यपि तेषां तिथिविषयकं मतं न मान्यार्हं भवेत्, परन्तु एतावत्तु निश्चितं यन्मीमांसासूत्राणि आपस्तम्बात् पूर्वकालिकान्यासन्निति ।[1]

---

1. "The correspondence in language with Purvamimansa Sutra is so close that one is tempted to advadce the view that Apastamba knew the extent Mimansa Sutra or an earlier version of it that contained almost the same expressions. —History of Dharm Shastra, p. 42.

भारतीयेतिहासे तु जैमिनि: पाराशर्यव्यासस्य शिष्य आसीदिति तथ्यमस्ति । स व्यास: स्वशिष्याय जैमिनये सामसंहितां प्रोवाच, तथाहि "प्राचीनावीतीसुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यमहाभारतधर्माचार्या: इत्याश्वलायनेन (गृह्यसूत्रे ३।३।५), चोक्तम्, अयमेव जैमिनिराचार्य: सूत्रभाष्यमहाभारतधर्मसूत्राणि प्राणायिषत, अस्य शिष्येण तवल्कारेण जैमिनीयोपनिषद्ब्राह्मणमवोचि—

उज्जहाराागमाम्भोधेर्यो धर्मामृतमञ्जसा ।
न्यायैर्निर्मथ्य भगवान् स प्रसीदतु जैमिनि: ।।

सामाखिलं सकलवेदगुरोर्मुनीन्द्राद् व्यासादवाप्य भुवि येन सहस्रशाखम् ।
व्यक्तं समस्तमणिसुन्दरगीतरागं तं जैमिनिं तवल्कारगुरुं नमामि ।।

भवत्रातस्य (जैमिनीयश्रौतसूत्रवृत्तेरारम्भे द्रष्टव्यम्), धर्मराजयुधिष्ठिरस्य सभाप्रवेशस्य काले व्यासादिभिस्सह जैमिनिरपि प्रविवेश—(महाभारते, सभापर्वणि ४।९-१०)—'बको दाल्भ्य: स्थूलशिरा: कृष्ण-

## भारद्वाजश्रौतसूत्रापस्तम्बश्रौतसूत्रे च

अस्य भारद्वाजस्य कल्पस्य चत्वारो विभागा उपलभ्यन्ते—श्रौतसूत्रम्, गृह्यसूत्रम्, पितृमेधसूत्रम्, परिशेषसूत्रम् च। श्रीकाशिकरमहोदयेन सर्वमेतद् वैदिकसंशोधनमण्डले पूनानगरात् प्रकाशितम्। तन्मते भारद्वाजश्रौतसूत्रमापस्तम्बश्रौतसूत्रात् प्राचीनतरमिति विज्ञायते, काशिकरमतेन च भारद्वाजापस्तम्बश्रौतसूत्रयोर्महत्साम्यं वरीवर्ति। तन्मते आपस्तम्बस्तु भारद्वाजश्रौतसूत्रात् बाहुल्येन विषयवस्तूनि गृहीतवान्।[1]

---

द्वैपायनः शुकः। सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम्।' अयमेव जैमिनिराचार्यो जनमेजयस्य पारीक्षितस्य सर्पसत्रे च यज्ञस्योद्गाता बभूव—'उद्गाता ब्राह्मणो वृद्धो विद्वान् कौत्सार्यजैमिनिः॥

(आदिपर्वणि ४८।६)

1. "of all the sutras] belonging to the Taittiriya recension, the Bhardwaj Sraut Sutra shows the greatest affirmity with Apstamba. Not only are the ritualistic details in the two Sutras similar, but the construction of the two Sutras also is similar. Many of the Sutras in these two texts have identical wording and there are minor differences in remaining portions.

A comparative table of the contents of the two Sutras, with special reference to the extent of Bhardwaj S. S. is given below :

| प्रश्नः | भार० श्रौ० सू० | प्रश्नः | आ० श्रौ० सू० |
|---|---|---|---|
| १-२, ३ | दर्शपूर्णमासौ | १, २, ३ | दर्शपूर्णमासौ |
| ३ १४, १८ | ब्रह्मत्वम् | ३, १४-१८ | ब्रह्मत्वम् |
| ४ | याजमानम् | ४ | याजमानम् |
| ५ | अग्न्याधानम् | ५ | अग्न्याधानम् |
| | पुनराधानम् | | पुनराधानम् |
| ६, १-६ | अग्न्युपस्थानम् | ६, १-१५ | अग्निहोत्रम् |
| ७ | निरूढपशुबन्धः | ७ | निरूढपशुबन्धः |
| ८ | चातुर्मास्यानि | ८ | चातुर्मास्यानि |
| ९ | प्रायश्चित्तानि | ९ | प्रायश्चित्तानि |
| १०-१४ | ज्योतिष्टोमः | १०-१४ | ज्योतिष्टोमः |

द्रष्टव्यम्—भारद्वाजश्रौतसूत्रस्य प्रास्ताविके, पृ० (LXXIX)

तथा च द्वाविंशतिसूत्रेषु आपस्तम्बेन 'एके' इति सङ्केतेन भारद्वाजस्य मतान्युदाहृतानि ।[1]

आपस्तम्बश्रौतसूत्रस्य भाष्यकारो रुद्रदत्तो भारद्वाजवचनैस्सह तस्य तुलनां कृतवान्, यथा—'भारद्वाजस्त्वत्रानुग्रहमाह–'यदि निर्मथ्यो मथ्यमाने न जायेत तस्य स्थाने हिरण्यशकलं व्याहृतीभिर्जुहुयादिति ।' आ० श्रौ० रुद्रदत्त ७।१३।४), 'तदुक्तं भारद्वाजेन' यद्यद्भविस्तस्याज्यं प्रतिनिधिरिति (तदेव ९।१८।३), अत एव भारद्वाजापस्तम्बश्रौतसूत्रयोर्महत्साम्यं विद्यते। तथा चैतत् तथ्यमपि ध्यातव्यं यदापस्तम्बानुयायिभिर्भारद्वाजपितृमेधसूत्रमन्त्येष्टिविधौ गृह्यते, तेषां स्वतन्त्रं पितृमेधसूत्रं नासीत् । तदुक्तम्—

भारद्वाजकृतं सूत्रं तद्भाष्यं कल्पकारिका: ।
सुविलोक्यानाहिताग्ने: समन्त्रं पैतृमेधिकम् ॥
कृति: स्फुटतरा सेयं ज्ञेया तदनुसारिणी ।
आपस्तम्बैरपि ग्राह्यं नान्यत् सूत्रं हि विद्यते ॥[2]



1. द्र० भा० श्रौ० प्रास्ताविके, पृ० (LXXXIII-XIV)
2. हरिहरकृतस्यान्त्यष्टिप्रयोगस्य वचनम्, भा० श्रौ० काशिकरेण (पृ० XIVII) उद्धृतम् ।

## तृतीयोऽध्यायः

# कात्यायनापस्तम्बश्रौतसूत्रयोर्भेदः साम्यं च

## सामान्यबहिरङ्गपरीक्षा

उभयोः श्रौतसूत्रयोरेतेषु शीर्षकेषु भेदो अवलोकनीयः—(१) विषयानुक्रमयोरन्तरम्, (२) सूत्ररचनयोर्भेदः, (३) मन्त्रेषूदाहरणेषु चान्तरम्, (४) उभयोः श्रौतसूत्रयोर्भाषाया वैशिष्ट्यम्।

उभयोः श्रौतसूत्रयोर्विषयानुक्रमयोर्भेदस्य प्रज्ञापनार्थं तयोरध्यायानां विषयानुक्रमो द्रष्टव्यः—

| **कात्यायनश्रौतसूत्रे अध्यायानां क्रमः** | **आपस्तम्बश्रौतसूत्रे अध्यायानां क्रमः** |
|---|---|
| १. परिभाषाः | १. दर्शपूर्णमासयोस्तत्र प्राथम्यं दर्शस्य, तत्रापि पूर्वं पिण्डपितृयज्ञः। |
| २. पूर्णमासेष्टिः | २–३. पूर्णमासेष्टिः दाक्षायणयज्ञश्च |
| ३. तदेव– | |
| ४. पिण्डपितृयज्ञः, दर्शेष्टिश्च, दाक्षायणयज्ञः, आग्रयणम्, अग्न्याधानम्, पुनराधेयम्, उपस्थानम्, अग्निहोत्रम्,। | ४. याजमानम् |
| ५. चातुर्मास्येषु–वैश्वदेवपर्व, वरुणप्रघासाः, साकमेधः, पितृयज्ञः, त्रैयम्बकहोमः, शुनासीरीयपर्व, मित्रविन्देष्टिः। | ५. अग्न्याधेये पुनराधेये च |
| ६. पशुबन्धः | ६. अग्निहोत्राग्न्युपस्थाने, आग्रयणञ्च |
| ७–१०. ज्योतिष्टोमः | ७. निरूढपशुबन्धः |
| | ८. वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयपर्वाणि। |

| कात्यायनश्रौतसूत्रे अध्यायानां क्रमः | आपस्तम्बश्रौतसूत्रे अध्यायानां क्रमः |
|---|---|
| ११. ब्रह्मत्वम् | ९. आदर्शादिचातुर्मास्यपर्वनामानि प्रायश्चित्तानि |
| १२. द्वादशाहयज्ञः | |
| १३. गवामयनम् | १०–१३. ज्योतिष्टोमः |
| १४. वाजपेययज्ञः | १४. उक्थ्यषोश्यतिरात्राप्तोर्यामैकादशिनीचातुर्होत्रपञ्चहोत्रषड्होत्रसप्तहोत्रादयः, सोमप्रायश्चित्तं च । |
| १५. राजसूययज्ञः | १५. प्रवर्ग्यः |
| १६–१८. अग्निचयनम् | १६–१७. अग्निचयनम् |
| | १८. वाजपेयरासूययज्ञौ |
| १९. सौत्रामणी | १९. सौत्रामणीकौकिल्यौ, सावित्रनाचिकेतचातुर्होत्रवैश्वसृजानि काम्यानि, पशिवष्टयश्च |
| २०. अश्वमेधः | २०. अश्वमेधपुरुषमेधसर्वमेधाः |
| २१. पुरुषमेधसर्वमेधौ, पितृमेधश्च | २१. द्वादशाहः, गवामयनमुक्त्यर्गिणामयनं च |
| २२. एकाहाः | २२. एकाहाः, अहीनाः सवाश्च |
| २३. अहीनाः | २३. सत्राणि |
| २४. सत्राणि | २४. परिभाषाः, प्रवरो हौत्रं च |
| २५. प्रायश्चित्तानि | |
| २६. प्रवर्ग्यः | |

इदानीं मुद्रितेषु पुस्तकेषु आपस्तम्बश्रौतसूत्रे परिभाषाध्यायो अन्तिमे (चतुर्विंशे) अध्याये स्व उपलभ्यते। कात्यायनेन तु प्रथमेऽध्याये हि सर्वाः परिभाषाः उक्ताः, तत्रापि कात्यायनश्रौतसूत्रे प्रवरप्रकरणं हौत्रकल्पश्च न स्तः। यदा त्वापस्तम्बेन परिभाषयोः हि सर्वसाधारणपरिभाषाः, प्रवराः, हौत्रकल्पाश्च विनिविष्टाः। कात्यायनेन तु परिशिष्टेषु प्रवराध्यायादिषु चैते प्रोक्ताः, इति विवेकः।

आपस्तम्बेन—त्वादितस्त्रिष्वध्यायेषु दर्शपूर्णमासौ निरूपितौ, तत्रापि प्राथम्यं दर्शेष्टेर्दृश्यते, कात्यायनेन तु पूर्वं पौर्णमासेष्टिः, तदन-

न्तरं दर्शेष्टिः प्रोक्ता, तथा हि पिण्डपितृयज्ञस्तु आपस्तम्बेन पूर्वमुक्तः प्रथमेऽध्याये, स कात्यायनेन चतुर्थेऽध्याये निरूपितः। एवं कात्यायन-श्रौतसूत्रे याजमाननामको अध्यायस्तु पृथङ्नास्ति, यदाऽऽपास्तम्बेन याजमानमिति पृथगध्याये चोक्तम्। आपस्तम्बस्तु स्वस्मिन् श्रौतसूत्रे तैत्तिरीयसंहितायाः क्रममनुसरति तत्रैव याजमानकाण्डमुपलभ्यते। कात्यायनश्रौतसूत्रे परिभाषापाठे हि यजमानसम्बन्धिनियमाः सङ्क-लिताः। तथा च कात्यायनेन दर्शेष्ट्यनन्तरं दाक्षायणमुक्त्वा आग्रय-णाग्न्याधानपुनराधेयान्युपस्थानप्रवासोपस्थानाग्निहोत्राणि चोक्तानि, एकस्मिन्नेव चतुर्थेऽध्याये, आपस्तम्बेन याजमानमुक्तम्, पञ्चमे त्वग्न्या-धेयपुनराधेये तूक्ते, षष्ठे त्वग्निहोत्राग्न्युपस्थाने आग्रायणम् च। अत्रापि उभयोः क्रमवैपरीत्यं लक्ष्यते, कात्यायनेन पूर्वमग्निहोत्रम्, तदनन्तरम् उपस्थानमुक्तम्, यदाऽऽपस्तम्बः पूर्वमुपस्थानं वक्ति ततो अग्निहोत्रम्। आग्रायणाख्या नव्यसस्येष्टयस्तु कात्यायनेन चतुर्थेऽध्याये अग्निहोमा-त्पूर्वमेव निरूपिताः, आपस्तम्बस्तु षष्ठेऽध्याये उपस्थानादनन्तरं ताः प्रतिपादयति।

कात्यायनश्रौतसूत्रे पञ्चमेऽध्याये चातुर्मास्याख्यानि पर्वाणि चोच्यन्ते तदनन्तरं तस्मिन्नेवाध्याये मित्रविन्देष्टिः। ततः कात्यायनो निरूढपशुबन्धं निरूपितवान्, आपस्तम्बस्तु पूर्वं निरूढपशुबन्धं प्रोक्त-वान्, ततश्चातुर्मास्यान्याह। तत आपस्तम्बेन नवमे प्रश्ने दर्शादिचातु-र्मास्यान्तानां अदितोऽष्टभिः प्रश्नैर्विहितानां प्रायश्चित्तानि विहितानि, तथा च दशमेऽध्याये सोमक्रतूनुक्त्वा सोमप्रायश्चित्तान्याह, कात्यायनेन तु सर्वविधानि प्रायश्चित्तानि सत्राण्यपि निरूप्य पञ्चविंशे विहितानि।

कात्यायनेन पञ्चमेऽध्याये मित्रविन्दाख्येष्टिः निरूपिता, आप-स्तम्बश्रौतसूत्रे अस्येष्टेर्नामापि नोपलभ्यते। उभाभ्यामाचार्याभ्यां ज्योतिष्टोमाख्यः प्रधानक्रतुस्तु चतुर्षु विस्तृतेष्वध्यायेषु विहितः। कात्यायन आसप्तमाद् अध्यायाद्दशमाध्यायपर्यन्तं ज्योतिष्टोममाह। आपस्तम्बस्तु उक्थ्यादीन् चतुरः सोमक्रतून्, चातुर्होत्रादींश्च पृथगध्याये निरूपयति; कात्यायनस्तु सारेणैव तानह दशमेऽध्याये। कात्यायन एकादशेऽध्याये ब्रह्मत्वमाह, आपस्तम्बेन तत्तु यजमानाख्येऽध्याये हि विहितम्। कात्यायनो ब्रह्मत्वमुक्त्वा द्वादशाहयज्ञं गवामनयनाख्यं संवत्सरयज्ञं चाह, द्वादशत्रयोदशाध्याययोस्ततस्तेन वाजपेयराजसूया-

ग्निचयनसौत्रामण्यश्वमेधाश्च पृथक् पृथगध्यायेषु विहिताः। आपस्तम्बः सोमक्रतूनुक्त्वा पञ्चदशेऽध्याये प्रवर्ग्यमाह, कात्यायनस्तु ग्रन्थस्यान्तिमे अध्याये (षड्विंशे) प्रवर्ग्यं विदधाति। आपस्तम्बस्तु प्रवर्ग्यस्यानन्तरं द्वयोरध्याययोरग्निचयनं निरूपितवान्, कात्यायनस्त्वग्निचयनं त्रिषु (१६-१८) अध्यायेषु विहितवान्। कात्यायनेन पूर्वं वाजपेयक्रतुः विहितस्ततो राजसूययज्ञः पृथक् पृथक् अध्याययोः, एवमेवापस्तम्बोऽप्याह, किन्तु कात्यायनो राजसूयादनन्तरमग्निचयनं विदधाति, यदाऽऽपस्तम्बस्तु वाजपेयराजसूययोः पूर्वमेवाग्निचयनमाह। कात्यायनश्रौतसूत्रे अग्निचयनादनन्तरं सौत्रामणीयज्ञक्रतुर्विहितस्ततो अश्वमेधः। आपस्तम्बकल्पे राजसूयादनन्तरं सौत्रामणीकोकिलसौत्रामणीक्रतू विहितौ, ततः सावित्रनाचिकेतचातुर्होत्रवैश्वसृजाख्याः चयनपक्षाः, काम्येष्टयः पशिवष्टयश्च विहिताः, कात्यायनश्रौतसूत्रे तु सावित्रादीनामिष्टीनां विधानं न विद्यते। कात्यायनेन विंशेऽऽध्याये अश्वमेधो विहितः, आपस्तम्बस्य श्रौतसूत्रेऽपि विंशेऽध्याये अश्वमेधपुरुषमेधसर्वमेधाख्या महाक्रतव उच्यन्ते, कात्यायनेन एकविंशेऽध्याये पुरुषमेधसर्वमेधौ, पितृमेधश्च विहिताः। आपस्तम्बकल्पे पितृमेधो न विहितः तथ्यमिदं तु पूर्वमेव विवेचितं यदाऽऽपस्तम्बीयशाखानुयायिभिर्भारद्वाजीयपितृमेधसूत्राण्येव प्रगृह्यन्ते। कात्यायनेन द्वादशाहयज्ञस्तु द्वादशेऽध्याये गवामयनात्पूर्वं विधीयते, आपस्तम्बस्तु एकविंशे अध्याये द्वादशाहं गवामयनमुत्सर्गिणामयनञ्चाह, कात्यायनश्रौतसूत्रे ततो द्वाविंशेऽध्याये एकाहाः, त्रयोविंशे अहीनाः, चतुर्विंशे सत्राणि, पञ्चविंशे प्रायश्चित्तानि, षड्विंशे चाध्याये प्रवर्ग्यः। आपस्तम्बश्रौतसूत्रे द्वाविंशे एकाहाः, अहीनाः बृहस्पतिसवादयः सवाख्याः क्रतवः त्रयोविंशे सत्राणि च निरूपितानि। एवमुभयोः श्रौतसूत्रयोरध्यायेषु विषयक्रमस्यान्तरं लक्षितम्। तत्र न केवलमध्यायेषु विषयक्रमान्तरमपि दरीदृश्यते अपितु तत्र तत्र प्रकरणेष्वपि सूक्ष्मान्तरं परिदृश्यते, तत्तु तत्तत्प्रकरणेष्वेव स्पष्टतया प्रकटीकरिष्यते।

तत्र विषयानुक्रमस्य प्रदर्शनं विश्लेषणं च परमावश्यके स्तः, ताभ्यां विना विषयावबोधने महत्सौकर्यं भवेदिति कृत्वा विषयानुक्रमबोधस्तु आवश्यक एव।

**सूत्ररचनाशैल्योर्भेदः**—आपस्तम्बस्तु प्रायो विस्तारेण विषयान् वर्णयति, कात्यायनस्तु सर्वप्रकरणानि सारेण आह, सूत्र रचनावत्

विषयवर्णनेऽपि कात्यायनश्रौतं सुसम्बद्धं क्रमबद्धं च दृश्यते, आपस्तम्बे श्रौते क्वचित् द्विरुक्तिरपि दृश्यते। कात्यायनो न विषयान् द्विर्वक्ति। आपस्तम्बश्रौतसूत्रे बाहुल्येन प्राचीनताया लक्षणानि परिलक्ष्यन्ते, कात्यायनश्रौतसूत्रे तु तानि नोपलक्ष्यन्ते। अत्रोभयोः सूत्ररचनाशैल्योः महती साधर्म्यवैधर्म्ये स्तः।

तत्र कात्यायनस्य सूत्ररचनं तु श्रौतसूत्रेष्वादर्शमेवास्ति सर्वश्रौतसूत्रेषु। तस्य सूत्राणि अल्पाक्षराणि[1] सारवन्ति असन्दिग्धान्येव लक्ष्यन्ते। सा तु शैली पाणिनिसूत्रशैलीवत् स्वल्पाक्षरपदा अनिन्द्या चास्ति। तस्याः पाणिनिसूत्रैस्सह साम्यमपि लक्षितव्यम्—
'एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयजमानवर्जम्'
पाणिनि० (अष्टा० १।२।३३–३४),
कात्या० श्रौ० (१।८।१९)

कात्यायनस्य विपरीतमापस्तम्बस्य सूत्राणि प्रायेण दीर्घाक्षराणि सन्ति, न च तावन्ति सारवन्ति। तदुभयोः सूत्ररचनाशैली पेक्षणीया—

| **कात्यायनः** | **आपस्तम्बः** |
|---|---|
| फलयुक्तानि कर्माणि।[2] | स त्रयाणां वर्णानां ब्राह्मणराज- |
| सर्वेषामविशेषात्।[4] | न्ययोर्वैश्यस्य च।[3] |
| मनुष्याणां वारम्भसामर्थ्यात्।[5] | स त्रिभिर्वर्णवेदे विधीयते।[6] |
| ब्राह्मणराजन्यवैश्याना श्रुतेः।[7] | ऋग्वेदयजुर्वेदसामवेदैः।[8] |
| स्त्री चाविशेषात्।[9] | |

1. अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रकृतो विदुः॥ (वायुपुराणे ५९।१४२)
2. का० श्रौ० (१।१।२)
3. आप० श्रौ० (२४।१।२)
4. का० श्रौ० (१।१।३)
5. का० श्रौ० (१।१।४)
6. आ० श्रौ० (२४।१।३)
7. का० श्रौ० (१।१।६)
8. आ० श्रौ० (२४।१।३)
का० श्रौ० (१।१।७)

प्रायः कात्यायनस्तु सर्वं सम्बद्धविषयमेकस्मिन् सूत्रे हि सूत्रयति, यदाऽऽपस्तम्बस्तु तत्प्रसङ्गमनेकेषु सूत्रेषु विस्तारयति। यथा, कात्यायन प्राहिताग्नेर्वर्जनीयानि कृत्यानि एवमाह—'अनृतातिथ्यपनोदपूतिदार्वा-ग्रानर्बीसपक्वनाव्युदकानि वर्जयेत्।' (का० श्रौ० ४।१०।१५) अत्र आप-स्तम्बेन तु सूत्राण्येवं तायन्ते—

| | |
|---|---|
| अन्तरमाधानादाहिताग्निव्रतानि | (आप० श्रौ० ५।७।२५।२) |
| नानृतं वदेत् | ( ,, ,, ,, ।३) |
| नास्य ब्राह्मणोऽनाश्वान् गृहे वसेत् | ( ,, ,, ,, ।४) |
| सूर्योढमतिथिं वसत्यै नापरुन्धीत | ( ,, ,, ,, ।५) |
| नर्बीस्वपक्वस्याश्नीयात् | ( ,, ,, ,, ।६) |
| क्लिन्नं वासो नादध्यात् | ( ,, ,, ,, ।७) |
| अन्तर्नाव्या नाश्नीयात् | ( ,, ,, ,, ।८) |
| स्वकृत इरिणे नावस्येत् | ( ,, ,, ,, ।९) |
| पुण्यस्यात् | ( ,, ,, ,, ।१०) |
| हिंकृत्य वाग्यतः स्त्रियमुपेयात् | ( ,, ,, ,, ।११) |
| व्याहरेद्वा | ( ,, ,, ,, ।१२) |

एवमास्तम्बसूत्राणि त्वधिकस्थानमावृण्वन्ति। क्वचित्तु कात्यायनेन स्वल्पाक्षरता अतिपराकाष्ठां नीता—यथा—

यूपः (का० श्रौ० १।७।१५), त्रीन्वा (का० श्रौ० २।३।३१)
ऐन्द्राग्नः (का० श्रौ० ५।७।८), माहेन्द्रश्चरुः का० श्रौ० ५।७।९)

तत्रापस्तम्बसूत्राणां दैर्घ्यं च द्रष्टव्यम्—

रथमात्री निरूढपशुबन्धस्य वेदिः। (आ० श्रौ० ७।१।३।७)

अक्षसंमिता पश्चात्तिर्यगीषया प्राची विपथयुगेन पुरस्तावद्यावता वा बाह्ये छिद्रे। (आ० श्रौ० ७।१।३।८)

आपस्तम्बश्रौतसूत्रेऽपि क्वचित् क्वचित् लघ्वक्षराणि अल्पीयांसि च सूत्राणि परिदृश्यन्ते—

'तूष्णीं वा सर्वाणि (आ० श्रौ० ६।१।५।३)
'चतुर्षूदपात्रेषु पचति (आ० श्रौ० ६।१।५।४)
'न प्रक्षालयति न प्रस्नावयति (आ० श्रौ० ६।१।५।५)

क्वचित् कात्यायनश्रौतसूत्रेऽपि दीर्घसूत्राणि—वाक्यमिव दृश्यन्ते—

'दक्षिणद्वारं सोमक्रयणी तिष्ठत्यलक्षिता व्यङ्गा प्रवीता रज्जुबद्धा, बभ्रूः, पिङ्गला, पिङ्गलाभावेऽरुणारुणाभावे रोहिण्यश्वेताक्षी', (का० श्रौ० ७।६।१२)।

**भाषाशैल्योर्भेदः**—उभयोर्ग्रन्थयोर्भाषावैशिष्ट्यं त्वग्रे वर्णयिष्यते, अत्र तु केवलं तयोर्ग्रन्थकारयोर्भाषाशैल्योर्भेदमात्रं संसूच्यते। यद्यप्युभयोः श्रौतसूत्रयोर्भाषा लौकिक्येव तथापि कात्यायनस्य सूत्रेषु भाषाशैली प्रायः सर्वत्र लौकिकशब्दानुपूर्वीमिव गृहीतवती इव लक्ष्यते तत्रापस्तम्बश्रौतसूत्रे छान्दसी वाचश्च्छाया अपि परिदृश्यते, तत्र ब्राह्मणसदृशानि प्रवचनानि पदानि, विभक्तयः, स्वरव्यञ्जनयोर्लोपः धातवः उपसर्गा एवमादयो वैदिकभाषामयाः प्रयोगाश्च दरीदृश्यन्ते, तथापि एवं वक्तुमपि पार्यते 'यद् आपस्तम्बकात्यायनयोर्भाषा भाषाशैली चेतिहासपुराणधर्मशास्त्रनिरुक्तबृहद्देवतामहाभाष्यादिग्रन्थैस्तुल्ये एव स्तः।' तयोर्ग्रन्थयोरुदाहरणदीनि तु भाषाप्रकरणे चोदाहृतानि।

**उभयोः श्रौतसूत्रयोर्मन्त्रेषूदाहरेणषु च भेदः**— कात्यायनेन श्रौतसूत्रे प्रतीकमात्रेण वाजसनेयिसंहितातो मन्त्राः उदाहृताः, परिपठिताश्च, केवलं पञ्चाशत् मन्त्रा[1] ऋग्वेदाथर्ववेदतैत्तिरीयसंहिताकाठकसंहिताशतपथताण्ड्यादिभ्यो ग्रन्थेभ्यः संगृहीताः, आपस्तम्बेन तु बहूनि शतानि मन्त्राः, प्रवचनानि, उदाहरणानि एभ्यः ऋग्वेदादिभ्यस्तथा कङ्कतिब्राह्मणकालवबिब्राह्मणादिभ्यो अन्येभ्यो लुप्तेभ्योऽज्ञातेभ्यो ग्रन्थेभ्यश्च उदाहृतानि विद्यन्ते, तेषां कानिचित् अग्रे संकलितानि तत्रैव द्रष्टव्यानि।

आपस्तम्बेन बहूनामाचार्याणां मतान्यपि श्रौतसूत्रे उदाहृतानि यथा आलेखनाश्मरथ्यादीनामिति कात्यायनोऽपि वात्स्यबादरिभारद्वाजादीनां मतान्युदाजहार, किन्तु आपस्तम्बश्रौतसूत्रे तेषां संख्या बाहुल्येन विद्यते, यदा कात्यायनश्रौतसूत्रे तु संख्या अल्पीयस्येवास्ति। आपस्तम्बेन तु स्वस्य प्रतिद्वन्द्विचरणस्य वाजसनेयस्य बाहुल्येन मतानि उदाहृतानि, किन्तु कात्यायनेन कस्यचिदपि प्रतिद्वन्द्विकल्पसूत्रकारस्य एवंविधं नामापि न गृहीतम्, न तथाविधं मतमुदाहृतम्। आपस्तम्बेन तु प्रायेण वेदसंहिताभ्यः पूर्णमन्त्रपाठो हि परिगृहीतः।

---

1. द्रष्टव्यम्—A Critical Study of K. SS. Appendix–D.

# कात्यायनापस्तम्बयोर्भाषावैशिष्ट्यम्

**श्रौतकालिकी भाषा**—श्रौतकाले ब्राह्मणो (विद्वान्) दैवीं मानुषीं चोभे वाचौ वदति स्म। तथा चाचार्य आपस्तम्बः—'अथ यजमानो व्रतमुपैति वाचं यच्छत्यनृतात् सत्यमुपैति मानुषाद्[1] दैव्यमुपैमि दैवीं वाचं यच्छामि।' (आप० श्रौ० ५।२।८।१); तथा च मन्त्रवर्णः—

देवीं वाचमजनयन्त देवास्तां विश्वरूपां पशवो वदन्ति। (ऋग्वेदे ८।१००।११) एवं चोक्तं काठके—'तस्माद् ब्राह्मण उभे वाचौ वदति दैवीं च मानुषीं च' (काठक सं० १४।५)। तस्मात् वैदिकभाषाप्रयोग-काले द्वे प्रमुखे रूपे आस्ताम्—मानुषं दैव्यं च। देवीवाक् तु केवलं मन्त्रेषु ब्राह्मणेषु चोपलभ्यते, सा हि अतिभाषा उच्यते स्म—

अतिभाषा तु देवानामार्यभाषा तु भूभुजाम्।
संस्कारपाठसंयुक्ता सप्तद्वीपप्रतिष्ठिता॥

(भारतनाट्यशास्त्रे १७।१८)

पतञ्जलिरप्याह-(संस्कृतस्यातिभाषायाः प्रचारक्षेत्रं) 'सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः' (महाभाष्ये, प्रारम्भे, पृ० ६)। संस्कारपाठसंयुक्ता लोकभाषा हि संस्कृतमिति' नाम लेभे, संस्कारादि-हीना हि ग्राम्यभाषा म्लेच्छभाषा वा भवति।

प्राचीनभारतीयविदुषां मते वेदमन्त्राणां शब्दानुपूर्वी नित्या भवति, स्थानभेदाच्च वाग् भिद्यते—'तद् भेदाच्चैतद् भवति, काठकम्, काला-पकम्, मौदकम्, पैप्पलादकमिति' (महाभाष्ये ४।२।१०४) देवीवाक् 'सौरी' ब्राह्मी वापि उच्यते स्म—

तस्मै ब्राह्मीं तु सौरीं वा नाम्ना वाचं ससर्परीम्।
सूर्यक्षयाद् इहाहृत्य ददुस्ते जमदग्नयः॥

बृहद्देवतायां (४) ११२-११३

अस्या वेदवाचः संस्कारपाठस्वरादिसंयुक्तं पदरूपं लोके प्रचलि-तमभवत् तदेव संस्कृतं[2] मानुषमभवत्, यज्ञेषु दीक्षितो यजमानो मानुषं

1. तुलनीयम्—'यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति॥
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत्॥
(वाल्मीकीये रामायणे ५।३०।१८, १९)

2. 'ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकी।' (निरुक्ते १३।९)

वाक्यं नोच्चरति। तत्र कात्यायन आह—'विचक्षणचनसितवतीं वाचं वदेत्। (का० श्रौ० ७।५।७) तथा चापस्तम्बः—'चनसितं विचक्षणमिति नामधेयान्तेषु दधाति चनसितेति ब्राह्मणं विचक्षणेति राजन्यवैश्यौ परिणयेन्न मानुषीं वाचं वदति न स्त्रिया न शूद्रेण सम्भाषेत' (आप० श्रौ० १०।४।७)।

**म्लेच्छवाक्**—वैदिकग्रन्थेषु[1] ब्राह्मणार्थं म्लेच्छवाच उच्चारणं निषिध्यते। सा मानुषीवाक् स्वरसंकाराभ्यां हीना हि म्लेच्छभाषा इत्युच्यते स्म, तथा चाह पतञ्जलिः 'म्लेच्छो ह वा एष यदपशब्दः' (महाभाष्ये प्रथमाह्निके) तन्मते च 'बहवोऽपशब्दाः, अल्पीयांस शब्दाः…। एकैकस्य गोशब्दस्य गौणी गोता गोपोतलिका इत्येवं बहवोऽपभ्रंशाः' (महाभाष्ये प्रथमाह्निके) अतः भाषाप्रयोगेण ह्रासं गत्वा म्लेच्छरूपाणि धारयति, एवमेकभाषाया[2] बहूनि रूपाण्यभवन्।

---

1. न म्लेच्छभाषां शिक्षते। म्लेच्छो ह वा एष यदपशब्द इति विज्ञायते (पार० गृह्य०) तथा च—'स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेद् आसुर्या ह्येषा वाक्' (श० ब्रा० ३।२।१।२४)।

2. एकस्य 'दैत्यशब्दस्य' स्थानभेदाच्च—'टीटन' (Titan), 'डच' (Dutch), 'डीटशलैण्ड' (Dieutshland) इत्यादीनि रूपाणि, एवं दानवशब्दस्य 'डैनिशः'—Danish (डेनमार्क), 'षण्डदानवः' स्केण्डेनिविच' (Scandenevia), 'स्वीडन' (Sweden)—'श्वेतदानवः' 'डेन्यूब' (Danub) इत्यादीनि रूपाणि ध्यातव्यानि दैत्यानां दानवानामेभिर्नामभिरनेके योरोपस्य देशाः प्रसिद्धा अभूवन्, आदिकाले तु भूमण्डले असुराणां साम्राज्यमासीत्—

'असुराणां वा इयं पृथिवी आसीत् (काठ० सं० ३१।८)

तथा च—वाल्मीकिरप्याह—

दितिस्त्वजनयद्दैत्यान् पुत्रांस्तात यशस्विनः।
तेषामियं वसुमती पुरासीत् सवनार्णवा॥

(अरण्यकाण्डे १४।१५)

विष्णुना दैत्यराजस्य बलेः पराभवादनन्तरं तैः (दैत्यैर्दानवैः) यूरोपमहाद्वीप उपनिविष्टम् इत्यैतिह्यम्। (द्र० भा० बृ० इ०, प्रथम भागे, दशमोऽध्यायः)।

पाश्चात्यविदुषां श्रौतभाषासम्बन्धीनि मतानि, प्रायेण भ्रामकाण्येव सन्ति। यथा, आपस्तम्बश्रौतसूत्रस्य सम्पादकः गार्वेमहोदयो लिलेख—

'It is well known that in the Sraut Sutras, in general, a stage of development of Indian language has been reached, which on the whole, is in accordance with classical Sanskrit grommar... ..... but. on enternity into detail, there are plenty of differences, as on the one hand, numerous vedic words and forms are still in use not existing in the Classical Sanskrit, whilst. on the other hand, prakritisms and perfect solecisms are obvious. The late Professor Buhler was certainly right in explaining the latter phenominon (journal of the German Orientai Society Vol. xl p. 705) by characterising the authors of rituals and Dharm Sutras in the following way : "all of these men were Yagnikas, whose literary education, according to Paraskar Griya Sutra (2. 6. 8) in ancient times used to be quite as difficient as in later times. All those of them whose works came down to us, belong to a time when Prakrit dialect were in general use in daily intercourse and as official languages throughout the whole of Indian. It is, therefore, not surprising that their work...... contain numerous 'Apashkbdas' (अपशब्दाः) that is to say, words, forms and constructions not allowed by the rules of the Vaiyakaranas. (p. v ).

अत्र पाश्चात्यमतेषु महत्यो भ्रान्तयः किं चाज्ञानमपि अस्ति, 'व्यासयाज्ञवल्क्यवैशम्पायनकात्यायनापस्तम्बादयोऽसंस्कृतज्ञा अमनीषिणश्च आसन्, ते चारणानामिव अर्धपठिताऽपि अभवन्' इति कथनं प्रमत्तप्रलापमेव भवितुमर्हति, न वैदुष्यज्ञापकमणुमात्रमपि ज्ञेयम्,

व्यासवाजसनेयादीनां कृते पाणिनिव्याकरणं कथं प्रमाणं भवेत्, एतत्तु कथनमितिहासस्यानभिज्ञो हि वक्तुमर्हति, इति कथयितुं पार्यते।[1] पाणिनेः पूर्वं भारते वर्षे शतशो महावैयाकरणाः बभूवुर्येषां व्याकरण-शास्त्राण्यधीत्य व्यासवाजसनेयापस्तम्बकात्यायनादयो विद्वांसः संजाताः, तेषु व्याकरणेषु 'ऐन्द्रं व्याकरणम्'[2] मूर्धन्यमासीत्। स्वयं पाणिनिरपि भारद्वाजकाश्यपगालवदीनां वैयाकरणानां मतानि स्वग्रन्थे उदाहृतवान्। अतः प्राक्पाणिनिग्रन्थानां कृते त्वष्टाध्यायीव्याकरणं प्रमाणं नास्ति, इति मन्तव्यम्। अतः श्रौतसूत्रादिषु क्वापि म्लेच्छाः, प्राकृताः अपशब्दा वा न विद्यन्ते, वयं तु तत्र, स्वरसंस्कारवतीं शब्दा-नुपूर्वीमेव लभामहे, अत एव 'वाकरनागलरैपसनबूहलरगार्वे' इत्या-दीनां मतमज्ञानमूलकं भ्रामकं च वर्तते, नात्र संशयस्याल्पीयानपि चावसरः। को हि नाम हतबुद्धिः व्यासवाजसनेयापस्तम्बकात्यायना-दीन् पाण्डित्यहीनानिव अर्धपठितानिव मन्तुमर्हति, व्यासस्तु[3] सर्वेषां ऋत्विजामृषीणामपि गुरुरासीत् येषां शिष्यप्रशिष्याः पैलवैशम्पायना-पस्तम्बकात्यायनादयस्तु महाविद्वांसो बभूवुरिति। अतस्तेषां ग्रन्थेषु प्राकृतशब्दाः, अपशब्दा न सन्ति। तथ्यमिदं सत्यमवितथं च प्रतिभाति मे यद् विद्वांसः श्रौतसूत्राणां रचनाकाले उभे वाचौ–दैवीवाचं मानुषी-वाचं च—वदन्ति स्म। यथा बौधायनेन सूत्रकारेण कल्पसूत्रे छान्दसी

---

1. तुलनीयम्— Their source is to be traced to the traditional recitations of Bards who were neither priests nor scholars. Their language is thus naturally more popular in character and less regular than Classical Sanskrit.

   Wackarnagal : Atlind Grammar, Vol. I, p. xlv, quoted by Rapson in Cambridge History of India, Vol. I, p. 220.

2. यान्युज्जहार माहेन्द्राद् व्यासो व्याकरणार्णवात्।
   पदरत्नानि किं तानि सन्ति पाणिनिगोष्पदे॥ (देवबोधः)

3. ऋत्विक् समो नास्ति लोकेषु चैव, द्वैपायनेनेति विनिश्चितं मे।
   एतस्य शिष्याः क्षितिमाचरन्ति, सर्वत्विजः कर्मसु स्वेषु दक्षाः॥
   (महाभारते १।५५।६)

भाषा अपि प्रयुक्ता, क्वचिदापस्तम्बोऽप्येवं छान्दसीं भाषां प्रयुक्तवान्, यथा—द्वादशाहेन प्रैव जायतेऽभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति'
(आ० श्रौ० २१।१।१)

तदानीं छान्दसी लोकेष्वप्रयुक्ता एव इति च मन्तव्यम्। आपस्तम्बादिभ्यः पूर्वं ब्राह्मणग्रन्थेषु इतिहासपुराणवत् लौकिक्यां भाषायां गाथाश्चोपलभ्यन्ते, एष भाषाभेदः विषयभेदादेव आसीत्, अतः वैदिकसंहितानां ब्राह्मणग्रन्थानां च निर्माणकाले लोकेषु लौकिकं संस्कृतं प्रचलितमासीत्, विवशो विण्टरनीत्सोऽपि मन्यते—

We find in Aitareya Brahman an Akhyan in which the pathas or verses scattered among the prose approach the epic language as well in meter (I. L. Vol I, p. 211).

श्रौतसूत्राणां भाषा तु लौकिक्येव, यत्र क्वचित् ब्राह्मणसदृशा भाषाऽपि प्रयुक्ता यथा बौधायनश्रौतसूत्रे, आपस्तम्बश्रौतसूत्रे च दरीदृश्यते।

**कात्यायनश्रौतसूत्रस्य भाषावैशिष्ट्यम्**—कात्यायनापस्तम्बश्रौतसूत्रयोर्भाषा लौकिक्येव अस्ति तथापि यत्र तत्र क्वचित् तयोर्वैशिष्ट्यमपि परिपश्यामः, यद्यप्युभावाचार्यौ पाणिनेः पूर्ववर्तिनौ[1], तथापि तयोर्भाषा प्रायेण पाणिनिव्याकरणमेवानुसरति। तथापि उभयोराचार्ययोर्भाषायां क्वचित् क्वचित् वैदिकभाषायाश्च्छाया अपि दरीदृश्यते। तत्र तावत् प्रथमं कात्यायनस्य भाषावैशिष्ट्यमवलोकनीयम्।

**चतुर्थ्यर्थे 'तवै'प्रत्ययस्य बाहुल्यम्**—कात्यायनः प्रायेण सूत्रेषु 'तुमर्थे' चतुर्थ्यर्थे च 'तवै' इति प्रत्ययं प्रयुङ्क्ते, यथा, उदाहरणानि—

| | |
|---|---|
| उच्छ्रेत्तवे | (का० श्रौ० २।६।१०) |
| तर्पयितवै | (का० श्रौ० ३।८।३१) |
| पाययितवै | (का० श्रौ० ४।१३।११) |
| आह्वायितवै | (का० श्रौ० ५।६।३७) |

1. वाजसनेयप्रातिशाख्यस्य रचयिता कात्यायन एव, एतस्य ग्रन्थस्यानेकानि सूत्राणि पाणिनिस्सूत्रैः सह सङ्गच्छन्ते।
द्रष्टव्ये—वाजसनेयप्रातिशाख्यम्, अष्टाध्यायी च। तथा सं० व्या० शा०, द्वि० भाग, १।

**स्वरागमः**—केषुचित् पदेषु वाजसनेयिसम्प्रदाये स्वरागमो भवति, एवं केषुचित् शब्देषु तैत्तिरीयसम्प्रदाये स्वरागमो भवति, यथा—

| तैत्तिरीयसम्प्रदाये— | वाजसनेयसम्प्रदाये— |
|---|---|
| क्वलः (आ० श्रौ० १६।२।१०) | कुवलः (का० श्रौ० १५।१०।१२) |

तैत्तिरीयाणां 'प्ल' इत्यस्य स्थाने वाजसनेये 'प्र' इति भवति, यथा—

प्लेङ्खः (आप० श्रौ० २०।४।३)
प्रेङ्खः (का० श्रौ० १३।३।१)

एवम्—तृचेन 'त्रिचेन' च भवतः; तथा स्वरः, सुवरः स्वगः सुवर्गश्च। भूयांसः शब्दाः तुलनीयाः—

| **का० श्रौ०** | **आ० श्रौ०** |
|---|---|
| पलङ्ग्यः (८।१।२) | परिवृक्ती (२०।१०।२) |
| परिवृक्ता (२०।१।१२) | पालाकली (२०।१०।२) |
| | रिप्तलेपः[1] (८।१६।८) |
| | रिहः (२०।१७।३) |
| पैतुदारुः (५।४।१६) | |
| गावेधुक् (१८।१।१) | गवीध्रक् (१५।३।१६) |
| पुंश्चूलः (का० श्रौ० २०।१।३८) | पुंश्चली (२१।१७।१८) |
| वाजप्राति० (५।४३) | |

**अनवगमसंस्कारपदानि**—कात्यायनाचार्येण कतिपया अनवगम-संस्काराः (अज्ञातार्थाः) शब्दाः प्रयुक्ताः यथा—

विफल्फः (का० श्रौ० २१।३।१०)
शम्वति, कम्वति (का० श्रौ० २१।३।२२)
परिदा (का० श्रौ० २१।४।२७)
निवान्या (का० श्रौ० ५।६।३४)
त्रिपाणम् (का० श्रौ० १५।५।६)
विनाट् (का० श्रौ० १५।३।४१)
स्त्रीप्रत्ययेषु क्वचित् छान्दसत्वं लभ्यते—

---

1. 'रलयोरभेदः' (सि० कौ०) एवं च–रेखा, लेखा, लिखति, रिखति इति रूपद्वयं भवति।

यथा तेन 'नाभिदघ्नी' इति प्राप्ते छान्दसष्टाप्प्रत्ययः 'नाभिदघ्ना' इति (का० श्रौ० ७।६।२७) पदं प्रयुक्तम् । एवं स आचार्यो वपति 'वपते' वा इत्यस्य स्थाने वापयतीति णिजन्तं रूपं प्रयुक्तवान् (का० श्रौ० २।१।६) । शैलीं प्रयुञ्जानः 'करोति' इति (का० श्रौ० ३।४।७), तिङन्त-मासादनाद्यर्थे च सूत्रे निहितवान् । एवं स्पर्शनार्थे 'आलभत' इत्यस्य बाहुल्येन प्रयोगः ।

**आपस्तम्बश्रौतसूत्रस्य भाषावैशिष्ट्यम्**—गार्वेप्रभृतीनां पाश्चात्य-विदुषाम् आपस्तम्बस्य भाषासम्बन्धीनि पूर्वोक्तानि मतानि न सत्यानीति मत्वा नास्मिन् श्रौतसूत्रे प्राकृतभाषाया अपशब्दानामपि वा क्वचिदपि प्रयोगो मन्तव्यः । आचार्येणापस्तम्बेन प्रायो लौकिक्येव भाषा प्रयुक्ता श्रौतसूत्रे, तथापि क्वचित् ब्राह्मणानां सदृशां भाषामपि पश्यामः—यथा—'कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति' (आ० श्रौ० ४।३।२), द्वादशाहेन प्रैवजायतेऽभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति' (आ० श्रौ० २१।१।१) । क्वचित् कल्पसूत्रे महाभारतसदृशा भाषा प्रयुक्ता दृश्यते, एतत्तथ्यं श्रीमद्भिर्भगवद्दत्तमहोदयैः 'भाषा का इतिहासे' लुप्तपदप्रकरणे प्रकटीकृतम् । कानिचित् वर्तमान-पदरूपाणि तु आपस्तम्बकल्पे एवंविधानि सन्ति—

| **वर्तमान रूपाणि** | **आपस्तम्बेन प्रयुक्तानि रूपाणि** |
|---|---|
| अभिचारः | अभीचारः (आप० धर्म० १।१०।२९।१३) |
| परिणाहः | परीणाहः (आ० श्रौ० १।५) |
| प्रतिघातः | प्रतीघातः (आ० श्रौ० २।२।५।१०) |
| यथाकथंचित् | यथाकथा (आ० धर्म० १।२८।१) |
| दाराभिः | दारेण (आ० श्रौ० १।२।७।२७) |

एवं 'लुनाति' इत्यस्य श्नाऽप्रत्ययस्य स्थाने लुनोति' इति श्नुप्रत्ययं प्रयुक्तवानाचार्यः (आ० श्रौ० १।४।४।२) । एवमन्यानि श्नुपदप्रयोग-स्योदाहरणानि मृग्यानि ।

**षष्ठ्यर्थे चतुर्थी विभक्तिः**—ब्राह्मणसदृशः षष्ठ्यर्थे चतुर्थीप्रयोगस्तु बाहुल्येन दृश्यते आपस्तम्बश्रौतसूत्रे—

दक्षिणायै (आ० श्रौ० २।८।३)
रात्रियै (आ० श्रौ० १५।१२।७)

उत्तरायै (आ० श्रौ० १६।१६।७)
अश्वत्थशाखायै (आ० श्रौ० १८।११।२)

**विभक्तिलोप**—मन्त्रब्राह्मणवत् व्योमन्, आत्मन् आदीनि नकारान्तानि प्रातिपदाकान्येव एवं प्रयुक्तानि—

| | | |
|---|---|---|
| सप्तम्यर्थे—'अहन्' | (आ० श्रौ० ६।२।१) | (अहनि) |
| ,, 'आसन्' | (आ० श्रौ० ५।३।१६) | (आसनि) |
| ,, 'आत्मन्' | (आ० श्रौ० ६।२८।१०) | (आत्मनि) |
| ,, 'वर्त्मन्' | (आ० श्रौ० २।३।१३) | (वर्त्मनि) |
| ,, 'शीर्षन्' | (आ० श्रौ० १।४।१५) | (शीर्षणि वा) |

**धातुरूपाणि**—धातुरूपेषु तावत् केचन विशिष्टाः प्रयोगा उदाहर्तव्याः यथा—'देयात्' दद्यात् वा इत्यस्य स्थाने 'दयीत' (आ० श्रौ० ५।१२५।१८), एवमन्यानि धातुरूपाणि-'प्रक्षालयीत', 'अभिप्रसारयीत', इत्यादीनि चोपलभ्यन्ते। तथा हि 'अपसारयीत' (आ० धर्म०, पृ० ५१), सेक्रेड बुक आफ ईस्ट, २)। कर्मप्रवचनीयानां प्रयोगास्तु प्राचुर्येण सन्ति, यथा—'अणिकाषम्' (आ० श्रौ० २।११।३), अनवानम् (आ० श्रौ० २४।११।७), 'अनुपरिक्रायम्' (आ० श्रौ० २।१३।१), अनुपरिचारम् आ० श्रौ० १७।११।३), 'अनुपरिहारम्' (आ० श्रौ० १७।१।५)।

**अनिर्बद्धानामुपसर्गाणां प्रयोगः**—वयं मन्त्रब्राह्मणवत् आपस्तम्बश्रौतसूत्रेऽपि अनिबद्धानामव्यवहितानां चोपसर्गाणां[1] प्रयोगं पश्यामः, यथा—'अभि[2] वा मन्त्रयेत' (आ० श्रौ० ६।५।१), 'अभि च गर्हयते' (आ० श्रौ० ६।१६।११), 'प्रैव जायन्ते' (आ० श्रौ० २३।२।६) 'विपाप्मना भ्रातृव्येण वर्तन्ते' (आ० श्रौ० २३।७।१), 'अभि स्वर्गं लोकं—जयन्ति' (आ० श्रौ० २३।६।१)।

**आपस्तम्बश्रौतसूत्रे आर्षसन्धिप्रयोगः—(प्राकृतप्रयोगखण्डनम्)**—गार्वेमहोदयाः 'दुर्वराहैक'[3] इत्यस्मिन् पदसन्धौ त्वनियमितवैदिक-

1. 'न निबद्धा उपसर्गा अर्थान् निराहुरिति शाकटायनः। उच्चावचाः पदार्था भवन्तीति गार्ग्यः। तद् य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणम्' (निरुक्ते १।३)
2. तुलनीयं च—'तदेषामियं गाथा गीयते (ऐ० आ० ८।२१)
'तदेतद्गाथयाऽभिगीतम्' (श० ब्रा० १३।५।४।२)
3. आ० श्रौ० (८।१०।१५)।

सन्धि पश्यन्ति स्म। तन्न, पाणिनिप्रमाणेन त्वत्रानियमितसन्धिर्भवितु-मर्हति, किन्तु पूर्वाचार्यवैयाकरणप्रमाणैर्नैष दुष्टः प्रयोगः। किन्तु आर्ष-प्रयोगो व्याकरणसम्मतश्चास्ति।

तथा हि पाश्चात्यलेखका आपस्तम्बसूत्रेषु प्राकृतभाषायाः प्रभावं पश्यन्ति।[1] यथा, वैदिकपदेषु 'णत्वस्य' प्रयोगे ते प्राकृतभाषाया लक्षणं विदुः। नैषा प्रामाणिकी अनुसन्धानपद्धतिः, अपितु कल्मषपथ एवेति मन्तव्यम्। एतत्तु विचारणीयमस्ति यत् पाणिनेः पूर्वभवानामा-पस्तम्बादीनां कृते पाणिनिस्तु कथं प्रमाणं भवेत्। आपस्तम्बस्तु गालव-भारद्वाजादीनां व्याकरणशास्त्राण्यनुवर्त्य शब्दान् प्रायुङ्क्त ततः तस्य सूत्रेषु प्राकृतभाषायाः प्रभावः कथं भवेत्, नैतद् बुद्धिगम्यमस्ति। अत एव वितथमिदं पाश्चात्यमतम्।

तत्र णत्वस्य प्रयोगे प्राकृतप्रभावो न विद्यते। प्रातिशाख्येषु, अष्टाध्यायां च बहुधा णत्वविधानं दृश्यते, यथा कात्यायनश्रौतसूत्रे (वाजसनेयसम्प्रदाये) 'रथवाहणमिति' प्रयोगो विहितः आपस्तम्बश्रौत-सूत्रे तु 'रथवाहनम्' इत्येव प्रयोग उपलभ्यते। तच्च सूत्रपुरस्सरं पूर्वमेव उदाहृतम्। तेन आपस्तम्बसूत्रेषु 'अनुलेपणम्', (आ० धर्म० १।३।११।१३), 'अणिकाषम्' (आ० श्रौ० २।११।३), 'व्यृषण्वा' (आ० श्रौ० १६।१३।६) इति एषु छान्दसत्वमेव मन्तव्यम्, न प्राकृतलक्षणमिद-मिति।

गार्वेमहोदयस्तु आपस्तम्बस्य 'घोटः' (आ० श्रौ० १५।३।१२) इति पदं प्राकृतभाषाया एव मन्यते स्म। तथा च स तत्पदं हिन्दी-भाषाया 'घोड़ा' इति पदेन सहचरत्तोलयति। एवं स 'तम्बलवीणा' (आ० श्रौ० २१।१७।१६) इति पदं च तमिलभाषाया मन्यते। हिन्दी-

1. "Prof. Buhler, in the introduction to his translation of the Apstamba Dharma Sutra (Sacred Book II, pp. XL–XLII) has analysed the linguistic pecularities and grammatical irregulatities, that is to say, derivation form Panini's rules of this work; and after him the same was done by Dr. Winternitz in regard to the App. Gr. Sutra." (Transactions of Vienna Academy, Phil. Hist. Calss XL pp. 13-17).

भाषाया 'तबला ?' इति पदे तम्बल इति पदस्यैव अपभ्रंशरूपम् विद्यते। गार्वे अत्र 'किट्टल' नामकस्य विदुषो मतमुपस्थापयति।[1]

निम्नलिखितेषु चापस्तम्बप्रत्युक्तेषु पदेषु अपि किञ्चित् वैशिष्ट्यं, छादसत्वं, अनवगमत्वम् (अबोध्यगम्यत्वं) वा दृश्यते लक्ष्यते च। तस्मादेषा सूचना अत्र संगृह्यते—

१. त्वष्टमती
२. सम्प्लोम्नाय
३. अध्यूर्द्धा
४. प्रत्यष्ठात्
५. त्रिः प्लाक्षः
६. विपर्यास्तः
७. अजगावः
८. उपगीथः
९. कृष्णामधुस्
१०. क्रिडिणः
११. तिसृधन्वः
१२. त्रिगधः
१३. दृशीकुः
१४. प्लेङ्खः
१५. अनिष्टुब्धः
१६. अनुपमक्षत्
१७. अत्युप्तवहः
१८. बल्कसः
१९. बाष्कः
२०. मयैडकः
२१. मरायुः
२२. धन्यमरायुः
२३. मसूस्यः
२४. हिम्बिनी
२५. हिल्लुः
२६. हिल्लुका
२७. अनतिदृश्य
२८. एकस्मान्न पञ्चाशत्
२९. ऋत्व्यः
३०. उल्व्यः
३१. ऋत्वे
३२. क्वातिर्यङ्
३३ किकिदीवि
३४. क्वलः
३५. चर्मकर्त्तः
३६. दिदृक्षेण्यः
३७. अभितराम्
३८. उदञ्चनः

1. "Nevertheless, the employment of Hindi word 'ghora' by an author of Apstamba's time is rather surprising. Tambala in Tambal Vina occuring twice has been borrowed from the Dravidian. According to a communication of Dr. F. Kittel, ihe reputed Canarese scholar the word Tambal comes from Canarese (कन्नड़). In this language Tambala or Tambala means Tamil Tambal Vina, is, therefore 'a Tamil guitar' (Ap. SS. Int. p VIII, Vol. 3).

| | |
|---|---|
| ३९. उपमज्जनः | ४२. अपघाटलिका |
| ४०. त्रिशिमासः | ४३. घोटप्रकारः |
| ४१. चनसितः | ४४. तम्बलवीणा |

**नपुंसकलिंगस्य पुल्लिंगप्रयोगाः**

| | |
|---|---|
| १. अग्न्युपसमिन्धनः | ६. स्रुगादानः |
| २. अग्न्युपस्थानः | ७. उपधानः |
| ३. अवरोहणः | ८. कपालविमोचनः |
| ४. उपाकरणः | ९. आयणः |
| ५. सादनः | १०. प्रत्यायनः[1] |

## मन्त्रविनियोगपाठयोर्भेदनिदर्शनम्

आपस्तम्बश्रौतसूत्रस्य मन्त्रविनियोगपाठस्तु प्रायेण सम्पूर्णां तैत्तिरीयसंहितां संवृणोति, एवं कात्यायनश्रौतसूत्रमपि प्रायेण वाजसनेयिसंहितायाः (शुक्लयजुर्वेदस्य) सम्पूर्णान् मन्त्रान् संवृणोति, तस्मादुभयोः श्रौतसूत्रयोर्मन्त्रपाठयोरुद्धरणमशक्यमिति मत्वा केवलमत्र निदर्शनार्थं तयोः पाठभेदः प्रदर्श्यते ।

उभयोः श्रौतसूत्रयोर्मन्त्रपाठाः प्राचुर्येण सामान्या विद्यन्ते, तथापि यत्र क्वचित् तयोर्भेदोऽपि वर्तते, तदवलोकनीयं यथा—आहवनीयाधाने मन्त्रप्रयोगे—

| कात्यायनश्रौतसूत्रे | आपस्तम्बश्रौतसूत्रे |
|---|---|
| ममाग्ने वर्चो विहवेष्वस्तु | देवा गातुविदो गातुं विन्दत । |
| वयं त्वेन्धानास्तन्वं पुषेम | मनस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम् ॥ |
| मह्यं नमन्तां प्रदिशश्चतस्रः | ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धाना- |
| त्वयाध्यक्षेण पृतना जयेम | स्तन्वं पुषेम मह्यं नमन्तां प्रदिशश्चतस्रः |
| (का० श्रौ० २।१।३) | त्वयाध्यक्षेण पृतना जयेम ॥ |
| (ऋ० १०।१२८।१) | (आ० श्रौ० ११।१।१४) |
| | (तै० सं० १।७।१४।१) |

एवं व्रतग्रहणे मन्त्रपाठभेदः—

| कात्यायनश्रौतसूत्रे | आपस्तम्बश्रौतसूत्रे |
|---|---|
| अग्ने व्रतपते व्रतं चरिष्यामि | विद्युदसि विद्यते पाप्मानमनृतात् सत्य- |

1. द्रष्टव्यः—गार्वेकृते भूमिकापदसूच्याम् ।

तच्छकेयं तन्मे राध्यताम् ।
इदमहमनृतात्सत्यमुपैमि ॥
(का० श्रौ० २।१।११)
(शु० द० १।२)

मुपैमि सम्राडसि व्रतपा असि व्रतपति-
रसि तत्ते प्रब्रवीमि तच्छकेयं तेन शकेयं
तेन राध्यासमिति ।
(आ० श्रौ० ४।१।१६)
(तै० सं० ४।७।१४।१)

तथा च तण्डुलानामाहननादौ मन्त्रेषु भेदश्च द्रष्टव्यः—

| **कात्यायनश्रौतसूत्रे** | **आपस्तम्बश्रौतसूत्रे** |
|---|---|
| कुक्कुटोऽसि मधुजिह्वः । | कटरुरसि मधुजिह्वः |
| परापूतं रक्षः परापूता अरातयः | परापूतं रक्षः परापूता अरातयः । |
| (का० श्रौ० २।४।१६–२१) | (आ० श्रौ० १।५।१९।७) |

उभयोः श्रौतसूत्रयोः पाठभेदस्तु सर्वत्र उपलभ्यते, सोमग्रहग्रहणे चेमानि उदाहरणानि द्रष्टुं योग्यानि—यथा ऋतुग्रहाणां ग्रहणे—

आपस्तम्बस्य मन्त्रपाठो लघिष्ठः, कात्यायनस्य पाठो द्राघीयान्—

| **कात्यायनश्रौतसूत्रे** | **आपस्तम्बश्रौतसूत्रे** |
|---|---|
| उपयामगृहीतोऽसि मध्वे त्वोपयाम गृहीतोऽसि माधवाय त्वोपयामगृहीतोऽसि शुक्राय त्वोपयामगृहीतोऽसि शुचये त्वोपयामगृहीतोऽसि नभसे त्वोपयामगृहीतोऽसि नभस्याय त्वोपयामगृहीतोऽसि इषे त्वोपयाम गृहीतोऽस्यूर्ज्जे त्वोपयामगृहीतोऽसि सहसे त्वोपयामगृहीतोऽसि सहस्याय त्वोपयामगृहीतोऽसि तपसे त्वोपयामगृहीतोऽसि तपस्याय त्वोपयामगृहीतोऽस्यहंस्पतये त्वा ॥ (का० श्रौ० ९।१३), (शु० य० ७।३०) | मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चोपयामगृहीतोऽसि संसृपोऽस्यहंस्पत्याय त्वा। (आ० श्रौ० १२।२९।११–१२) (तै० सं० १।४।१४–१–१४) |

एवं साविमग्रहग्रहणे—मन्त्रपाठभेदः—

| **कात्यायनश्रौतसूत्रे** | **आपस्तम्बश्रौतसूत्रे** |
|---|---|
| वाममद्य सवितर्वाममु श्वो दिवे वाममस्मभ्यं सावीः । वामस्य हि क्षपस्य देवभूरेरया धिया वाम- | अदब्धेभिः सवितः आयुभिष्ट्वं शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्व सुविताय नमसे रक्षा |

| | |
|---|---|
| भाजः स्याम ॥ | माकिर्नो अघशंस ईशत ॥ |
| (का० श्रौ० (१०।५।१३) | (आ० श्रौ० ) |
| (शु० य० (८।६) | (तै० सं० १।४।२४।१) |

यद्यप्युभयोः श्रौतसूत्रयोः संहितयोर्मन्त्राः प्रतीकरूपेणैवोदाहृतास्तथापि कात्यायनस्योद्धरणाः (प्रतीकाः) अल्पीयांसः, आपस्तम्बस्योद्धरणा द्राधीयांसो भवन्ति, तथा चावलोकनीयम्—

| **कात्यायनश्रौतसूत्रे** | **आपस्तम्बश्रौतसूत्रे** |
|---|---|
| प्रतीकमन्त्राः (भुवपतय) इति स्कन्नं हविरभिमृशेत् । ययोरोजसेति 'स्कन्नं सोमम्' उदकेतोपसि उचति । (का० श्रौ० (२५।२।५–१०) क्वचित्कात्यायनोऽपि पूर्णमन्त्रमुदाहरति यथा स्वप्नप्रायश्चित्ते— 'यो मेऽद्य पयसो रसः परिदोषा दुर्दपिथः । अग्निहोत्रमिव सोमेन तमहं पुनराददे ।' (२५।११।२१) | अस्कान् द्यौ पृथिवीमस्कानृषभो युवा गाः । स्कन्नेभ्य विश्वा भुवनाः स्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजन्या स्कान्नाज्जाते वृषा । स्कन्नात्प्रजनिषीमहि ॥ इत्येवं पूर्णमन्त्रपाठमापस्तम्ब उदाहरति (आ० श्रौ० ९।१८।५।५-१०) |

तथापि कात्यायनेन केवलं पञ्चाशन्मन्त्रा एव ऋग्वेदादिभ्यो ग्रन्थेभ्यः पूर्णरूपेणोदाहृताः, यदा आपस्तम्बेन अनेकशतमन्त्राः स्वस्मिन् श्रौतसूत्रे सङ्कलिता विद्यन्ते, उभयोः श्रौतसूत्रयोरन्येभ्यो ग्रन्थेभ्यः सर्वे मन्त्राः श्लोकाश्चोदाहर्त्तुमशक्यास्तेषां केवलमत्र सूचना संगृह्यते—

| **सूत्रसंख्या** | **का० श्रौ०** | **आ० श्रौ०** | **अन्या ग्रन्थाः** |
|---|---|---|---|
| २.१.३ | ममाग्ने वर्चो विहवे० (ऋ० १०।१२८।१) | आपस्तम्बश्रौतसूत्रे अन्येषां ग्रन्थानामुदाहरणानां बाहुल्याद् विस्तरभिया केवलं तेषां सूत्रसंख्या मन्त्रसंख्या च ह्यवात्र प्रदर्श्येते— | |
| २.१.१७ | भूपते भुवनपते (तै० ब्रा० ३।७।६।१) | | |
| २.१.१८ | अहं भूपतिरहं भुवनपति (का० सं० २।३।१।३) | | |
| २.१.१८ | अहे दधिषव्योदुतः (तै० सं० ३।२।४।४) | | |
| २.२.१ | इदमह बृहस्पते (का० सं० २।३।३) | | |

| | | आ० श्रौ० सू० | मैत्रा० सं० |
|---|---|---|---|
| २.२२.८ | प्रणययज्ञ देवता | | |
| | (आ० श्रौ० ३।१९।१) | | |
| २.२.१० | बृहस्पते परिगृहाण | | |
| | (आ० श्रौ० ३।१९।३) | | |
| २.२.१८ | या अप्स्वन्तर्देवतास्ता: | १४.११ | १.१.२ |
| | (का० सं० २।३।५–७) | २.१३.३ | १.१.१३ |
| २.८.१४ | यस्ते प्राण:— | ३.१.२ | १.४.३ |
| | (का० सं० १।१०।५) | ४.१६.४ | १.४.२ |
| २.८.१६ | यानि धर्मे० (तै० सं० १।१।७।२) | ५.८.७ | १.६.१ |
| | (मैत्रा० सं० १।१।८) | ५.२०.७ | १.६.४ |
| ३.३.१२ | अप्यायता ध्रुवा० | ६.६.२ | १.८.२ |
| | (का० सं० २।५।३) | ६.६.५ | १.८.३ |
| ३.४.२७ | प्रजापतेर्भागो सि० | ६.९.२ | १.८.६ |
| | (का० सं० २।३।७।८) | | |
| ३.६.११ | अहं त्वदस्मि० | ६.१४.१३ | १.८.६ |
| | (तै० आ० १।२।१।२० | | |
| ३.८.१ | उलूखलमुसले यच्च | ६.१८.२ | १.५.४ |
| | (का० सं० २।५।२।३) | | इत्यादि । |

| | | आ० श्रौ० सू० | काठक सं० |
|---|---|---|---|
| ३.८.२ | प्र मा मुञ्चामि० | ७.२३.९ | ३.७ |
| | (ऋ० १०।८५।२४) | | |
| ३.८.२२ | ततोऽसि तन्तुरसि० | | |
| | (का० सं० २।६।९१) | | |
| ४.२.३२ | संपृचध्वमृतावरी० | ९.१९.२ | ८.१० |
| | मैत्रा० सं० ४।१।२) | | |
| ४.४.२१ | वाज्यहम्० (काण्वसं० ३।९।२) | १२.१२.७ | २७.८ |
| ४.७.१७ | देवा० पितर:० | १३.७.५ | २८.४ |
| | (काण्वसं० ४।१४) | | इत्यादि । |

| | | आ० श्रौ० सू० | ऋग्वेद सं० |
|---|---|---|---|
| ४.१४.२२ | इह पुष्टिम्० (काण्वसं० ३।२।५) | | |
| ५.२.१४ | सवित्रा प्रसूता | ५.१७.२ | ९.६६.२० |
| | (काण्वसं० ३।९।३) | | |

| सू० सं० का० श्रौ० | | आ० श्रौ० सू० | ऋग्वेद सं० |
|---|---|---|---|
| ५.१२.६ | अग्निना० (ऋ० १।१।३) | ५.१६.३ | १.४०.५ |
| ५.१२.६ | गयस्फानो अमीवहा (ऋ० १।६१।१२) | ५.२३.६ | ६.१३.१, २ |
| ५.१२.१८ | अग्निसोम: (श० ब्रा० ११।४।३।६) | ७.२८.२ | ३.८.१० |
| ५.१२.१२ | त्वष्टारूपाणि (श० ब्रा० ११।४।३।७) | | इत्यादि । |
| | | **आ० श्रौ० सू०** | **वाजस० सं०** |
| ५.१३.१ | अग्निरन्नाद: (श० ब्रा० ११।४।३।८-१७) | १२.१४.१२ | ७.१० |
| ५.१३.३ | नू नो रास्व (ऋ० ३।१३।७) | १२.१४.१५ | ७.१७ |
| ६.१३.३ | द्यौष्पृष्ठम्० (श० ब्रा० ११।७।२।६) | १३.१५.१४ | ७.४७ |
| ६.४.३ | अग्निर्ह देवानाम्० (श० ब्रा० ३।७।४।१०-२१) | १३.१६.३ | ३४.५३ |
| ६.८.१५ | जुष्टो वाचे० (तै० सं० ३।१।१०।१) | १७.१८.१ | १७.६२-६६ |
| ६.१२.४ | हिन्व मे गात्राणि (तै० सं० ३।२।५।३) | २१.२२.३ | ३३.८० इत्यादि । |
| ६.१४.१७ | विश्वेदेवा मासत० (तै० सं० ३।१।६।२) | **आ० श्रौ० सू०** | **अथर्व० सं०** |
| १०.३.२२ | इदं तृतीयसवनम्० (तै० सं० ३।१।६।२) | ४.१३.४ | ७.२७ |
| १०.५.३ | अशिर्मे (तै० सं० ३।२।५।८) | ४.१४.४ | १०.५.१३ |
| १०.६.२० | अग्नीन्नेष्टु: (श० ब्रा० ४।४।२।१७) | ५.६.११ | १२.१.५५ |
| १०.६.८ | अपाम सोमम् (ऋ० ८।४८।३) | १६.१६.१ | ८.५.१६ |
| १३.१.११ | श्येनोऽसि० (तै० सं० ३।२।१।१) | २१.६.१५ | ७.२२.१,२ इत्यादि । |

| | | आ० श्रौ० सू० | पञ्चविंश ब्रा० |
|---|---|---|---|
| २३.३.१ | अग्ने वेर्होत्रम्० (ताण्ड्य० ब्रा० २१।१०।११) | | |
| २५.१.११ | ये ते शतं वरुण० (आ० श्रौ० ३।१३।१) | १३.२०.११ | १.६.११ |
| २५.१.१८ | सूयवसाद् भगवति० (ऋ० १।१६४।४०) | १४.२३.१ | ६.३.१ |
| २५.५.२६ | भूमिर्भूमिम्० (षड्विंश ब्रा० १।६।२०) | १४.२३.१४ | ६.३.३ |
| २५.५.३० | य ऋते चित् (ऋ० ८।१।१२) | २१.८.१० | १३.१२.१५ इत्यादि । |
| २५.६.७ | अया विष्ठा जनयन् (मै० सं० १।७।१२) | | |

| | | आ० श्रौ० सू० | श० ब्रा० |
|---|---|---|---|
| २५.६.१३ | यत्पशुम्० (तै० सं० ३।१।४।३) | १.२५.३–६ | १.२.२.७–१० |
| २५.११.२१ | पर्यावर्ते दुःस्वप्न० (अथर्व० ७।१००।१) | ५.६.८ | १.२.५.१८ |
| २५.११.२३ | उन्दतीर्बलम्० (तै० सं० ३।१।१।३) | ७.१४.१४ | ३.८.१.५ |
| २५.१२.११ | हुतस्य चाहुतस्य काठक सं० ३५।५) | ६.५.५ | ३.६.२.१३ |
| २५.१२.४ | मायजमानम्० (तै० सं० ३।७।८।३) | ६.१०.१५ | १२.४.१.४ |
| २५.१३.२५ | वसव एतद्धः० (आ० श्रौ० १४।२०।७) | ११.१६.८ २२.१७.५–८ | ३.७.४.१०-११ ४.५.८.१६ इत्यादि । |

उभयोः कल्पयोः गवामयने गीयमानानां लौकिकगाथानां पाठभेदोऽपि अवलोकनीयः—

**का० श्रौ०** **आ० श्रौ०**

**संवत्सरगाथाः—**

गावो हारे सुरभय इदं मधु गाव एव सुरभयो गावो गुल्गुलगन्धयः
गावो गुल्मुलगन्धस्य इदं मधु गावो घृतस्य मातरस्ता इह सन्तु भूयसीः।

ता इह सन्तु भूयसीरिदं मधु ।
तव्या वयं प्लावामह इदं मधु
शम्याः प्रतरतामिवेदं मधु
न वै गावो मन्दीरस्य
गङ्गाया उदकं पपुः ।
पपुः सरस्वतीं नदीं
ताः प्राच्य उज्जगाहिर
इदं मधु निर्गीय सर्वा
आधीरिदं मधु ॥
(का० श्रौ० १३।३।२१)

ननु गावो मङ्कीरस्य गङ्गाया उदकं पपुः
पपुः सरस्वतीं नदीं प्राचीश्चोज्जगाहिरे ।
इमा वयं प्लवामहे शम्याः प्रतरतामिव ।
निकीर्यं तुभ्यं मध्यआकर्ष्यं कर्श्यो यथा ।
यदा भङ्ग्याश्विनौ वदत ऋतकर्पणक योऽवधीः ।
आविष्कृतस्य दूषणमुभयोरकृतस्य च ।
यदा राखाटचौ वदतो ग्राम्यमङ्कीर-दाशकौ ।
क्षेमे व्यृद्धे ग्रामेणानड्वाँस्तप्यते वहन् ॥
इदं कल्याण्यो अपिबन्निदं सोमोऽसूयत ।
इदं हिरण्यैः खीला आवायान्साकिथ मज्जनम् ।
(आ० श्रौ० २१।२०।३)

आपस्तम्बश्रौतसूत्रे हिल्लुका हिम्बनी च इत्याख्ये द्वे द्वे इति चतस्रो गाथाश्च गीयन्ते । (आ० श्रौ० २१।२०।२) कात्यायनश्रौतसूत्रे गाथानामेतावान् विस्तारो नास्ति ।

**साम्यम्**—

एवं बहुविधेषु भेदेषु सत्स्वपि उभयोश्श्रौतसूत्रयोस्साम्यं हि अधिकं वर्तते । अनयोः श्रौतसूत्रयोस्तु का कथा प्रायेण सर्वेषामेव श्रौतसूत्राणां विषयाः समाना एव सन्ति, अत्रापि अन्तरङ्गभेदस्तु अल्पीयानेव । उभयोः कल्पयोः श्रौतयज्ञानां विधानानि, मन्त्रपाठाः, विषयक्रमश्च बाहुल्येन समानाः, उभयोर्ग्रन्थयोः सूत्ररचना, भाषा च लौकिक्येव, तथाप्युभयोश्श्रौतसूत्रयोः केचनान्तरङ्गा बहिरङ्गाश्च भेदाः सन्ति, एवं ऊरीकृत्यापि तयोः समानता बाहुल्येन स्वीकर्त्तव्या ।[1]

—::●::—

1. कात्यायनापस्तम्बाभ्यामुभाभ्यां छन्दोगब्राह्मणेभ्यो—गवामयनम्, एकाहाः, अहीनाः, व्रात्यस्तोमाः, सवाः, रात्रिसत्राणि, सत्राणि, दीर्घसत्राणि, द्वादशाहयज्ञः एवमादयो विषयाः परिगृहीता विद्यन्ते । यजुर्वेदीयब्राह्मणेषु चैषां विषयाणां विवेचनं नास्ति । एतत्साम्यमपि यथाप्रकरणं प्रदर्शयिष्यते, तत् तत्रैव द्रष्टव्यम् ।

# चतुर्थोऽध्यायः

# कात्यायनापस्तम्बश्रौतसूत्रयोः परिभाषाणां तुलनात्मकमध्ययनम्

**उभयोः परिभाषापाठयोर्भेदः**—कात्यायनश्रौतसूत्रे षड्विंशतिरध्यायास्सन्ति, एवं चापस्तम्बश्रौतसूत्रे चतुर्विंशतिरध्यायाः परिगण्यन्ते। तत्र कात्यायनश्रौतसूत्रस्य प्रथमेऽध्याये यज्ञपरिभाषाः प्रोच्यन्ते, तावत् आपस्तम्बश्रौतसूत्रस्यान्तिमे (चतुर्विंशे) अध्याये तास्तूच्यन्ते। तथा च कात्यायनकल्पे तत्र परिभाषापाठमात्रमेवोक्तम्, आपस्तम्बकल्पे तु परिभाषा पाठे हि प्रवराः, हौत्रकल्पश्च विद्यन्ते, कात्यायनेन त्वेतावुभौ विषयौ पृथक् पृथक् परिशिष्टयोः (प्रवराध्याये, हौत्रकल्पे च) समाम्नातौ विद्येते। गार्बेमहोदयस्य मते[1] तु आपस्तम्बस्य परिभाषापाठः समग्ररूपेण प्रक्षिप्त उत्तरकालिको अध्याय एवेति मन्तव्यः। प्राचीनटीकाकारास्तु नैवं मन्यन्ते स्म। तथा चोक्तं चौण्डपाचार्येण प्रयोगरत्नमालायां—'चतुर्विंशे ततः प्रश्ने न्यायप्रवरहौत्रकम्।' इति आपस्तम्बीयकल्पनिखिलप्रश्नार्थसंग्रहप्रसङ्गेन न्यायसंज्ञया परिभाषाभागस्य चतुर्विंशघटकतामुपवर्णयन् न परिभाषाप्राथम्यपक्षं सूचयति। ननु यज्ञं व्याख्यास्याम' इति परिभाषाया उत्तरत्रेदानीमध्ययनात् तदानन्तर्यं दर्शपूर्णमासव्याख्यानस्याप्रसङ्गात्। उच्यते व्याख्यानसौकर्याय भाष्यकारादिभिरग्रे व्याख्यानात् अन्तेऽध्येतृभिरधीयते। तत्प्रणयनं त्वादावेवेति मन्तव्यम्; शांखायनकात्यायनाश्वलायनादीनां कल्पेषु परिभाषोपक्रमत्वं दृश्यते, तत्तद्व्याख्यातृभिरपि स्पष्टमुक्तं च।

---

1. Whilst in above cases latet interpolations of a limited extent are in question, I, now, have to state a very considerable interpolation in as much as the entire Prashna XXIV can be proved to have been inserted by a later hand. (Preface, p. xiv)

कात्यायनश्रौतसूत्रे प्रथमेऽध्याये दशसु कण्डिकासु यज्ञपरिभाषाः प्रोक्ताः, आपस्तम्बश्रौतसूत्रे चतुर्विंशेऽध्याये यज्ञपरिभाषाः, प्रवराः, हौत्रकल्पश्च विद्यन्ते, तथापि कात्यायनेन तृतीयेऽध्याये (प्रथमद्वितीय-कण्डिकयोः) केचन हौत्रपदार्था यत्र क्वचित् समाम्नाताः, तेनाचार्येण प्रवरास्तु परिशिष्टे प्रोक्ताः, इति च ज्ञेयम् ।

तत्रोभयोराचार्ययोः परिभाषापाठयोर्विषयाणामिदं क्रमभेदनिदर्शनम्—

| **कात्यायनस्य क्रमः** | **आपस्तम्बस्य क्रमः** |
|---|---|
| यज्ञाधिकारः | यज्ञाधिकारः |
| यज्ञविचारः | मन्त्रस्वरविधानम् |
| यजतयः | आर्त्विज्यम् |
| जुहोतयः | मन्त्रब्राह्मणलक्षणम् |
| मन्त्रादिलक्षणम् | मन्त्रविनियोगविधिः |
| मन्त्रविनियोगविधिः | यज्ञाङ्गविचारः |
| आर्त्विज्यम् | अवदानादिविचारः |
| परिधिसंख्यादिकथनम् | यज्ञप्रकृतिः |
| वेदीनिर्माणविधिः | प्रतिनिधिविचारः |
| यज्ञीयवृक्षकाष्ठादिविचारः | सोमयागप्रकृतिः |
| प्रतिनिधिविचारः | तन्त्रानुष्ठानम् |
| क्रमनियमः | यज्ञाग्निविचारः |
| सत्रविचारः | प्रवराः |
| तन्त्रानुष्ठानम् | हौत्रकल्पः |
| स्वरविधानम् | |
| कर्मचोदनादिविचारः | |
| प्रकीर्णकविषयाः | |

**यज्ञाधिकारः**—'यज्ञानुष्ठानेषु केषामधिकारः, को वा यज्ञं कर्तुमर्हति' इत्येवं प्रकरणं कात्यायनस्तु प्रथमाऽध्यायस्य प्रथमकण्डिकायां विस्तरेण मीमांसते। आपस्तम्बस्तु केवलमेकस्मिन् सूत्रे यज्ञाधिकार-प्रकरणं समापयति ।[1] कात्यायनस्तु 'अथातोऽधिकार'[2] इति सूत्रमारभ्य

1. 'स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च ।' (आ० श्रौ० २४।१।२)

2. का० श्रौ० १।१।१–१२

'निषादस्थपतिर्गार्विधुकेऽधिकृत:' इति पर्यन्तं द्वादशसूत्रेषु अधिकारप्रकरणमुक्तवान् । कात्यायनश्रौतसूत्रस्य भाष्यकार: कर्काचार्य: तं शास्त्रार्थमेवंविधं[1] प्रारभते—'सर्वेषां कर्मानुष्ठानसमर्थानां चान्धमूकपङ्गुबधिरदेवऋषितिरश्चां कर्मस्वधिकारो भवति—अविशेषात्, फलार्थित्वस्य सर्वेषामविशिष्टत्वात्, फलं हि सर्वैरिष्यत एव । तत्राचेतनानां वृक्षादीनां कामनाभावादस्त्वनधिकार: । तिरश्चां तु भवति । तिर्यञ्चो हि तापोपतप्ताश्च छायां व्रजन्ति, शीतपीडिताश्चातपम् । ······श्वानश्चतुर्दश्वामुपवसन्ति, श्येनाष्टमीमिति लिङ्गान्यपि वेदे सन्ति 'देवा ह वै सत्रमासत' (श० ब्रा० ४।६।५।१) 'सर्पा: सत्रमासत, वनस्पतय: सत्रमासत, गावो वा एतत्सत्रमासतेत्यादीनि' (पञ्चविंशब्राह्मणे ४।१) । तेषां च देवानां सर्पाणां वनस्पतीनां गवां चाधिकारं दर्शयति । इति पूर्वपक्ष: । पुनश्चाचार्य: कथयति आरम्भसामर्थ्यात् मनुष्याणामेव यज्ञानुष्ठानेऽधिकारो अस्ति ।' 'वा शब्द पक्षव्यावृत्तौ । न सर्वेषामधिकार: किं तु मनुष्याणामेव । कुत:, आरम्भसमर्थ्यात् ।······तस्मान्न गवादीनां तिरश्चामधिकार: । यानि पुनर्लिङ्गानि 'देवा ह सत्रमासतेत्यादीनि अर्थवादास्ते विधिप्ररोचनार्था:······।'[2]

आचार्येण अङ्गहीनानामपि यज्ञेऽधिकारो निषिद्ध: ।'[3]

**यज्ञे शूद्रस्याधिकारविषयिणी मीमांसा**—कात्यायनापस्ताम्भ्यां त्रैवर्णिकानां ब्राह्मणराज्यन्यानामेव[4] यज्ञानुष्ठाने अधिकारो विहित: । तयो: काले शूद्राणां यज्ञेषु अधिकारो नासीत् । किन्तु वेदे चैवंविधानि लिङ्गान्यपि सन्ति यै: यज्ञेषु शूद्रस्याधिकारो विहित आसीदिति गम्यते । स्वामिदयानन्दोऽपि[5] शुक्लयजुर्वेदादुदाजहार—

यथेमां वाचं कल्याणीमावदानि जनेभ्य: ।
ब्रह्मराजन्याभ्यां शूद्राय चार्याय स्वाय चारणाय ॥
(शु० य० २६।२)

---

1. विषयगौरवात्तु अयं शास्त्रार्थ: किञ्चिदविस्तरेण संगृह्यते ।
2. का० श्रौ० भाष्ये (पृ० ६-७)
3. का० श्रौ० १।१।५
4. का० श्रौ० १।१।६, आ श्रौ० (२४।१।२)
5. सत्यार्थप्रकाशे, पृ० ६५ ।

शातपथीश्रुतावपि[1] (१।१।४।१२) यज्ञेषु शूद्रस्याधिकार आसीदिति च गम्यते। ऐतरेयब्राह्मणे च कवषस्य एलूषस्याख्यानमुपलभ्यते, तत्र दासीपुत्रः कवष ऋषीणां यज्ञे उपासांचक्रे।[2] एवमैतरेयर्षिरपि दासीपुत्रः सन्नपि महान् याज्ञिको बभूव येन ऐतरेयब्राह्मणं प्राणायि। एवं शूद्रापुत्रः सत्यकामो जाबाल उपनिषत्सु[3] महर्षिपदं लेभे। एवं चान्यानि बहून्युदाहरणानि सन्ति, यैर्ज्ञायते जन्मना हीना शूद्रादयः कर्मणा ब्राह्मणादिभ्योऽपि महान्तो बभूवुरिति। सूत्रकाराणां युगे यज्ञानुष्ठानेषु शूद्रा बहिष्कृता आसन्, तदानीं जन्मना एव चातुर्वर्ण्यविभागः पराकाष्ठां नीतः, जन्मना चातुर्वर्ण्यविभागस्तु दोषावहः एवेति मन्तव्यम्, कर्मणा वर्णविभागः प्रशस्यो भवितुमर्हति। यदि जडबुद्धीनां श्रमिकादीनां कृते विद्याध्ययनं (वेदाध्ययनं) वर्जितं भवेत् तत्र तु न काचित् हानिः, यर्हि कुशाग्रबुद्धिरपि केवलेन जन्मना अधःपात्यते सैव पापीयसी सामाजिकी व्यवस्था इत्येवं सुनिश्चितम्। प्रारम्भे यज्ञानुष्ठानेषु गुणकर्महीनानामेव निषेध आसीत्, किन्तु कालान्तरेण गुणवन्तोऽपि यज्ञाद् बहिष्कृताः। महर्षेर्जैमिनरेपि अयमेवाशयः प्रतीयते, तन्मते शूद्रस्तु विद्याभावादेव कर्मणि निषिध्यते। गुणवाँस्तु यज्ञमनुष्ठातुमर्हतीति तस्य शास्त्रार्थस्य फलम्।[4] उत्तरेषु युगेषु (मध्यकाले) वेदस्य मूलोद्देश्यमेव विनिहितं पाषण्डादिभिस्तेन सगुणा वैद्या विद्वांसः (जन्मना शूद्राः) श्रेष्ठकर्मसु बहिष्कृताः कृताः। वेदमन्त्रेषु तु चारणादीनामपि यज्ञादिष्वधिकारो विहितः।

**अग्न्याधाने रथकारस्याधिकारः**—सूत्रकारैः शूद्रेष्वपि रथकाराणामाधाने अधिकारो विहितः।[5] अत्रेदं संदिह्यते किं त्रैवर्णिकानामन्यतमो रथकारः, आहोस्वित् रथकरणात् रथकार उच्यते, तच्च किञ्चिज्जात्यन्तरमिति प्रश्नः। शूद्रस्त्वाधाने प्रतिषिद्ध आसीत्। अस्मिन् विषये अनेके पक्षाः शास्त्रकारैः परिगृहीता आसन्। तान् पक्षानवगन्तुं

1. 'आधावेति शूद्रस्य'
2. ऐ० ब्रा० ८।१।१९
3. छा० उ० ४।४।४
4. 'अवैद्यत्वादभावः कर्मणि स्यात्' इत्यादीनि (जै० मी० सू० ६।१।३७) सूत्राणि द्रष्टव्यानि।
5. का० श्रौ० १।१।६, आ० श्रौ० ५।१।३।१८

पूर्वं रथकाराणां किञ्चित् ऐतिह्यमनुसंधानीयमेवेति मन्तव्यम्। मनुना मनुस्मृतौ[1] रथकारस्तु 'सुधन्वाचार्य' इति स्मृतः। अत्र मनूक्तो यः सुधन्वाचार्यो व्रात्यवैश्यपुत्रः तत्पुत्राणां सौधन्वानामृभूणामेवात्राधिकारः। सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णाच्छागन्यायेन सौधन्वानामेवाधिकार इति। तत्र भाष्यकाराणां रथकारसौधन्वनऋभुपदानां व्याख्यानं न सत्यं प्रतिभाति मे। सत्यानुसंधित्सुभिस्त्वत्र इतिहास एव शरणम्।

भारतीयेतिहासे भृगूणामङ्गिरसां चर्षीणां विशिष्टस्थानं सुनिश्चितमिति तथ्यं तु विदुषां विदितमेवास्ति। भृग्वङ्गिरसां वंशे सुधन्वाख्यः कश्चिदृषिरभवत्, अस्येतिवृत्तं तु महाभारतनिरुक्तबृहद्देवतादिषु ग्रंथेषूपलभ्यते।[2] अनेनैव इतिहासेन ज्ञायते यदाङ्गिरसस्य सुधन्वन ऋभुर्विभ्वा वाजश्चेति त्रयः पुत्रा बभूवुरिति। ते च कर्मणा शिल्पिनो (बर्द्धक्यः) आसन्। तेषामेव वंशजाः सौधन्वना रथकाराः संजाताः, अत एव जन्मना ऋभवो ब्राह्मणाः शिल्पिनः कर्मणा रथकाराः कालान्तरे शूद्रसंज्ञां च लेभिरे। अतश्च पूर्वयुगेषु चातुर्वर्ण्यविभागः कर्मणा विहितो न तु जन्मना।[3] इदानीमपि भारतीये समाजे तक्षाणः, भार्गवाः, बर्द्धक्यश्च शर्मपदेनाभिधीयन्ते। ते भृग्वाङ्गिरसस्य सुधन्वनो वंशजा देवानां तक्षाणो बभूवुरित्यैतिह्यम्, ते भार्गवा अद्यत्वेऽपि रथकारा भवन्ति, एतस्मात् कारणात् समाजे तेषां भूयसी प्रतिष्ठाऽऽसीत्, तेन तेषामग्न्या-

---

1. व्रात्यात्तु जायते वैश्यात्सुधन्वाचार्य एव च।
कारुषश्च विजन्मा च मैत्रः सात्वत एव च॥ (मनु० १०।२३)
तथा च जैमिनिरपि—'सौधन्वानास्तु हीनत्वान्मन्त्रवर्णात्प्रतीयरेन्।'
(जै० मी० सू० ६।१।५०)

2. निरुक्ते (११·१६), तथा च बृहद्देवतायाम्—सुधन्वन अङ्गिरसस्यासन् पुत्रास्त्रयः पुरा। ऋभुर्विभ्वा च वाजश्च शिष्यास्त्वष्टुश्चाभवन् शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन। (३।६३-८४)। तथा च—द्रष्टव्यम्—महाभारते—उद्योगपर्वणि पञ्चविंशेऽध्याये। ऋग्वेदे च सौधन्वना ऋभवः' (ऋ० ३।६०।४)

3. इन्द्रो वै ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत्। ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव। (शान्तिपर्वणि २२।११)। एवं विश्वामित्रः क्षत्रियः सन्नापि कर्मणा ब्राह्मणोऽभवत्॥

धाने विशेषाधिकारो विहितश्चासीत्। अत एव ऐतिहासिकतथ्यानभिज्ञानां कर्कादीनां भाष्यकाराणामत्रेदं 'संदिह्यते किं त्रैवर्णिकाणामन्यतमो रथकरणयोगाद्रथकारः आहोस्विन्नियतं किञ्चिज्जात्यन्तरमिति।' एवं निषादस्थपतिश्च गावेधुकेचरो अधिक्रियते। (का० श्रौ० १।१।१२)

**स्त्र्यधिकारः**—कात्यायनेन यज्ञे स्त्रिया[1] अपि अधिकारो विहितः। एवं जैमिनिनापि[2] यज्ञेषु स्त्रिया अधिकारो विहितः। यज्ञसंयोगाच्चैव हि सा पत्नी उच्यते।[3] अतः स्त्रीपुंसोः समानो अधिकारो विहितः सूत्रकारैः। केचित् मन्वते—यद्—'अद्रव्यत्वात् स्त्री निर्धना, अतः सा द्रव्यत्यागात्मकं कर्म कथं कर्त्तुमर्हतीति।[4] ऐतिशायनाचार्यो[5] मनुते स्म, 'श्रुतौ लिङ्गनिर्देशात् पुमानेवाधिकृतो यज्ञादिषु कर्मसु।' बादरायणस्तु[6] स्त्रियमपि यज्ञस्याधिकारिणीं मनुते स्म। आचार्यपादाः कात्यायनास्तु मन्यन्ते स्म—स्त्री चाग्निहोमादिकर्मस्वधिकारिणी भवति। यच्चोक्तं 'स्वर्गकामो यजेत' इति निर्देशस्तु श्रूयमाणो न विशेषकरः, यः स्वर्गकामः स यजेदित्याशयोऽस्य। स्त्रियाः क्रयमपि धर्ममात्रमेवास्ति- तथा हि सा स्त्री धनवती भूत्वा यज्ञं कर्त्तुं शक्नोति। तथा च श्रुतिः—'मेखलया यजमानं दीक्षयति, योक्त्रेण पत्नीमिति' 'पत्नी च गार्हपत्ये तूष्णीमिति' च पत्न्या यज्ञे साहित्यम्।

**यज्ञव्याख्यानम्**—कात्यायनापस्तम्बाभ्यामुभाभ्यामपि प्रतिज्ञातम्—'यज्ञं व्याख्यास्यामः'[7] इत्यत्र एकविंशतिसंस्थस्य[8] यज्ञस्य प्रतिज्ञा कृता।

---

1. **'स्त्री चाविशेषात्'** (का० श्रौ० १।१।७)
2. जै० मी० सू० (६।१।१३-१५)
3. 'पत्युर्नो यज्ञसंयोगे' (अष्टा० ४।१।३३)
4. उक्तं च मनुना—'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥ (८।४१६)।
5. जै० मी० सू० (६।१।६)
6. जै० मी० सू० ६।१।८
7. का० श्रौ० १।२।१
   आ० श्रौ० २४।१।१
8. 'सप्तपाकसंस्थाः, 'औपसनाहोमा वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति। सप्तहविर्यज्ञसंस्थाः, अग्निहोमः, दर्शपूर्णमासौ,

तत्र पूर्वाः सप्तयज्ञसंस्थाः स्मार्तकर्मण्युच्यन्ते, ते गृह्यसूत्राणां विषयाः, अपराश्चतुर्दश यज्ञसंस्थाः श्रौतसूत्राणां विषयाः।

कात्यायनसम्मतौ 'द्रव्यं देवतात्यागः[1]' एव यज्ञः। द्रव्यं पुरोडाश्चरुसान्नाय्यपशुसोमादिकम्', देवताश्चाग्निसोमेन्द्रविश्वादिशब्दवाच्याः। तेनैतत्सिद्धं देवतोद्देशेन द्रव्यत्यागो यागः। तदितरत् प्रोक्षणादिकं यागस्याङ्गं भवति।[2] तथा चाहाचार्यः अफलयुक्ता यजतयः प्रयाजादियागा आधारादिहोमाश्च यज्ञस्याङ्गानि भवन्ति। तथैव चापस्तम्बोऽपि विदधाति—दर्शपूर्णमासप्रकरणे चोद्यमानानि कर्माणि प्रधानानि भवन्ति[3], यथा—'आग्नेयो अष्टाकपालोऽग्नीषोमीय एकादशकपाल उपांशुयाजश्च पौर्णमास्यां प्रधानानि' (आ० श्रौ० २४।२।३०)। किन्तु 'पितृयज्ञः स्वकालविधानादनङ्गं स्यात्' सहाङ्गं पिण्डपितृयज्ञस्तु प्रधानं भवति (आ० श्रौ० २४।२।३६, ३९)।

**यजतयः, जुहोतयश्च**—यस्मिन् कर्मणि उपविष्टेन कर्त्रा होमः क्रियते तत् स्वाहाकारमयं कर्म जुहोतिसंज्ञां लभते, यत्र तिष्ठता कर्त्रा वषट्कारमयो होमः स याज्यापुरोऽनुवाक्यवान् यज्ञो यजतिसंज्ञां च लभते।[4] (का० श्रौ० १।२।६, ७)। आ० श्रौ० (२४।३।४, २४।३।१३)। अत्र विषये उभयोराचार्ययोः समानं मतमिति ज्ञेयम्। अत्र आपस्तम्बेन त्वयं विषयः चतुर्दशसूत्रेषु (२४।३।१–१४) विहितो यर्हि कात्यायनोऽत्र केवलं चत्वारि सूत्राणि रचयति।

**आर्त्विज्यम्**—कात्यायनापस्तम्बाभ्यामाचार्याभ्यां यत्प्रतिज्ञातं 'यज्ञं व्याख्यास्यामः' तत्तु सोमयागस्यैव न तु दर्शपूर्णमासादीनामिति ज्ञेयम्। आपस्तम्बमते (सर्वेषां वा मते) सोमयागस्तु ऋग्वेदयजुर्वेदसामवेदैस्त्रिभिर्वेदैः सम्पाद्यते, एवञ्च ऋग्वेदयजुर्वेदभ्यां दर्शपूर्णमासौ सम्पाद्येते, केवलं यजुर्वेदेनाग्निहोमः क्रियते। तत्र सोमयागेषु चत्वारः प्रधाना

---

आग्रायणं, चातुर्मास्यानि, निरूढपशुबन्धः सौत्रामणी, पिण्डपितृयज्ञादयो दर्विहोमाः इति। सप्त सोमसंस्थाः—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यषोडशी वाजपेयाप्तोर्याम इति। आ० श्रौ० धूर्तस्वामिभाष्यम्, पृ० २-३

1. का० श्रौ० १।२।२
2. का० श्रौ० (१।१।३)
3. आ० श्रौ० (२४।२।२६)
4. दर्विहोमास्तु जुहोतयः, अदर्विहोमा यजतय इत्युच्यन्ते (लेखकः)।

ऋत्विजो भवन्ति–तद्यथा–'ऋग्वेदेन होता करोति', 'सामवेदेनोद्गाता', यजुर्वेदेनाध्वर्युः', 'सर्वैर्वेदैर्ब्रह्मा[1]।' तत्र श्रुत्यादिषु केवलं ब्राह्मणानामेव आर्त्विज्यं विहितं नान्ययोर्वर्णयोः क्षत्रियवैश्ययोरिति। तथा चाहुराचार्यावुभावपि—'ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः', (का० श्रौ० २४।१।२१)। सोमयागे ज्योतिष्टोमप्रकरणे तु वक्ष्यते—'ब्राह्मणा ऋत्विज आर्षेया महान्तो युवानो बह्वपत्याश्च[2]' भवेयुः। 'शाखान्तरे च क्षत्रियवैश्ययोः सान्नायभक्षप्रतिषेधश्च श्रूयते 'न राजन्यो न वैश्यो वा सान्नायं पिबेदसोमपीथो ह्येष[3]' इति। ब्राह्मणग्रन्थेष्वपि चायमर्थो दृश्यते यद्ब्राह्मणा एव ऋत्विजो भवन्ति दक्षिणां च प्राप्नुवन्ति।[4] अत एवादिकालाद् ब्राह्मणानामेव आर्त्विज्यं विहितं नेतरेषामिति मन्तव्यम्।[5] स्वार्थपूर्तिकारणाद् ब्राह्मणैरयं विशेषाधिकारः स्वकल्याणाय सुरक्षितः कृतः।

**मन्त्रादिलक्षणम्**—तथोक्तमापस्तम्बेन 'मन्त्रब्राह्मणे यज्ञस्य प्रमाणम्।' 'मन्त्रब्राह्मणयोर्वेदनामधयेमिति।'[6] ततो मन्त्रस्य किं लक्षणम्?, जैमिनेराचार्यस्य मते—कर्मचोदकानि वाक्यानि मन्त्राणि भवन्ति।[7] कात्यायनस्य मते ते मन्त्राश्चतुर्विधा भवन्ति—'ऋचो यजूंषि सामानि निगदा मन्त्राः।'[8] आपस्तम्बेन मन्त्रस्य लक्षणं नोक्तम्,

---

1. द्रष्टव्यानि—आ० श्रौ० सूत्राणि (२४।१,३,४,५,६,७, १६–१९ च)
2. तुल० वाराह० श्रौ० (१।१।१।२३)
3. का० श्रौ० कर्कभाष्ये, पृ० २९
4. 'द्वय्या वै देवा इत्युपक्रम्य—'आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानां········तस्माद्दत्विग्भ्य एता दक्षिणा दद्यान्नानृत्विग्भ्यः।' (श० ब्रा० ४।३।४।५)
5. रामायणे चोक्तिर्दर्शनीया—
क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः॥ (१।५९।१३)
6 आ० श्रौ० (२४।१।३०-३१), तुलनीयमिदं वात्स्यायनस्य न्यायभाष्येण सह—'विषयव्यवस्थापनाच्च यथाविषयं प्रमाणम्, यज्ञो मन्त्रब्राह्मणस्य, पृ० २८३
7. 'तच्चोदकेषु मन्त्राख्या' (जै० मी० सू० २।१।३२)
8. का० श्रौ० (१।३।१)

एवं कात्यायनेनापि मन्त्रब्राह्मणयोः परिभाषा न कृता स्वस्मिन् श्रौत-सूत्रे। एवमुभाभ्यामाचार्यभ्यामृगादीनां लक्षणान्यप्यपरिभाषितानि। जैमिनिरेव ऋगादीनां लक्षणानि प्रब्रूते, तन्मते 'तत्रार्थवशेन वृत्तवशेन वा यत्र पादव्यवस्था सा ऋक्'[1] यथा—'अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्……।' इत्यादि। एवं 'अनियताक्षरपादावसानं यजुः[2]' 'गीतिषु सामाख्या'[3], यद्यपि प्रगीतं मन्त्रवाक्यं सामेत्यभियुक्तप्रयोग-स्तथापि तत्र विशेषेण गीतिः विशेष्याण्यृगक्षराणि नागृहीतविशेषणा विशेष्यबुद्धिरिति प्रथमप्रतीयमानत्वाद् गीतिरेव सामेत्युच्यते।'[4] निगमाः प्रैषाः परसम्बोधनार्थाः, यथा—'प्रोक्षणीः सादय', 'अग्नीन् विहर' इत्येवमादयः। 'ननु निगदा अपि यजूंष्येव उच्चैर्निगदे निगद्यन्ते तस्मात्ते निगदा उच्यन्ते[5], गद्य एव निगदः। तत्र केवलमुच्चारणभेदेन प्रयोजनभेदेन च यजुषामेव निगदाख्या।

आपस्तम्बोक्तं ब्राह्मणलक्षणम्—कात्यायनेन ब्राह्मणलक्षणं नोक्तम्। आपस्तम्बेन तु चतुर्षु सूत्रेषु[6], मन्त्रब्राह्मणार्थवादपरकृतिपुराकल्पानां लक्षणान्युक्तानि। तन्मते 'कर्मचोदना ब्राह्मणानि'[7] भवन्ति, तथा च ब्राह्मणमपि वेदसंज्ञां[8] लभते। तत्राचार्यपादेन सत्यव्रतसामश्रमिणा ऐतरेयालोचने ग्रन्थे ब्राह्मणलक्षणं विस्तरेणालोचितम्। तत्सारमत्र संगृह्यते—'अत्राह जैमिनिः 'शेषे ब्राह्मणशब्दः[9]' मन्त्रभागातिरिक्तो वेदभागो ब्राह्मणमिति तदर्थः। यद्यपि विचारेणेदं लक्षणं युक्ततममिति ऋग्भाष्यभूमिकायां सायणदिभिरङ्गीकृतम्, न तथाप्यर्थज्ञानाय तादृश-मिति मन्यामहे वयम्; एतल्लक्षणत एव तत्स्वरूपप्रतीतेर्ब्राह्मणग्रन्थानां वेदत्वे विप्रतिपत्तिदर्शनाच्च। अतोऽत्र 'कर्मचोदना ब्राह्मणानि' इत्या-

---

1. 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' जै० मी० सू० (२।१।३५)
2. जै० सू० (२।१।३४)
3. जै० सू० (२।१।३६)
4. का० श्रौ० भा० (पृ० ४३)
5. 'अपादबद्धो हि गद्य इत्युच्यते (शा० भा० पृ० ४४३)
6. आ० श्रौ० (२४।१।३०-३३)
7. आ० श्रौ० (२४।१।३२)
8. आ० श्रौ० (२४।१।३१)
9. जै० सू० (२।१।३३)

पस्तम्बलक्षणमेवोपाश्रयामहे ।'[1] ब्राह्मणेषु सर्वत्र प्राधान्येन यागविषय एवोपलभ्यन्ते तत्र यागेषु यागाङ्गद्रव्यदेवतामन्त्रादिषु प्रवृत्याद्युत्पादनार्थाः स्तुत्यादयः स्तुत्यादिपरा आख्यायिकाश्च बह्व्य आख्याताः श्रूयन्ते, ताः प्ररोचनार्थाः फलश्रुतय अर्थवादा अप्युच्यन्ते। तदप्युक्तमापस्तम्बेन 'ब्राह्मणशेषोऽर्थवादः निन्दा प्रशंसा परकृतिः पुराकल्पश्च[2] इति। तथा चाह गौतमो न्यायसूत्रेषु—'स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः'[3] तथा हि शबरस्वामिनाप्युक्तम्—

हेतुर्निवचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना ॥
उपमानं दशैते तु विधयो ब्राह्मणस्य तु ।[4]

**परकृतिः**—अयमेवार्थवादो निन्दारूपः प्रशंसारूपो वा अन्यकृत इति यत्रोपवर्ण्यते स परकृतिरित्युच्यते—यथा—'अग्निर्वा अकामयत', 'अन्नादो वा देवानां स्याम् ।' 'बबरः प्रावाहणिरकामयत' इत्याद्यन्यकर्तृकोपाख्यानं परकृतिः।

**पुराकल्पः**—पुराकल्पनामकं शास्त्रं ब्राह्मणानां (वेदभागानां) कश्चिद् भागो अथवा किंचित् स्वतन्त्रं शास्त्रमिति निश्चेतुं न पार्यते ।[5] ब्राह्मणानां वा 'पुराकल्प' इत्याख्या इत्येवमप्यनुमातुं शक्यते। सायणाचार्यस्तु—'पुरा ब्राह्मणा अभैषुः ।'[6] इत्यादीनि पुरावृत्तकथनानि वाक्यानि पुराकल्प इत्याहुः।

**मन्त्रविनियोगविधिः**-कात्यायनापस्तम्बाभ्यामुभाभ्यामाचार्याभ्यां यज्ञपरिभाषासूत्रेषु वेदमन्त्राणां प्रयोगाविधयो विनियोगविधयश्च

1. ऐतरेयालोचने, पृ० १–११
2. आ० श्रौ० (२४।१।३३)
3. न्यायसूत्रे (२।१।६४)
4. शाबरभाष्ये (२।१।८)
5. 'ऐतिह्यसमाचरितो विधिः पुराकल्पः' (न्यायभाष्ये २।१।६४), तथा चान्यानि प्रमाणानि 'पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते' (यमस्मृतौ), अश्वमेधे महायज्ञे पुराकल्पे स्वयम्भुवा ।' (वा० रा० १।१०।३५), श्रूयते पुराकल्पे नृणां व्रीहिमयः पशुः ।' (अनुशासनपर्वणि)।
6. तै० स० भाष्ये (१।५।७)।

विधीयन्ते। तदुक्तं कर्काचार्यैः 'लौकिको हि शब्दः सर्वार्थो यथेष्टं सर्वत्र विनियुज्यमानो न विरुध्यते। वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं शक्यते।'[1] कात्यायनमते च—तेषां मन्त्राणामारम्भे प्रयोगे विहितोऽर्थेन सामर्थ्येन लिङ्गेनानेन मन्त्रेणायं पदार्थः कर्त्तव्यः, अनेनायमित्येवंरूपा व्यवस्था भवति, तमेवार्थं वक्तुं शक्नोति नार्थान्तरमिति।[2] आपस्तम्बेन चोक्तम्, विशिष्टमन्त्रप्रयोगोऽर्थान्तरत्वात् कर्मान्तरे न प्रयोक्तव्यः।[3] तथा हि आचार्यो ब्रवीति 'मन्त्रान्तैः कर्मादीन् संन्निपातयेत्' (आ० श्रौ० २४।२।१)। कात्यायनमते त्वन्ये आचार्या कर्मण आदिमेव मन्त्रैस्सह योजयन्ति। यतो मन्त्रेण स्मृतं कर्म कर्त्तव्यम्[4]। अत्र तेन वात्स्याचार्यस्य मतमप्युपस्थापितम् तन्मते मन्त्र-

1. 'मिथः सम्बद्धम्' इति सूत्रस्योपरि कर्कभाष्यम् (का० श्रौ० १।३। )
2. का० श्रौ० (१।३।४)
3. आ० श्रौ० (२४।१।३७)
4. ब्राह्मणेषु श्रौतसूत्रेषु चानेकविधा मन्त्राणां क्लृप्ता दरीदृश्यन्ते। यास्कमते च यस्मिन् मन्त्रे यस्या देवताया लिङ्गं दृश्येत तमेव मन्त्रं तत्कर्मणि विनियुञ्जीरन्, नान्यम्, तथापि ब्राह्मणेष्वपि केचित् विनियोगा मन्त्रार्थैः सह न सम्बध्यन्ते, निश्चयेन वक्तुं पार्यते यदेतत्तु विनियोगकर्त्तॄणामज्ञानमेवासीत्। तथा चोक्तं यास्केन—स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥ (निरुक्ते १।१८) तथा हि डा० कृष्णलाल उवाच—'पुरोहितों के इस अज्ञान और उपेक्षा का वर्णन आदित्यदर्शन द्वारा अपनी पाकयज्ञविवृत्ति में उल्लिखित शब्दों में अधिक अच्छी प्रकार से किया जा सकता है, (गृह्यमन्त्र और उनका विनियोग, पृ० १६ पर), लौगाक्षिगृह्यसूत्र की भूमिका में (पृ० ७–८ पर) उद्धृत—'गर्जन्ति श्रोत्रिया गेहे निष्फलं शरदभ्रवत्। अर्थेन किं नो वेदस्य वदन्ति इति ते मिथः। अर्थज्ञानसमासज्जानर्थज्ञान् विहसन्ति ते।'

एवं च मीमांसकाः प० युधिष्ठिरमहोदया अपि 'वैदिक छन्दोमीमांसा'-ग्रन्थे—काल्पनिकविनियोगानां कानिचित् प्रसिद्धानि उदाहरणान्युदाहृतवन्तः। यथा—'युवं वस्त्राणि पीवसा वसाथे' इति वसाथे याज्या पीवसेति मेदसो रूपम्, एवं—'दधिक्राव्णो अकारिषम्' इति संबुभूवन् दधिभक्षम्। (शाखा श्रौ० ४।१३।२), तथाहि 'शन्नो देवी' इत्यादीनां

प्रयोगस्य कालनियमो नास्ति (का० श्रौ० १।३।६–७)। कात्यायनेन तु प्रतीकमात्रेण मन्त्रा संगृहीताः (ते आयुक्ताः का० श्रौ० १।३।८)। आपस्तम्बसम्मतौ—एकस्मिन् पदार्थे यूपावटाग्न्यादिके कर्मावृत्तौ सकृदेकवारमेवादौ मन्त्रवचनं कार्यं न प्रतिक्रियमिति, यथा त्रिरग्निं सम्माष्टींति क्रियावृत्तौ एकवारमेव मन्त्रपठनम् कर्त्तव्यम्। एवं च संख्यामुक्तेषु कर्मसु चेष्टा पृथङ्निवर्तनकर्मष्वपि सकृन्मन्त्रवचनं कर्त्तव्यम्, तत्रोभयोराचार्ययोः सम्मतिः, (आ० श्रौ० ४।१।३९, का० श्रौ० १।७।९)। किन्तु कात्यायनमते हविर्ग्रहणे बर्हिषो लवने, बर्हिःस्तरणे, आज्यग्रहणे च नैवं सकृन्मन्त्रवचनम्। (का० श्रौ० १।७।१०)। एवं च भारद्वाजोऽप्याहमन्त्रव्यवाये—द्रव्यपृथक्त्वेऽर्थपृथक्त्वे देशपृथक्त्वे च मन्त्राभ्यासो कर्त्तव्यः।[1] सर्वेषामाचार्याणां सम्मतौ कण्डूयने, स्वप्ने, नदीसंतरणे, अववर्षणे, अमेध्यदर्शने प्रमाणे च तदर्थस्य मन्त्रस्य सकृदेव प्रयोगः करणीयः।[2] अत्र भारद्वाजीया शब्दानुपूर्वी प्रायेणापस्तम्बेन सह सङ्गच्छते। यथा 'अल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रतिविभज्य पूर्वैः पूर्वाणि कारयेदुत्तरैरुत्तराणि।'[3]

**मन्त्रे स्वरोच्चारणविधिः**—मन्त्रेषु स्वराणामुच्चारणे कीदृङ्महत्त्वमस्ति, इति न तिरोहितमस्ति विपश्चिताम्।[4] एष तु व्याकरणशास्त्रस्य प्रातिशाख्यादीनां चैकः प्रधानो विषयः। सूत्रकारैरपि यज्ञपरिभाषासूत्रेषु विभिन्नानां वेदानां मन्त्राणां स्वरोच्चारणविधिः सारेण विहितः।

---

मन्त्राणां विनियोगः शनैश्चरादीनां ग्रहाणां पूजायां दृश्यते (द्रष्टव्यम्—अग्निवेश्यगृह्यसूत्रम्, पं० युधिष्ठिरमीमांसक कृत वैदिक छन्दोमीमांसा, पृ० २५६--२५७।

1. भारद्वाजपरिशेषसूत्रे (६५ सूत्रम्)
2. का० श्रौ० (१।७।१३), आ० श्रौ० (२४।१।४०), भार० परिशेषसूत्रं (सू० ६६), तथाहि जैमिनिरिपि—'स्वप्ननदीतरणाभिवर्षणामेध्यदर्शनप्रतिमन्त्रणेषु चैवम्।' (जै० सू० ११।४।५०)
3. तुलनीयं भारद्वाजसूत्रेण—'अल्पीयांसो मन्त्रा भूयांसि कर्माणि तत्र समशः प्रतिविभज्य पूर्वै. पूर्वाणि कर्माण्युत्तरैरुत्तराणि' (भार० प० सू० ११४)
4. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तदर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ पाणिनीयशिक्षायाम् श्लोकः ५२।

तदनुसारेण मन्त्रेषु स्वरोच्चारणं यथाम्नातं भवति इति कात्यायनमतिः।[1] तन्मते च कर्मसु प्रयुज्यमानानां मन्त्राणां विकल्पेन भाषिकस्वरो वा भवति।[2] भाषिकस्वरो ब्राह्मणस्वर उच्यते, न संहितास्वरः।[3] अथवा तान एव मन्त्राणां स्वरो भवति न भाषिकस्वरः।[4] तान एकश्रुतिरित्यर्थः। तत्राचार्यस्य मते एकश्रुतिर्दूरात्सम्बुद्धावित्यनुवर्तमाने यज्ञकर्मणि मन्त्राणामेकश्रुतिर्भवति, न केनचित्स्वरेण प्रयोगः, किन्तु सुब्रह्मण्या-सामजपन्यूङ्ख-याजमानवर्जमेतद् भवति।[5] यजुर्वेदमन्त्राणां तु कर्मसु उपांशुप्रयोगः कर्त्तव्यः। (का० श्रौ० १।३।१०)। उपांशुरनुदात्तस्वरो भवति।

आपस्तम्बस्तु किंचित् विस्तरेण मन्त्रस्वरोच्चारणविधिं कथयति। तदनुसारेण चोच्चस्वरेणैव ऋग्वेदसामवेदाभ्यां कर्माणि क्रियन्ते। मन्दस्वरेण यजुर्वेदेन कर्माणि क्रियन्ते। मन्दस्वरेण यजुर्वेदेन कर्माणि भवन्ति, परन्तु यजुर्वेदकर्मष्वपि आश्रुतप्रत्याश्रुतप्रवरसंवादसंप्रेषकर्मसु उपांशूच्चारणं न भवति। एवं यज्ञकर्मणि वौषट्शब्दस्तु उच्चैस्तरां वा स्यादेकश्रुतिर्वा भवेत्। अष्टाध्याय्याम्—(१।२।३५–३६), आ० श्रौ० (२४।१।८–१०)। आपस्तम्बेन त्रयाणां सवनानां मध्ये उच्चार्यमाणः

1. का० श्रौ० (१।८।१६)
2. भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् (का० श्रौ० १।८।१७)
3. संहितायां त्रैस्वर्यम्, ब्राह्मणे एकश्रुतिर्बह्वृचानाम्।' सि० कौ० (स्वरप्रकरणे सू० ३६६८)।
4. का० श्रौ० (१।८।१८)
5. 'एकश्रुतिर्दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम्' (का० श्रौ० १।८।१९) तुलनीयं च—पाणिनिसूत्रैस्सह—'एकश्रुतिर्दूरात्सम्बुद्धौ' यज्ञकर्मण्यजपन्यूङ्खसामसु' (अष्टा० १।२।३३–३४)

   न्यूङ्खाः—पृष्ठ्ये षडहे ऋग्वेदे प्रसिद्धा द्वादश ओङ्काराः 'पिबा सोममिन्द्र मन्दतु त्वा यं तो ओ ओ ओ ३ ओ ओ ओ ओ ३ ओ ओ ओ ओ ३ सुषाव' इत्यादयः।' तथा ह्याश्वलायनः 'पूर्वमक्षरं निहन्यते न्यूङ्खयमाने (निहन्यते इति अनुदात्तीक्रियते, टीका आश्व० श्रौ० सू० ७।११।५।

   सुब्रह्मण्या—'ओ३मिन्द्रागच्छेत्यादिर्निगदः सुब्रह्मण्या। जपाः सामानि तु प्रसिद्धानि।

स्वरविधिरपि संकेतितः। तदनुसारेण प्रागाज्यभागाभ्यां प्रातःसवने मन्दस्वरेणैव मन्त्राः प्रयोज्याः स्विष्टकृतः पूर्वं माध्यंदिनसवने मध्यम-स्वरेण मन्त्रा उच्चार्याः, शेषे कर्मणि तृतीयसवने च क्रुष्ट–(उच्च)–स्वरेणैव मन्त्राः प्रयुज्यन्ते इति आपस्तम्बमतिः।[1]

**परिधिसंख्यादि**—उभयोराचार्ययोर्मते यज्ञीयवृक्षाणामष्टादशैक-विंशतिर्वा परिधयो भवन्ति। ते च यज्ञीयवृक्षाः—पलाशविकङ्कतख-दिररोहीतकादयो भवन्ति।[2] आपस्तम्बमते तु 'सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते प्रकृतितो ह्रसमानात्तु प्रकृतिवदिति।[3] आपस्तम्बेन त्वेते विषया दर्शपूर्णमासप्रकरणे प्रोक्ता न यज्ञपरिभाषासूत्रेषु किन्तु कात्यायनेन यज्ञपरिभाषासु परिधिसंख्याविवरणादि, वेदकरणादि च प्रोक्तानि।

**वेदनिर्माणविधि**—कात्यायनमते यजमानो निरुप्याज्यं वेदं करोति। तत्र पशुकामः कुशमुष्टिं सव्यावृत्तं प्रदक्षिणावृत्तं वेदं करोति, ब्रह्मवर्च-सकामः कुशमुष्टिं त्रिवृत्तं करोति, अन्नाद्यकामो मूतकार्यमिति च। एवं चापस्तम्बोऽपि विदधाति।[4] वेदस्तु दर्भतृणानां गुच्छं भवति, येन अङ्गारादिषु पुरोडाशान् इतस्ततः करोति।

**यज्ञीयवृक्षपात्रादिविचारः**— उभयोराचार्ययोर्मतेन एतेषां वृक्षाणा-मेतानि यज्ञोपकरणानि भवन्ति खादिरः स्रुवः, पर्णमयी जुहूराश्वत्थ्यु-

---

1. आ० श्रौ० (२४।१।१२–१४), तथा चैते श्लोकाः पठितव्या अस्मिन् प्रसङ्गे—प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन। मध्यंदिने कण्ठगतेन चैव चक्राह्वसंकूजितसंनिभेन। तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम्॥ पाणिनीयशिक्षायाम्, श्लोकौ ३६-३७।

2. का० श्रौ० (१।३।१८–१९)। आ० श्रौ०—'खादिरं पालाशं वा एक-विंशति—दारुमिध्मं करोति', 'त्रयः परिधयः पालाशकाश्मर्यखादिरोदु-म्बरबिल्वरोहीतकाविकङ्कतानां ये वा यज्ञिया वृक्षाः (१।२।५।५–६)।

3. का० श्रौ० (१।३।२३), वत्सजानुः—वत्सजानुसदृशः, मूनो—धान्या-वापपात्रं तृणवर्त्यादिनिर्मितम्।

4. 'वत्सज्ञुं पशुकामस्य मूतकार्यमन्नादकामस्य त्रिवृच्छिरसं ब्रह्मवर्चकामस्य' (आ० श्रौ० १।२।६।४)

प्रभृत् वैकङ्कती ध्रुवा च ।[1] तथा हि अहोमयुक्तानि पात्राणि वारण-वृक्षनिर्मितानि भवन्ति ।[2] तथा चोभयोर्मते स्रुचस्तु बाहुमात्र्यः पाणि-मात्रपुष्करास्त्वग्बिला हंसमुख्यश्च भवन्ति ।[3] आपस्तम्बमते स्फ्य-शम्याप्राशित्रहरणं च खादिरकाष्ठनिर्मितानि भवन्ति ।[4] कात्यायनमते स्रुवोऽङ्गुष्ठपर्ववृतपुष्करो अरत्निमात्रः, स्फ्यो स्याकृति, आदर्शाकृतिः च प्राशित्रहरणं चमसाकृतिर्वा भवन्ति ।[5]

**प्रतिनिधिद्रव्यम्**— आपस्तम्बमते हविषां देवतायाश्च सामान्ये हविर्बलीयो भवति ।[6] यथा ऐन्द्रः पुराडोशः, सौम्यश्चरुरित्यादि। तथा चोभयोराचार्ययोर्मते तु अर्थद्रव्यविरोधेऽर्थो बलियान् भवति ।[7] यदि कस्माच्चित् कारणात् व्रीहियवादयो यागार्थं न लभ्यन्ते तर्हि द्रव्यान्तरेण प्रतिनिधिभूतेन यज्ञः समापनीयो भवति ।[8] तथा हि 'यदि पयो न स्यात्केन जुहुया इति व्रीहियवाभ्यामित्यादि' शतपथे श्रूयते ।[9] विहितस्य द्रव्यस्यालाभो काम्यस्य कर्मणोऽनारम्भः स्यात्, तच्च प्रत्य-वायरूपं भवेत् तस्मात् श्रुतद्रव्याभावे द्रव्यान्तरं प्रतिनिधेयम् । तच्च सदृशं प्रतिनिधीयते यथा व्रीहियवयोः स्थाने नीवाराः, सोमस्य स्थाने पूतीकाः प्रतिनिधीयन्ते आचार्याणां मते। यदि द्रव्यं न्यूनं भवेत्तर्हि तच्छेषेणेव तत्कर्म समाप्नुयात् । उभयोराचार्ययोर्मते स्वामिनोऽग्नेर्देव-

1. का० श्रौ० (१।३।२३–३५), आ० श्रौ० (१।५।१५।१०)
2. का० श्रौ० (१।३।३६), आ० श्रौ० (१।५।१५।११), तत्र वारणानि उलूखलमुसलकूर्चे पात्रीपिष्टपात्रीपुरोडाशपात्रीशम्याशूतावदानाभ्रमुपवे-षान्तःशकटप्राशित्रहरणादीनि । एवं सोमग्रहपात्राणि अपि वारणानि ।
3. का० श्रौ० (१।३।३७), आ० श्रौ० (१।५।१५।६)
4. आ० श्रौ० (१।५।१५।६)
5. का० श्रौ० (१।३।३८–४१)
6. आ० श्रौ० (२४।३।४६)
7. का० श्रौ० १।४।१६, आ० श्रौ० २४।३।४८–५३ ।
8. शिष्टाभावे सामान्यात्प्रतिनिधिः, तद्धर्मा च स्यात् (आ० श्रौ० २४।३।४२–५३)

   का० श्रौ० 'नियते सामान्यतः प्रतिनिधिः स्यात्' (१।४।२) ।
9. तथाहि श० ब्रा० (११।३।१।३)

तायाश्च प्रतिनिधिर्न भवति[1], किन्तु दीर्घसत्रेषु स्वाम्यादीनामपि श्रुति-प्रमाणात् प्रतिनिधिर्भवति, इति कात्यायनसम्मतिः ।[2] तथा च क्रत्वर्थेषु गुणपदार्थेषु वेदबन्धनादिष्वपि स्वामिनोऽपि प्रतिनिधिर्भवति ।[3]

**यज्ञे क्रमनियमः**—कात्यायनेन परिभाषाध्यायस्य पञ्चम्यां कण्डिकायां यज्ञेषु कर्मणां पौर्वापर्यं विचारितम्, आपस्तम्बपरिभाषापाठे तु नैतद् विद्यते । तत्र केषांचिदाचार्याणां मतौ अग्न्याधानादीनामङ्ग-कर्मणामनुष्ठाने क्रमनियमो नास्ति । कात्यायनमते तु नैतत्सत्यम्, श्रुतावपि पाठक्रमेण मन्त्रपाठक्रमेण च क्रमनियमः सिद्धो भवति । तद्यथा, द्वादशाहे गृहपतिः प्रथमो दीक्षते, अथ ब्राह्मणं दीक्षयतीत्यादिः कर्मानुष्ठानक्रमनियमः । एवं च दर्शपूर्णमासादौ च पेषणसंयवनपाक-होमादीनामपि क्रमो विधीयते । तथापि श्रुतौ पाठक्रमे त्वनुमानमेवास्ति न हि किञ्चित् प्रमाणमिति अभियुक्तानां निर्णयः, एवं संशये सत्याह आचार्यः 'मन्त्रचोदनयोर्मन्त्रबलं बलीयान् प्रयोगित्वात्' (का० श्रौ० १।५।७) इति, मन्त्रपाठ एव बलवान्, यज्ञकर्मणि मन्त्रा एव प्रथमं पठ्यन्ते न चोदनावाक्यानि, अतः क्रमनियमः सिद्धो भवति । वात्स्य-मतेन च हविषां प्रदानादिकं कर्म तु सहैव भवति, तत्रापि कात्यायन-मते षोडशिनि त्वानुपूर्व्यभूयस्त्वात् भूयानेव क्रमनियमः परिपाल्यते, तन्मते च फलसंयुक्तेषु यज्ञेषु क्रमनियमो नास्ति, तत्रापि विध्यर्थं क्रमः परिपाल्यते, अक्रमे कर्मणोऽसम्भवात् ।[4]

**दीर्घसत्रस्य कालावधिः**—यदा आपस्तम्बीययज्ञपरिभाषासूत्रेषु सत्राणां[5] कालविषयकं मतं नोपलभ्यते, तर्हि कात्यायनेन स्वेषु परि-भाषासूत्रेषु (प्रथमेऽध्याये ६।१७–२७) सत्राणां विशेषेण सहस्रसंवत्सरा-त्मकस्य सत्रस्य विवेचनं कृतम्, कात्यायनसूत्राणां शब्दानुपूर्वी जैमि-नीयमीमांसासूत्रैस्सह सङ्गच्छते, तस्मात्तयोरुभयोः पाठोऽत्र उदाह्रियते—

1. जै० ब्रा० (१।१९) च द्रष्टव्ये
2. का श्रौ० (१।६।६,९), आ० श्रौ० २४।४।१)
3. का० श्रौ० (१।६।१०)
4. का० श्रौ० द्रष्टव्यम् (१।५ कण्डिका)
5. सत्राणां वर्णनं आ० श्रौ० त्रयोविंशेऽध्याये, का० श्रौ० तु० चतुर्विंशे चोपलभ्यते ।

**कात्यायनस्य शब्दानुपूर्वी**

सहस्रसंवत्सरं मनुष्याणामसम्भवात्।
स्याद्देहानित्यत्वात्।
तस्य च कार्यत्वात्।
नासम्भवात्।
शास्त्रसम्भवादिति भारद्वाजः।
नादर्शनात्।
कुलसत्रमिति कार्ष्णाजिनिः

साभ्युत्थानमिति लौगाक्षिः।
अह्नां वाशक्यत्वात्।
श्रुतिसामर्थ्यात्।
प्रकृत्यनुग्रहाच्च।
(का० श्रौ० १।६।१७–२५)

**जैमिनेः शब्दानुपूर्वी**

सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु। नासामर्थ्यात्।
सम्बन्धदर्शनात्।
स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसम्भवात्।
अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात्।
विप्रतिषेधात्तु गौणेऽन्यतरः स्यादिति लाबुकायनः।
संवत्सरो विचालित्वात्।
मासाः प्रकृतिः स्यादधिकारात्।
अहानि वाभिसंख्यत्वात्।
(जै० सू० ६।७।३१–४१)

कात्यायनापस्तम्बजैमिन्यादीनां मुनीनां काले प्रायेण दीर्घजीविनामृषीणामभावोऽभूत्।[1] तथा हि तस्मिन् काले नापि कश्चिदृषिः सहस्रसंवत्सरसत्रमीजे। तस्मिन् काले कात्यायनगुरुणा कुलपतिना शौनकेन द्वादशसंवत्सरात्मकानि दीर्घसत्राणि कृतानीति श्रूयते इतिहासपुराणानामाख्यानेषु। तस्मादृषीणामायुषो दैर्घ्यस्य इतिहासस्य विस्मरणात् कात्यायनादयो मन्वते स्म यदेतानि सहस्रसंवत्सरसत्राणि कदापि नाभूवन्निति।[2] जैमिनीयब्राह्मणे चोपवर्ण्यते यत्र प्रजापतिः

---

1. 'मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति।' (निरुक्ते १३।१२)

2. (क) शांखायनाण्यके—'तत उ ह दीर्घतमा दशपुरुषायुषाणि जिजीव।' (२।१७)

(ख) ऋग्वेदे च—'दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे। (१।१५८।६)

(ग) काठकब्राह्मणे—'सः (प्रजापतिः) ऊर्ध्वबाहुरधस्तात् भूम्यां शिरः कृत्वा दिव्यं वर्षसहस्रं तपोऽतप्यत।'

(घ) शतपथे—'अपि हि भूयांसि शताद् वर्षेभ्यः पुरुषो जीवति' (१।९।३।१९)

सहस्रसंवत्सरमीजे, तामिष्टिं देवा त्रीणि शतानि वर्षाणामसमापयन्।[1] पुरातनबाइबिलेऽपि आयुषो दैर्घ्यस्य प्रमाणान्युपलभ्यन्ते, तत्र केचिद् आचार्या अष्टौ सप्त वा शतानि वर्षाणां जिजीविरे।[2] यथेदानीं न कोऽपि प्रामाण्याभावे दीर्घायुष्ट्वे श्रद्दधाति एवं कात्यायनकालेऽपि तथाविधविचारसरणिरासीत्, तथापि तेषां रसायनसेवनेन, मित्रविन्दादिभिर्यज्ञैः योगोपासनया च आयुर्वर्धते इति च विश्वास आसीत्।[3] तथापि रसायनैरपि एतावत्परिमाणमायुर्न सम्भवति न च मित्रविन्दादिभिरिष्टिभिः, न च योगोपासनया चेति कात्यायनसम्मतिरभवत्।[4] भारद्वाजमते तु शास्त्रैरायुर्वर्धयितुं शक्यते, एवम्मतं तु कात्यायनेन लोके अदर्शनात् खण्डितम्। कार्ष्णाजिनिमुनेर्मते कुलसत्रमेत्सहस्रसंवत्सरसत्रं भवेत्। यथा शौनकवंशे शौनकवंशजैर्दीर्घसत्राणि कृतानि। चतुर्थं मतं लौगाक्षेरासीत्, यन्मते सहस्रसंवत्सरात्मके सत्रे अर्धसमाप्तसत्रे हि परित्यागः क्रियते स्म। जैमिन्यादयस्तु संवत्सरशब्दं मासपरत्वे मत्वा सहस्रमासमेतत्सत्रमिति मेनिरे। अपि च श्रुतौ 'अहः'-शब्दः संवत्सरपरः श्रूयते।[5] 'अहर्वै संवत्सरः' इति। तस्मादह्नां सहस्रमेतदत्रसेयमिति च मीमांसका मन्यन्ते। एवं चापि कात्यायनस्य मतं श्रौतसूत्रे प्रस्फुटितम्।[6]

---

1. 'प्रजापतिस्सहस्रसंवत्सरमास्त। स सप्त शतानि वर्षाणां समाप्येमामेव जितिमजयद्यास्येयं जितिं ताम्। स स्वर्गं लोकमारोहन् देवानब्रवीदेतानि यूयं त्रीणि शतानि वर्षाणां समापयथेति। तथेति····। तेऽब्रुवन् देवशरीरैर्वा इदममृतशरीरैस्समापयाम न वा इदं मनुष्यास्समाप्स्यन्ति। (१।३)
2. बाइबिले जीनीससे (५।५)। इतिहासपुराणेष्वपि नारदमार्कण्डेयभारद्वाजच्यवनजामदग्न्यादयः चिरंजीविनः श्रूयन्ते, तथा चै ·रेयारण्यके— 'भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीविततमस्तपस्वितम आस।' (१।२।२)।
3. प्राणकायाः पुरा जीर्णश्च्यवनाद्या महर्षयः।
   रसायनैः शिवैरेतैर्बभूवुरमितायुषः॥ चरकसंहितायां (१।२।२०)
   'इदं रसायनं ब्रह्मा वर्षसाहस्रिकम्।' (च० सं० १।७७)
4. का० श्रौ० (१।६।२१)
5. श० ब्रा० (२।२।३।६)
6. का० श्रौ० (१।६।२५) तथा च (जै० मी० सू० ६।७।४०)

**तन्त्रानुष्ठानम्**—तन्त्रमित्यङ्गानां समुदाय:। यत्र प्रधानकर्मणा सहप्रयोगस्तत्र सकृदनुष्ठानं भवति। तच्च सकृत्कृतं बहूनामुपकरोति तत्तन्त्रमित्युच्यते, अपि च कर्मणां युगपद्भावो विधीयते।[1] तत्तु कर्त्तुं शक्यत्वात्, पुरुषार्थकृत्त्वात्, एकार्थसमवायं श्रुतेश्च सम्भाव्यते। यत्रैकेन कर्मणा बहूनि कर्माणि साध्यन्ते, तत्र तेषां सहप्रयोगो विधीयते, तद्यथा 'मित्रविन्दा श्रीराष्ट्रमित्रायुष्कामस्येति।' (का० श्रौ० ५।१२।१) इदमेव तन्त्रानुष्ठानं भवति।

**समुच्चयः**—एकार्थानां द्रव्याणां व्रीहियवादीनां गुणानां वा सर्वारम्भः समुच्चयः उच्यते। कात्यायनमते विहितः समुच्चयो हि कर्त्तव्यो नाविहितः। उभयोराचार्ययोर्मते याज्यानुवाक्यासु समुच्चयो विकल्पेन विधीयते।[2] एवं संख्यासु दानदक्षिणादिषु विकल्पेन समुच्चयः। तथा हि सोमादिक्रयपरिक्रयसंस्कारेषु च द्रव्यसमुच्चयो विहितः।[3] यथा ज्योतिष्टोमे सोमक्रये हिरण्येन क्रीणाति, वाससा गवा अजया च क्रीणाति। अत्र दशद्रव्याणां समुच्चयो विधीयते।

**यज्ञफलम् (कामिता)**—आपस्तम्बेन तु यज्ञपरिभाषासूत्रेषु यज्ञफलं प्रति किमपि नोक्तम् यदा कात्यायनस्तु विषयेऽस्मिन् बहु विचारयति स्वस्मिन् श्रौतसूत्रे। प्रायेण यजमानाः फलकामेनैव हि यजन्ति, बहुधा चोक्तं ब्राह्मणादिषु वचनमिदं–'स्वर्गकामो यजेत' इत्यादि, अनेन चापि यज्ञे फलं कल्प्यते। तत्फलं च प्रयोक्तरि यजमाने भवति, स हि यज्ञस्वामी उच्यते। किन्तु नित्ययज्ञेषु यथाकाम्यं न भवति, यथा अग्निहोत्रादिषु नित्यकर्मसु। अपि च 'अग्निष्टोमाख्ये सोमक्रतावपि याथाकाम्यं[4] न भवति, कुतः 'वसन्ते वसन्ते यजेतेति' श्रूयमाणत्वान्नित्योऽयं यज्ञः। न नित्यत्वमेषां सोमयागानां परन्तु सामर्थ्यमपि[5] विहितम्।

---

1. 'कर्मणां युगपद्भावस्तन्त्रम्' (का० श्रौ० १।७।१)
   तथा च आ० श्रौ० (२४।४।१६)
2. का० श्रौ० (१।८।६), आ० श्रौ० (२४।२।६)
3. का० श्रौ० (१।८।२१), आ० श्रौ० (२०।२।८)
4. का० श्रौ० (१।२।१०)
5. 'यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये।
   अधिकं वापि विद्येत स सोमं पातुमर्महति॥ (मनुस्मृतौ ११।७)

**यागानां प्रकृतयः**—कात्यायनेन परिभाषापाठे यज्ञानां प्रकृतयो नोक्ताः। यद्यपि स 'प्रकृतिविकृती' इति पदद्वयीं यत्र क्वचित् प्रयुक्तवान्।[1] आपस्तम्बमते दर्शपूर्णमासौ सर्वासामिष्टीनां प्रकृतिर्भवति। अग्निसोमीयस्य सवनीयस्य च पशुयागस्य सैव प्रकृतिः। सवनीय ऐकादशिनानां प्रकृतिः, ऐकादशिनाः पशुगणयागानां प्रकृतिः, वैश्वदेवयागश्च वरुणप्रघाससाकमेधशुनासीरीयाणां प्रकृतिरुच्यते।[2] एवमग्निष्टोमाख्यः सोमक्रतुः एकाहानां सोमयागानां प्रकृतिः, द्वादशाहयज्ञः त्रयोदशाहयज्ञादीनां प्रकृतिः गवामयनं बहुसांवत्सरिकाणां यज्ञानां प्रकृतिर्भवति।[3] किन्तु त्रिभिः कारणैः प्रकृतिर्निवर्तते प्रत्याम्नानात्, प्रतिषेधात्, अर्थलोपाच्च।[4]

**श्रौताग्नयः**—त्रयो अग्नयः प्रसिद्धाः श्रुतिषु—दक्षिणाग्निः, गार्हपत्याग्निः, आहवनीयाग्निश्च। यज्ञं विना स चाग्निः लौकिकः सम्पद्यते (का० श्रौ० १।३।२७), कात्यायनमते निषादस्थपतीष्टिः (गर्दभेज्या) लौकिकेऽग्नौ भवति। कात्यायनेन तु निषादस्थपतीष्टिर्यज्ञपरिभाषास्वेव उपवर्णिता, आपस्तम्बस्तु निषादस्थपतीष्टिं नवमे प्रश्ने प्रायश्चित्तेषूपवर्णयति, एतच्चानयोः श्रौतसूत्रयोर्महदन्तरं दर्शनीयमस्ति।

एते श्रौताग्नयो वैतानिकाग्नयोऽपि उच्यन्ते, एषु च श्रौतं स्मार्तं सर्वं कर्म साध्यते। किन्तु दक्षिणाग्नौ मांसपाकस्तु प्रतिषिध्यते। जैमिनिकात्यायनयोरुभयोरेतन्मतमस्ति।[5]

**बर्हिः**—कात्यायनमते कुशानामेव 'बर्हिः' इति संज्ञा (का० श्रौ० १।३।१२), संस्कृताः कुशास्तु दर्भा उच्यन्ते।[6]

---

1. 'न प्रकृतावपूर्वत्वात्', 'विकृतौ वचनार्थलोपविरोधेभ्यः प्रवृत्तिः।'
(का० श्रौ० ४।३।२१–२२)
2. आ० श्रौ० (२४।३।३२–३७)
3. आ० श्रौ० (१४।४।३–५)
4. आ० श्रौ० (२४।४।२)
5. अधिश्रपणीये मांसप्रतिषेधः (का० श्रौ० १।१।२१)
'मांसपाकप्रतिषेधश्च तद्वत् (जै० मी० सू० १२।२।२)
6. हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः। समूलाः पितृदेवत्याः कल्माषाश्चैव वैश्वदैविकाः। (कर्मप्रदीपे, अ० १, ख० २।२)।

**यज्ञोपवीती, प्राचीनावीती च**—सर्वे ऋत्विग्यजमानाः सव्यस्कन्धस्थितयज्ञोपवीतधारिणः कर्म कुर्वन्ति। तत्रोभयोराचार्ययोर्मते प्रदक्षिणं यज्ञोपवीती दैव्यानि कर्माणि करोति, प्राचीनावीती प्रसव्यं पित्र्याणि कर्माणि करोति।[1] दक्षिणस्कन्धधृतयज्ञसूत्रिणः उपवीतिन उच्यन्ते। सव्यस्कन्धधृतयज्ञसूत्रिणः प्राचीनावीतिन उच्यन्ते। तथा चाह मनुः—

उद्धृते दक्षिणे पाणावुपवीत्युच्यते बुधैः।
सव्ये प्राचीनावीती निवीती कण्ठसज्जने॥ (मनु० २।६३)

**विहारः**—उभयोराचार्ययोः श्रौतसूत्रयोर्विहितं—यत् सर्वं यज्ञकर्म विहारादुत्तरदेशे क्रियते।[2]

**ऋत्विजामासनादि**—यज्ञवेदेर्दक्षिणतो ब्रह्मयजमानौ उपविशतः, तयोर्मध्ये यजमान उपविशति। यज्ञकर्मणां मुख्यः कर्त्ता अध्वर्युर्भवति। क्वचित् प्रतिप्रस्थाता अपि अध्वर्योः कर्माणि करोति। यज्ञकाले यजमानो वेदिस्थो भवति, स तदा न क्वचिदपि गच्छति। अत्रकाले अग्न्यादीनामतिक्रमणादि कर्म च न क्रियते।[3]

**अवदानादि**—कात्यायनमते पुरोडाशचरुधानसान्नायादिरूपस्य यागार्थं द्विरवद्यति। तत्राचार्याणां मते जमदग्नीनां पञ्चार्षेयाणां त्रिरवद्यति[4], तथा चोपस्ताराभिघाराभ्यां पञ्चावत्तं सम्पद्यते, अथवा सर्वेषां चातुरवत्तं पंचावत्तं वा भवति, अवदानं त्वङ्गुष्ठमात्रप्रमाणं भवति, दधिपयसोः, आज्यादीनां तु मात्रादवदानं कर्तव्यं भवति।[5] आपस्तम्बेन त्ववदानादीनां विभागो दर्शपूर्णमासप्रकरणे कथितः।[6]

## हौत्रकल्पः

आपस्तम्बेन चतुर्थस्य प्रश्नस्यान्ते हौत्रकल्पश्चोक्तः, पुनरनेनाचार्येण चतुर्विंशे प्रश्ने परिभाषाप्रकरणेषु चायं हौत्रकल्प उच्यते।[7]

1. का० श्रौ० (१।७।२७), आ० श्रौ० (२४।२।१५–१६)
2. का० श्रौ० (१।८।२६), आ० श्रौ० (२४।२।१०), तथा च शतपथे—'उत्तरत उपचारो वै यज्ञः (३।४।३।१९)
3. 'नाग्नेरपर्यावर्तेत' (आ० श्रौ० २४।२।११)
4. 'जमदग्नीनां तु पञ्चावत्तम्' (आ० श्रौ० २।६।१८।३)
5. का० श्रौ० (१।९।२-७)
6. का० श्रौ० (१।९।२-७)
7. आ० श्रौ० (२४।११-१४), यज्ञे होतुः कर्म हौत्रमुच्यते, तस्य कर्मणो विधानमेव हौत्रकल्पः।

कात्यायनेन तु तृतीयेऽध्याये यत्र तत्र क्वचिद् हौत्रकल्पस्य सूत्राणि प्रस्फुटितानि, तेन तु नैकविधेषु परिशिष्टेषु हौत्रादीनि चोक्तानि, तानि परिशिष्टानि श्रौतसूत्रस्यांगानि न सन्ति। अत्रोभयोः कल्पयोर्विधानं संगृह्यते।

**पुरोऽनुवाक्या**—यदाऽध्वर्युर्यज्ञं प्रारिरिप्सुराजुहोति तदैव तेन संप्रेषितो होता याज्यां करोति।

**याज्या च**—स मन्त्रान् पुरोऽनुवाक्यामन्त्रांश्च पठति, स यैर्वाक्यैः (मन्त्रैः) देवता आह्वयति त एव मन्त्राः पुरोऽनुवाक्या उच्यन्ते, यैर्यजति ते याज्यामन्त्रा भवन्ति।[1] आ० क० होता सर्वत्र पुरस्ताद्याज्यया ये यजामहमुक्त्वा व्याहृतीर्दधाति।[2]

**आश्रावणम्**—अध्वर्युराग्नीध्रमाह—'आश्रावय' इत्येवमाश्रावणमुच्यते।

**प्रत्याश्रावणम्**—ततोऽऽग्नीध्रः प्रतिवदति 'अस्तु श्रौषट्' (सर्वं कुशलमस्ति), एतदेव वाक्यमाश्रावणमुच्यते। याज्यामन्त्राणामन्ते 'श्रौषड्' उच्यते।[3]

**याज्याप्रैषः**—अध्वर्युणा होत्रे 'यज यज' इत्यादेशो याज्याप्रैष उच्यते।

**वषट्कारः**—ततो होता याज्यामन्त्राणामन्ते वषट्शब्दं प्रयुनक्ति प्लुतस्वरेण, अयमेव वषट्कारो वौषड् उच्यते।

**सप्तदशप्रजापतिः**—ब्राह्मणग्रन्थेषु चोक्तम्—'एष वै सप्तदशप्रजापतिर्यज्ञमन्वायत्तः' (तै० ब्रा० का० २); तथा चोक्तं शान्तिपर्वणि व्यासेन—

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः॥' (४७।२७)

अयं सप्तदशप्रजापतिरेवं प्रकल्पितः–(अक्षरसंख्यया सप्तदशप्रजापतिः संभवति)—

1. 'ता अनूच्य देवता आवाहयति या यक्ष्यमाणो भवति।'
(आ० श्रौ० २४।१२।२)
'ह्वयति वा अनुवाक्यया प्रयच्छति याज्यया', (श० ब्रा० १।७।२।२७)
2. आ० श्रौ० (२४।१३।५)
3. आश्राविते़ऽग्नीदा प्रत्याश्रवणात् (का० श्रौ० ३।३।१४)।

४—'आश्रावय' इति चतुरक्षरम् ।
५—'अस्तु श्रौषडिति चतुरक्षरम् ।
२—'यजेति द्व्यक्षरम् ।
५—'ये यजामहे' इति पञ्चाक्षरम् ।
२—'द्व्यक्षरो वषट्कारः ।

---

१७ अक्षराणि=सप्तदशप्रजापतिः ।

---

**वीतमन्त्रः**—सोमक्रतुषु वषट्कारान्ते अध्वर्युणा अग्नौ यद्द्रव्यं हूयते तदन्ते 'सोमस्याग्ने वीही३ वौ३षड्' इत्युच्यते च, अयमेव वीतमन्त्रो भवति ।

**अनुवषट्कारः**—एतस्मादनन्तरं यो वषट्कारो भवति सोऽनुवषट्कार उच्यते ।

**सामिधेन्यः**—समिदाधानार्था ऋचस्सामिधेन्यो भवन्ति । उ० क० अध्वर्युः होतृषदनं कृत्वा तत्रस्थं तृणादिकं निरस्य होतारं प्रतिब्रवीति[1], तत्रामन्त्रितो होता चोपविश्य सामिधेनीः पठति। ऋग्वेदे ३।२७।१–११ । समिदाधानार्था एकादश मन्त्राः सामिधेन्यो भवन्ति, यथा—

'प्रवो वाज्या अभिद्यवो हविष्मन्तो घृताच्या देवाञ्जिगाति सुम्नयुः ।' इत्यादय एकादश मन्त्राः । एतेषु प्रथमस्य तृतीयस्य च मन्त्रयोर्होत्रा त्रिकृत्वः पाठो भवति, एवं ताः पञ्चदश सामिधेन्यो भवन्ति, आसु चतुर्थी समिध्यमानवती एकादशी च समिद्धवती चोच्येते, आसां मध्यस्था धाम्या भवन्ति, एकादशमन्त्रैस्सह षडन्यान् मन्त्रान् प्रयुज्य एकविंशतिः सामिधेन्यो भवन्ति । आपस्तम्बकल्पे होता सामिधेनीरनूच्य प्रवरमुक्त्वा निविदोऽन्वाह ।[2] ततो देवताह्वानादि च कर्म भवति । अत्रैव प्रयाजा भवन्ति । सामिधेनीषु चाचार्याणां मते ऋचि प्रणवं प्रतिदधाति होता[3], बह्वृचमताच्च सामिधेनीपुरोऽनुवाक्यानुवचनानुशंसनेषु ऋचि प्रणवो भवति ।[4]

---

1. का० श्रौ० (३।१।१), आ० श्रौ० (२४।१२।११)
2. आ० श्रौ० (२४।११।१७)
3. आ० श्रौ० (२४।१३।१२)
4. आ० श्रौ० धूर्तस्वामिभाष्ये (पृ० ४५५)

# पञ्चमोऽध्यायः

# हविर्यागाः

## (१) दर्शपूर्णमासौ

**दर्शपूर्णमासप्राथम्यम्**—कात्यायनश्रौतसूत्रे द्वितीयमध्यायमारभ्या-चतुर्थाध्यायात् पर्यन्तं दर्शपूर्णमासौ यागौ एवोपवर्णितौ दृश्येते। एवम् आपस्तम्बश्रौत्रसूत्रेऽपि प्रथममध्यायमारभ्यातृतीयादध्यायात्पर्यन्तं दर्शपूर्ण-मासयागौ[1] वर्ण्येते। आपस्तम्बेन चतुर्थे याजमानाख्येऽध्याये याजमान-मुक्तम्, कात्यायनेन तु याजमानं पृथगध्याये नोक्तम्। तेन तत्तु द्वितीये अध्याये हि परिभाषासु च (प्रथमेऽध्याये) प्रपञ्चितम्। यद्यपि श्रौत-यज्ञेषु क्रमेण आधानस्य प्राथम्यमेव न्याय्यं भवेत् किन्तु मन्त्रेषु ब्राह्मणेषु श्रौतसूत्रेषु च दर्शपूर्णमासयोरेव प्राथम्यं विधीयते। तदुक्तं धूर्तस्वा-मिना—'शाखादौ दर्शपूर्णमासमन्त्राणमेव पूर्वमाम्नानात् आधानेष्टीना-मपि दर्शपूर्णमासप्रकृतित्वात् आधानादपि पूर्वं दर्शपूर्णमासव्याख्या क्रियते।'[2]

**दर्शपूर्णमासपदार्थः**—इमौ दर्शपूर्णमाससंज्ञकौ यागविशेषौ अमाव-स्यायां पूर्णिमायां च यथाक्रमं कर्त्तव्यौ।[3] 'दृश्यते यस्मिन् क्षणे सूर्येण सङ्गतश्चन्द्रमाः सिद्धैः स क्षणो दर्शः, तद्योगादहोरात्रः (अमावस्या) दर्श उच्यते' एवं 'मास इति चन्द्रमस' आख्या, मासानां मानात्, स पूर्यते यस्मिन् क्षणे स क्षणः पूर्णमासः। तद्योगादहोरात्रः (पौर्णमासी

---

1. आपस्तम्बश्रौतसूत्रस्य तु प्रथमसूत्रमेवास्ति-'अथातो दर्शपूर्णमासौ व्याख्या-स्यामः'
2. आ० श्रौ० वृ० (पृ० ६), 'दर्शपूर्णमासाविष्टीनां प्रकृतिः' (आ० श्रौ० २४।३।३२)
3. We have the details of Darshpurnmasa isti, a ceremony in connection with New and full Moon Sacrifice. (Into. to S. B, p. 382).

वा) पौर्णमास उच्यते। दर्शश्च पूर्णमासश्च दर्शपूर्णमासौ इति पदविग्रह: (द्वन्द्वसमास:)।

**यागावधि:**—तत्रापस्तम्बजैमिन्योर्मते 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' (जै० सू० १०।८।३६) 'ताभ्यां यावज्जीवं यजेत' त्रिंशतं वर्षाणि 'जीर्णो वा विरमेत्' (आ० श्रौ० ३।१४।११–१३) कात्यायनोऽप्याह—'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत[1] (का० श्रौ० ४।२।४७)।

**कात्यायनापस्तम्बश्रौतसूत्रयोर्विषयानुक्रमयोरन्तरम्**-यद्यपि उभयो: श्रौतसूत्रयोर्दर्शपूर्णमासयागयो: नियमादिकं प्राय: सामान्येन विहितं तथापि तयोर्वक्ष्यमाणे क्रमे महदन्तरं परिदृश्यते, तस्मात् पूर्ववदस्माभिरन्तरसंदर्शिका विषयानुक्रमणी चात्र लिख्यते—

| **कात्यायनश्रौतसूत्रे द्वितीयाध्यायस्य विषया:** | **आपस्तम्बश्रौतसूत्रे प्रथमाध्यायस्य विषया:** |
|---|---|
| **पूर्णमासे** | **दर्शेष्टौ** |
| १. यजमानव्रतादिकम् (२।१) अग्न्यान्वाधानम् | १. अग्न्यान्वाधानम् |
| २. ब्रह्मवरणम् (२।२) | २. शाखाहरणम् |
| ३. प्रणीताप्रणयनम् (२।३) | ३. वत्सापाकरणम् |
| ४. हवि:प्रोक्षणम् (२।३) | ४. अश्वपर्शुप्रतपनम् |
| ५. हविर्निर्वाप: (२।३) | ५. बर्हिराहरणम् |
| ६. पात्रासादनम् (२।४) | ६. परिधिपरिधानम् |
| ७. कपोलोपधानम् (२।५) | ७. वेदकरणम् |
| ८. पुरोडाशश्रपणम् (२।५) | ८. पिण्डपितृयज्ञ: |
| ९. हविर्निर्वाप: (२।५) | ९. होम:, सान्नायश्च |
| १०. वेदिखननम् (२।६) | १०. उपवास: |
| ११. पात्रासादनम् (२।६) | ११. पूर्णमासयागे–अग्निपरिस्तरणादिकम् |
| १२. बहिर्राधानम् (२।६) | १२. प्रणीताप्रणयनम् |
| १३. स्रुक्सम्मार्जनम् (२।६) | १३. हवि:प्रोक्षणम् |
| १४. प्रतपनम् (२।६) | १४. हवि:समाहननम् |

1. शतपथे च—'य एवं विद्वांस्त्रिशतं वर्षाणि यजेत, तस्माद्ध त्रिंशता एव वर्षाणि यजेत।' (११।१।२।१३)।

१५. पत्नीसन्नहनम् (२।७)
१६. आज्यग्रहणम् (२।७)
१७. परिधिपरिधानम् (२।८)
१८. अञ्जनादिकम् (२।८)

**तृतीयेऽध्याये**

१. होतृवरणम् (३।१, २)
२. समिदाधानम् (३।१)
३. प्रयाजा: प्रधानयागश्च (३।३)
४. स्विष्टकृत्–प्राशित्रपिंडावदानञ्च (३।४)
५. अनुयाजा: (३।५)
६. सूक्तवाक: (३।६)
७. शंयुवाक: (३।६)
८. वषट्कार: (३।६)
९. पत्नीसंयाजा: (३।७)
१०. दक्षिणाहोम: प्रणीताविमोकादि च (३।८)
११. समिष्टयजु: (३।८)
१२. विष्णुक्रमा: (३।८)
१३. व्रतविसर्जनम् (३।८)
१४. ब्राह्मणतर्पणम् (३।८)
१५. प्रायश्चित्ताहुतय: (३।८)

**चतुर्थेऽध्याये**

१. पिण्डपितृयज्ञ: (४।१)
२. दर्शेष्टि: (४।२)
३. शाखाहरणम् (४।२)
४. वत्सापाकरणम् (४।२)
५. सान्नाय: (४।२)
६. पयास्यादि (४।३)
७. दाक्षायणयज्ञ: (४।४)

१५. पेषणम्
१६. हवि:श्रपणम्
१७. कपोलोपधानम्
१८. पुरोडाशाधिश्रपणम्

**द्वितीयेऽध्याये**

१. वेदिखननम्
२. स्रुक्सम्मार्जनम्
३. पत्नीसंहननम्
४. आज्यग्रहणम्
५. विधृतिकरणम्
६. अभिघारणम्
७. सामिधेनीवाचनम्
८. समिदाधानम्
९. होतृवरणम्
१०. आज्यभागौ, प्रधानयाग: स्विष्टकृत् च
११. अवदानम्

**तृतीयेऽध्याये**

१२. इडा
१३. प्राशित्रहरणम्
१४. अन्वाहार्यपचनम्
१५. होम:
१६. सूक्तवाक:
१७. शंयुवाक:
१८. पत्नीसंयाजा:
१९. पिष्टलेपफलीकरणहोमौ
२०. योक्त्रपाशविमोचनम्
२१. वैमृधेष्टि:
२२. साकंप्रस्थीययाग:
२३. दाक्षायणयज्ञ:

८. उपांशुयाजाः (४।५)
९. वैमृधेष्टिः (४।५)

२४. ब्रह्मवरणम्

**चतुर्थेऽध्याये (याजमानम्)**

१. याजमानम्

(याजमानसम्बन्धिकर्म, मन्त्रप्रयोगाश्च)

अत्र उभयोराचार्ययोर्दर्शपूर्णमासयागयोर्वर्णने महदन्तरं लक्ष्यते। यदा कात्यायनः प्रथमं पूर्णमासयागस्य तन्त्रं ब्रूते तर्हि अपरस्तु प्रथमं दर्शेष्टिमाह, तत्पूर्वं च पिण्डपितृयज्ञमाख्यातवान् सः। एतत्सर्वमुपरिलिखितायां सूचन्यामेव द्रष्टव्यम्। अनया सूचन्या तयोरन्तरं च विख्याप्यते।

**दर्शपूर्णमासयोः साहचर्यं महिमा च**—पूर्णमासेष्टिर्द्वयोर्दिवसयोरेकस्मिन् दिवसे वा समापनीया भवति। अस्या इष्टेः प्रथमो दिवसः 'उपवसथ' उच्यते, द्वितीयो दिवसः 'यजनीय' इति। प्रथमे दिवसे अग्न्यान्वाधानादिकं कर्म, द्वितीये च शेषकृत्यं भवति। यद्यपि दर्शपूर्णमासाविति द्विवचनमेव सर्वत्रोपलभ्यते, तथापि पौर्णमास्यामाग्नेयोऽष्टाकपालपुरोडाशयगः, अग्नीषोमीय उपांशुयागः, आज्यद्रव्यकः अग्नीषोमीय एकादशकपालपुरोडाशयाग इति यागत्रयम्। अमायां च आग्नेयः पुरोडाशयाग एकः, इन्द्रदेवताको दधिद्रव्यको यागो द्वितीयः, इन्द्रदेवताकः पयोद्रव्यको यागश्चापरः इति यागत्रयम्। उभयत्र मिलित्वा षड्यागाः समुदायरूपेण दर्शपूर्णमाविति द्विवचनेनानुवादः। इदं च यागषट्कं सन्नाययाजी कर्त्तुमर्हति। अत्र पूर्वोक्तौ दधिपयोयागौ एव हि सान्नायपदाभिधेयौ। सान्नाययागे च सोमयाजिन एवाधिकारः।[1]

तत्र ब्राह्मणादिषु दर्शपूर्णमासयागौ देवरथः, प्राकृताश्वमेध इत्यादिभिः पदैः संस्तूयेते। तदुक्तम्–'एष वै देवरथो यद्दर्शपूर्णमासौ (तै० सं० २।५।६।१)। 'तदाहुः प्राकृतोऽश्वमेधः·········तद्वा एवाश्वमेधः

1. 'नागतश्रीर्महेन्द्रं यजते, त्रयो वागतश्रियः शुश्रुवान्, ग्रामणी राजन्यस्तेषां महेन्द्रो देवता।' (तै० सं० २।५।४।४) एवं श० ब्रा० (१।६।४।२१), का० श्रौ० (४। । ), 'नागतश्रीर्महेन्द्रं यजते त्रयो वै गतश्रियः इत्युक्तम्। आ० श्रौ० (१।४।१४।९), 'और्वो गौतमो भारद्वाजस्तेऽनन्तरं सोमेज्याया महेन्द्रं यजेरन् आ० श्रौ० (१।४।१४।८)।

यच्चन्द्रमा ।······स यो वै विद्वानग्निहोत्रं च जुहोति दर्शपूर्णमासाभ्यां च यजते मासि मासि हैवास्याश्वमेधेनेष्टं भवति ।[1]

एतौ दर्शपूर्णमासौ यागौ प्राचीनानामार्याणां पूर्णचन्द्रदिवसस्य नवीनचन्द्रदिवसस्य च यागावास्ताम्, यथामावस्यायां ते विशेषेण पितॄन् पूजयन्ति च, एतच्चाग्रे विशेषेण अभिधास्यामः। इमौ यागौ मानुषस्य जन्मनो मरणस्य ह्रासस्य विकासस्य वाऽनुकृती स्तः। पण्डित-गिरधरशर्मणां चैतन्मतम् ।[2]

**पूर्णमासेष्टौ यजमानस्य व्रतादिकं च**—वयमस्मिन् प्रबन्धे सर्वत्र कात्यायनीयविषयानुक्रमाननुसरिष्यामः, यदुभयोराचार्ययोः क्रमयोर्महदन्तरं वर्तते, तेन अन्यतमः क्रमोऽनुसर्त्तव्यः, क्रमव्यत्यासे विषयस्याध्ययने चासुकरता भवेत्, एभिः सर्वैः कारणैः कात्यायनीयः क्रमो ग्रहीतः। यद्यप्यत्रापस्तम्बेन याजमानकर्माणि चतुर्थेऽध्याये प्रोक्तानि, कात्यायनेन तु तानि द्वितीयेऽध्याये हि दर्शपूर्णमासयोः प्रारम्भे हि कथितानि। तथाप्युभयोराचार्ययोर्मताभ्यां यजमानेन सर्वप्रथममग्न्यान्वाधानं कर्त्तव्यमिति ।[3] प्रसङ्गेन चात्र यजमानकर्माणि चोपदिश्यन्ते। कात्यायनापस्तम्बाभ्यामुभाभ्यां यजमानस्य तत्र कर्माणि विहितानि, ब्रह्मचर्यम्, दक्षिणादानम्, द्रव्यप्रकल्पनम्, कामकामनम्, वाचनम्, अन्वारम्भणम् व्रतान्येति ।[4] तथा च कात्यायनमते खरवेदिशालादीनां मापनं निर्माणं च यजमानस्यैव कर्माणि। तत्रापि अग्न्यान्वाधानं तु

1. श० ब्रा० (११।२।५।१-५)
2 'एक प्राकृत यज्ञ जो प्रकृति में सतत होता रहता है और दूसरा अनुष्ठेय वा कृत्रिम यज्ञ जो मनुष्यों द्वारा किया जाता है (पं० गिरधरशर्माः वैदिक वि० भा० सं० पृ० ५)' प्राकृत दर्शपौर्णमासयोर्व्याख्यानार्थं द्रष्टव्यं श० ब्रा० एकादशकाण्डे चतुर्थे अध्याये। 'स्वैदायनाख्यानम्' (लेखकः) तथा वै० वि० भा० सं० पृ० ८), 'जिस दर्शपौर्णमास यज्ञ का बालक के दांत निकलने केशलोम उत्पन्न होने आदि से सम्बन्ध बताया गया है, वह अवश्य ही प्रकृति का वैज्ञानिक दर्शपौर्णमास है, जिसके आधार पर कर्मकाण्ड की विधियों के अनुसार कृत्रिम दर्शपौर्णमास भाग होता है।' (तदेव, पृ० ८) तथा द्रष्टव्यं—
3. का० श्रौ० (२।१।२), आ० श्रौ० (१।१।२।१)
4. का० श्रौ० (१।१०।१२), आ० श्रौ० (४।१।१।२)

विकल्पेनाध्वर्युर्यजमानो वा करोति। यदि ऋत्विजोऽपि कामकामा भवेयुस्तर्हि तेषामपि सर्वाणि एतानि कर्माणि भवन्ति, तथा च सर्वत्र पत्न्याः साहित्येन सर्वाणि कर्माणि कर्त्तव्यानि, इति याज्ञिका मीमांसकाश्चाहुः। तत्र भरद्वाजमते वपनवर्जं आत्मसंस्काराः पत्न्या अपि भवन्ति। सर्वेषामाचार्याणां मते यजमानो व्रतकाले ब्रह्मचारी, सत्यवादी, शुद्धाहारश्च भवति, तस्यैते धर्मा अग्रे विस्तरेण वक्ष्यन्ते।

तर्हि यजमानकर्माणां क उपक्रमः, अत्रापस्तम्बेन मतत्रयमुपस्थापितम्, तत्र प्रथमे पक्षे क्रमः आशनम्, अग्न्यान्वाधानम्, व्रतोपायनमिति, द्वितीये पक्षे—व्रतोपायनम्, अशनम्, अग्न्यान्वाधानमिति वा। तृतीये पक्षे—अग्न्यान्वाधानम्, व्रतोपायनम्, अशनम्, चेति।[1] कात्यायनाचार्यस्तु अन्तिमं मतं मन्वते स्म।[2] तन्मते—सर्वप्रथममध्वर्युर्यजमानो वाग्निमादधीत, इति।

तत्राग्न्यान्वाधानस्योभयोर्विधिर्मन्त्रपाठश्च प्रायेण समानौ स्तः। उभाभ्यां मताभ्यां 'ममाग्ने वर्चो विहवेष्वस्तु' इत्यादिभिर्मन्त्रैराहवनीयादीनामग्नीनामुपसमिन्धनं क्रियते, उभाभ्यां मताभ्यां च विकल्पेन यजमानो महाव्याहृतिभिर्वा अग्निं प्रणयति।[3] अत्रैव अग्रे आपस्तम्बस्तु प्रथमे प्रश्ने (प्रारम्भे) हि शाखाहरणादिकान् विषयान् प्रपञ्चयति, यर्हि कात्यायनो अत्र यजमानस्य व्रतादीन् वर्णयति। यजमानो व्रते वाचंयमो भूत्वा मांसमैथुनं च वर्जयति। आपस्तम्बस्तु मांसेन सहितानमाषान् अपि वर्जयति।[4] व्रत्येऽहनि मध्वादयश्च प्रतिषिद्धाः कृताः, केवलमाज्येन (घृतेन) दध्ना दुग्धेन वा भोजनं विहितमासीत्। उभयोर्मतेन यजमानो वृक्षारण्यौषधीनां भोजनं वाश्नीयात्[5]। यजमानो रात्रौ जागर्ति, यदि सुप्याद्, उपरि पर्यङ्कादौ न शयीत, सः अधः एव शयीत।[6] का० कल्पे यजमान आहवनीयस्य गार्हपत्यस्य वा गृहे अधः

---

1. आ० श्रौ० (४।१।२।८)
2. का० श्रौ० (२।१।२)
3. का० श्रौ० (२।१।३,६), आ० श्रौ० (१।१।१।४,६)
4. आ० श्रौ०—'अमाषमांसभाज्येनाश्नीयातां तदभावे दध्ना पयसा वा' (४।१।२।५)
5. का० श्रौ० (२।१।१३), आ० श्रौ० (४।१।३।११)
6. आ० श्रौ० (४।१।३।१३-१५)

शयीत ।[1] आ० क० च० वैकल्पिकं एवंविधं विधानम् ।[2] आ० क० तु० प्रथमं वपनं भवितव्यम्, यर्हि कात्यायनक्रमेणात्र सर्वथा—प्रथमं वपनं भवति । का० क० यजमानो अशिखं सशिखं वा केशश्मश्रु वापयते ।[3] आपस्तम्बस्त्वत्र वाजसनेयिनां मतमुदाजहार, तदनुसारेण यजमानो अप्यल्पशो लोमानि वापयते ।[4] उ० क० यजमानः पत्नी च अपराह्णे व्रतोपादाने सर्पिषा युक्तमल्पभोजनं कुरुतः ।[5] अत्र का० क० पत्नीयजमानौ सत्यवादिनौ भवतः ।[6] अत्र कल्पे[7] च यजमान आहवनीयं प्राङ्तिष्ठन् अग्निं च पश्यन् अप उपस्पृश्य जपति—'अग्ने व्रतपते इदमहमिति (शु० प० १।५), आ० क० 'पयस्वतीरोषधय' इति मन्त्रेण यजमानो अथ आचामति (भक्षयति), उपस्पृशति वा, तदनन्तरं आहवनीयं दक्षिणस्यामवस्थाप्य ब्राह्मणो जपति—'अग्ने व्रतपते व्रतं चरिष्यामि', क्षत्रियो यजमानस्तु जपति 'वायो व्रतपते, आदित्यव्रतपते, व्रतानां व्रतपते व्रतं चरिष्यामि' इति । एवं च वैश्योऽपि जपति । ततः स आदित्यमुपतिष्ठते ।[8]

**पौर्णमासेष्टेरुपक्रमकालः**—का० क० पौर्णमासीयागे यक्ष्यमाणो यजमानः पञ्चदश्यां प्रतिपदि वा यागोपक्रमं कुर्यात् ।[9] यदा तु पूर्णचन्द्रा रात्रिर्भवेत् तर्हि यागोपक्रमं कुर्यात्, न त्वपूर्णचन्द्रायाम् । एवं चापस्तम्ब आह—'यदहः पुरस्ताच्चन्द्रमाः पूर्ण उपसर्चेत्तां पौर्णमासीमुपवसेत् । अथवा श्वः पूरणीया तिथिर्भवति । अत्रापि आपस्तम्बेन

1. का० श्रौ० (२।१।१४-१५)
2. आ० श्रौ० (४।१।३।१७)
3. का० श्रौ० (२।१।६)
4. आ० श्रौ० (४।१।१।५)
'अप्यल्पशो लोमानि वायपत इति वाजसनेयकम् ।'
5. का० श्रौ० (२।१।१०), आ० श्रौ० (४।१।२।४)
6. का० श्रौ० (२।१।१२)
7. का० श्रौ० (२।१।११)
8. आ० श्रौ० (४।१।३।१-४)
9. 'पूर्वां पौर्णमासीमुत्तरां चोपवसेत्' (का० श्रौ० २।१।१), तथा हि 'एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरा एषा उत्तमा या पूर्वेति' (श० ब्रा० ६।२।२।१८) ।

वाजसनेयिनां मतमुदाहृतम्। तदनुसारेण खर्विकां तृतीयां तिथिं वाजसनेयिनः समामनन्ति।[1]

**ब्रह्मवरणम्**—उभयोराचार्ययोर्मतेन दर्शपूर्णमासयोस्त्रयीविद्यायां भूयोविद्यः प्रशस्यतमो ब्रह्मिष्ठो ब्रह्मा भवेदिति।[2] अत्र यक्ष्यमाणो यजमानो ब्रह्माणं वृण्वन् मन्त्रमिदं जपति—'भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे' इत्यादिः' पाठस्तूभयोः श्रौतसूत्रयोः किंचित् पाठान्तरेण उपलभ्यते[3] (का० श्रौ० २।१।१६); आ० श्रौ० (३।६।१८।२); ततो वृतो ब्रह्मा जपति—'वाचस्पते यज्ञं गोपाय' इत्युभयोः कल्पयोर्विधानम्।[4] केचिद्याजमानमेतदिच्छन्ति, तन्न, काठकानां पाठे चैवमस्ति, कात्यायनोऽप्येवमभिप्रैति। ततो ब्रह्मा ब्रह्मसदनात्तृणादिकं निरस्य मन्त्रजपपूर्वकं स्वासने चोपविशति। आपस्तम्बेन तु तृतीयप्रश्ने (षष्ठे पटले) ब्रह्मवरणमुक्त्वा चतुर्थेऽपि किञ्चित्पाठान्तरेण तदुच्यते, चतुर्थे प्रश्ने तु मन्त्रा एवाधिक्येन प्रोक्ताः। कात्यायनस्तु एकत्र हि सर्वं विषयं ब्रवीति।

ततः आ० क० 'पूर्वो ब्रह्मा परो यजमानः' चोपविशतः।[5] 'उ० क० एवमुपविष्टो ब्रह्मा ऋत्विग्यजमानकर्मसु वाचं यच्छति।[6] भ्रान्त्या मानुषीं वाचमुच्चार्य स प्रायश्चित्तार्थं वैष्णवीमृचं जपति।[7]

**प्रणीताप्रणयनम्**—आपस्तम्बस्तु परमतेन विदधाति—'केचित् सूत्रकाराः प्रथमं प्रणीताप्रणयनमामनन्ति, तदनन्तरं पात्रसंसादनम्, अपरे पूर्वं पात्रसंसादनं पश्चाच्च प्रणीताप्रणयनमाहुः, किन्तु वाजसनेयिनामन्यतम आचार्यः कात्यायनः पूर्वं प्रणीताप्रणयनं विदधाति। उ० क० ब्रह्मा चानेन मन्त्रेण प्रणीताः प्रसौति 'प्रणय यज्ञं देवता

---

1. आ० श्रौ० (२४।२।२१-२३)।
2. का० श्रौ०—'अग्निहोत्रं हुत्वा ब्रह्माणम् वृणीते ब्रह्मिष्ठम् (२।१।१८), आ० श्रौ० —ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोः (३।१८।१)।
3. का० श्रौ० (२।१।१६)
4. का० श्रौ० (२।१।२०), आ० श्रौ० (३।६।१८।४)
5. आ० श्रौ० (४।१।४।३)
6. का० श्रौ० (२।२।२), आ० श्रौ० (४।१।४।७)
7. का० श्रौ० (२।२।६), आ० श्रौ० (३।६।१८।७)

वर्धय। त्वं नाकस्य पृष्ठे यजमानोऽस्तु। सप्तऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि।' (का० श्रौ० २।२।८, आ० श्रौ० ३।६।१९।१)। यज्ञार्था आप एव प्रणीतापदेनाभिधीयन्ते।

**प्रोक्षणम्**—ततो ब्रह्मा उ० क० हविरादीनां प्रोक्षणं करोति। पूर्वमध्वर्युः प्रोक्ष यज्ञमित्यादि प्रैषवाक्यं ब्रवीति, ततो ब्रह्मकर्तृकं प्रोक्षणं भवति।[1] अत्रोभयोः कल्पयोर्विधानं प्रायेण समानम्। पूर्वोक्तेषु सर्वेषु कर्मसु ब्रह्मा सर्वत्र मन्त्रमिमं जपति 'देवता वर्धय त्वमित्यादि' पूर्वमेवोदाहृतम्' (का० श्रौ० २।२।१४, आ० श्रौ० ३।६।१९।४)।

**प्राशित्रहरणम्**—प्रोक्षणानन्तरमुभयोः कल्पयोः प्राशित्रहरणं विधीयते। अध्वर्युर्ब्रह्मणो भागं प्राशित्रं ह्रियमाणो जपति—'मित्रस्य त्वा चक्षुषा प्रेक्षे'[2] इति। ततो ब्रह्मा अध्वर्युणा समर्प्यमाणं दृष्ट्वा प्राञ्जलिः सपात्रं प्राशित्रं गृह्णाति।[3] का० क० ब्रह्मा अनामिकाङ्गुष्ठाभ्यां पात्राद्द्रव्यमादाय प्राशित्रं प्राश्नाति अथवा विकल्पेन स स्वस्मिन् अंसदेशे प्राशित्रं निदधाति।[4] आ० क० तु ब्रह्मा प्राशित्रं तत्काल एव भक्षयति।[5] तत उ० क० दन्तैरनस्पर्शन् ब्रह्मा तद्भक्षयति, भक्षणानन्तरं नाभिं स्पर्शन् मन्त्रं जपति 'या अप्स्वन्तर्देवते'त्यादि।'[6]

**पात्रसंसादनम्**—आ० क० विधाने पूर्वं पात्रसंसादनं भवति, का० क० पूर्वं प्रणीताप्रणयनं ततः पात्रसंसादनमिति क्रमः। अत्र कल्पे च पात्रसंसादनात्पूर्वमपि तृणैरग्निः परिस्तीर्यते। कात्यायनेन एकस्मिन्नेव वाक्ये अग्निपरिस्तरणमुक्तम्।[7] आपस्तम्बेन तु विस्तरेण चाग्निपरिस्तरणकर्म विहितम्।[8] उ० क० अध्वर्युः, गार्हपत्याहवनीययोरुत्तरदिशि दर्भान् संस्तीर्य द्वन्द्वशः पात्राणि संसादयति। तानि पात्राणि भवन्ति—शूर्पम्, अग्निहोत्रहवणी, स्फ्यः, कपालानि, शम्या, कृष्णाजिनम्, उलू-

1. का० श्रौ० (२।२।८), आ० श्रौ० (३।६।१९।१)
2. का० श्रौ० (२।२।१५), आ० श्रौ० (३।६।१९।५)
3. का० श्रौ० (२।२।१६), आ० श्रौ० (३।६।१९।७)
4. का० श्रौ० (२।२।१६)
5. आ० श्रौ० (३।६।१९।७)
6. का० श्रौ० (२।२।२०), आ० श्रौ० (३।६।२०।१)
7. का० श्रौ० (२।३।६)
8. आ० श्रौ० (१।४।१४ कण्डिकायाम्)

खलम्, मुसलम्, दृशद्, उपलम्, स्रुवः, जुहूः, उपवेषः, उपभृत्, ध्रुवा, वेदः, पात्री, आज्यस्थाली, प्राशित्रहरणम्, इडापात्रम्, प्रणीताप्रणयनपात्रञ्चेति ।[1] सूत्रान्तरेषु चेषां पात्रनामसु क्वचित् क्वचित् अल्पान्तरं दृश्यते, तन्नोल्लेखनीयमस्ति । कात्यायनकल्पे अभिचारब्रह्मवर्चसप्रतिष्ठाकामानां यजमानानां कृते क्रमेण यथासंख्यं कांस्यवानस्पत्यमार्तिकानि पात्राणि भवन्ति ।[2] अत्र शूर्पमैषीकं भवति, वर्षवृद्धा इषीका इति लिङ्गात्, वैणवं नलमयं चेति भारद्वाजः ।[3] शम्या युगाग्रे या क्षिप्यते दृषत्पट्टिका, उपला पोतिका इति धूर्तस्वामी[4], कपालानि भिन्नस्य घटादेर्ग्राह्यानि रौहिणवद्वा अभिन्नानि । तथा च अक्षमात्रं स्रुवस्योदरं भवति, प्राशित्रहरणं गोकर्णाकृति चमसाकृति वा, स्फ्यः शम्या च बाहुमात्र्यौ, त्रिंशदङ्गुला च शम्या भवति । एतानि पात्राणि श्रपणदेशस्य (गार्हपत्याद् आहवनीयाद् वा) उत्तरदेशे आसाद्यन्ते ।

**वाग्यमनम्**—तत उभयोः कल्पयोरध्वर्युः संप्रेष्यति 'ब्रह्मन्नपः प्रणेष्यामि यजमानं वाचं यच्छेति', 'प्रणीयमानासु यजमानश्चाध्वर्युश्चोभौ वाचं यच्छतः, अत्राध्वर्युः, शूर्पमग्निहोत्रहवर्णिं चादत्ते । आपस्तम्बमते चाहविष्कृतो वाग्यमनं भवति ।[5]

**प्रतितपनादि**—ततोऽध्वर्युः 'प्रत्युष्टं रक्षः प्रयुष्टा अरातय' इत्याहवनीये गार्हपत्ये वा शूर्पादीन् प्रतितप्य 'यजमानो हविर्निर्वप्स्यामीति' आमन्त्रयते । आपस्तम्बकल्पे प्रवसति यजमाने 'अग्ने हविर्निर्वप्स्यामीति' आमन्त्रणम् ।[6]

**शकटाभिगमनादि**—उभयोः कल्पयोरध्वर्युर्हविर्निर्वपणार्थं शकटायाभिप्रव्रजति । मन्त्रश्चात्र समानः–'उर्वन्तरिक्षमिति' ।[7] ततः 'धूरसीति'

---

1. का० श्रौ० (२।३।८), आ० श्रौ० (१।५।१५।७) ।
2. का० श्रौ० (२।३।५) ।
   तुलनीयं–आपस्तम्बेन–'कंसेन प्रणयद्ब्रह्मवर्चसकामस्य, मृण्मयेन प्रतिष्ठाकामस्य, गोदोहनेन पशुकामस्य' (आ० श्रौ० १।५।१६।२) ।
3. भार० श्रौ० (१।२२।१)
4. आ० श्रौ० भा० (पृ० १०७)
5. आ० श्रौ० १।५।१६।४-५), का० श्रौ० (२।३।१०)
6. का० श्रौ० (२।३।११), आ० श्रौ० (१।५।१७।१-२)
7. का० श्रौ० (२।३।१२), आ० श्रौ० (१।५।१७।३)

युगधुरमभिमृशति, उत्तरामीषामालभ्य चाध्वर्युर्जपति 'त्वं–देवानामित्यादि', ततः स हविर्धानशकटे चारोहति —'विष्णुस्त्वेति' मन्त्रेण ।[1]

**हविर्निर्वापः**—ततः आ० क० अध्वर्युः शकटमारुह्य तस्य परीणाहमाच्छादयति, ततः स व्रीहिन् यवान् वा पुरोडाशीयान् प्रेक्षते । व्रीह्यादिषु यत्किंचित् तृणादिकं भवति तन्निरस्य दशहोतारं जपति । शूर्पे पवित्रे च निधाय तस्मिन् अग्निहोत्रहवण्या हवींषि च निर्वपति । तदा स चतुरो मुष्टीन् गृह्णाति, त्रिकृत्वो यजुषा चतुर्थं च तूष्णीं निर्वपति । हविर्निर्वपणं तु यथादैवतमग्नीसोमाभ्यामिति पौर्णमास्याम्, इन्द्राग्निभ्यामिति आमावस्यायाम् । ऐन्द्राग्नश्च संनमतः भवति, पुनः चतुरो मुष्टीन् निरूप्य तानभिमृशति । हविरभिमन्त्र्य, निष्क्रम्य चाध्वर्युः प्राङ्प्रेक्षते, शकटाच्चावरुह्य तानि हवींषि गार्हपत्यस्य पार्श्वे परस्मिन् वा देशे निदधाति । श्रपणकाले तु आहवनीयस्य पार्श्वे निदधाति ।[2] कात्यायनीये कल्पे हविर्निर्वपणे प्रायेण चैवं विधानं वर्तते किन्तु सारेण कथितम् । अत्र कल्पे च दशहोतृजपस्य विधानं न दृश्यते ।[3]

**हविःप्रोक्षणम्**—का० क० अग्निहोत्रहवण्यामपः कृत्वा पवित्राभ्यां ताः प्रोक्षणीः (आपः) उत्पूयोत्पूय ताभिः हवींषि प्रोक्षत्यध्वर्युः, अतः ऊर्ध्वं ते पवित्रे अग्निहोत्रहवण्यां स्थितासु प्रोक्षणीषु (आसु) स्थाप्येते । सजलामग्निहोत्रहवणीं उत्तरहस्ते धृत्वा दक्षिणहस्तेन अध्वर्युरपश्चालयति ।[4] आ० क० च० कात्यायनकल्पवदेव प्रोक्षणविधानम्, परन्तु केचिदेकत्र प्रोक्षणमिच्छन्ति, केचिच्च पृथक् प्रोक्षणमाहुः । आपस्तम्बमते अध्वर्युरुत्तानानि पात्राण्यपि प्रोक्षति, तत्तु प्रोक्षणं त्रिकृत्वो भवति ।[5] उ० क० मन्त्रा अपि समानाः 'त्वा सवितुः प्रसव'[6] इत्यादि । का० क० यस्मिन् स्थाने कोऽपि न गच्छति (असंचरे) तत्राध्वर्युः प्रोक्षणीर्निदधाति ।[7] आ० क० प्रोक्षणीशेषमग्रेण गार्हपत्यं निधाय मन्त्रा जप्यन्ते ।[8]

---

1. का० श्रौ० (२।३।१३-१५), आ० श्रौ० (१।५।१७।३-५)
2. आ० श्रौ० (१।५।१७-१८ कण्डिके)
3. का० श्रौ० (२।३।१६-१७)
4. का० श्रौ० (२।३।३३-३९)
5. आ० श्रौ० (१।६।१९।३)
6. का० श्रौ० (२।३।३३), आ० श्रौ० (१।६।१।३)
7. का० श्रौ० (२।३।४०)
8. आ० श्रौ० (१।६।१९।३)

**हविराहननम्**—उ० क० अध्वर्युर्हविषामाहननार्थं कृष्णाजिनमादत्ते, तस्मिन्नुलूखलमादधाति, उलूखले च हविरावपति, मुसलं चादायाध्वर्युः 'हविष्कृदेहीति' त्रिरवहन्ति। अत्र यजमानोऽध्वर्युश्च वाचं विसृजेते। भाष्यकाराणां मतेनाह्वानं चात्र देवतारूपस्य हविष्कृतो वेदितव्यम्, न तु मानुषस्य हविष्कृतः।[1] का० क० अध्वर्युरवघ्ननहविः खण्डनार्थं यजमानपत्नीमाग्नीध्रं वा त्रिरवहन्ति। प्रथममध्वर्युरवहन्ति, ततः पत्नी चावहंति ततोऽन्यो वावहन्ति। आग्नीध्रो विहारस्यौत्तरतः उपविष्टः त्रिः शम्यया द्विर्दृषदमेकवारमुपलामाहन्ति।[2] आ० क० तु चतुर्णां वर्णानामाह्वाने चातुर्विध्यमस्ति, 'हविष्कृदेहीति' ब्राह्मणस्य, 'हविष्कृदागहीति' राजन्यस्य, हविष्कृदाद्रवेति', वैश्यस्य, हविष्कृदाधावेति' शूद्रस्य।[3] अनेन च निश्चीयते यत्पुराकल्पेषु यज्ञानुष्ठानेषु शूद्रा अपि अधिकृता आसन्निति। यद्यपि भाष्यकारेण धूर्तस्वामिना चात्र शूद्रस्य निषादस्थपतीत्यर्थो गृहीतः, सा न प्रामाणिकी सरणिः, यत्तु शातपथीश्रुतिष्वपि चैवं विधीयते (द्रष्टव्यम्—श० ब्रा० १।१।४।१४)। कात्यायनेन नैतद् विधानं कृतम्, कात्यायनस्य काले शूद्राणां यज्ञेषु अधिकारोऽहीयत, इति प्रतीयते, यद्यपि वाजसनेयिब्राह्मणं (शतपथब्राह्मणं) कात्यायनश्रौतसूत्रस्य मूलमस्ति, तथापि तयोः कालयोः शतानां वर्षाणामन्तरमासीदिति निश्चीयते, आपस्तम्बस्तु कात्यायनात्पूर्वकालिक एवेति मन्तव्यः।

ततः उ० क० अध्वर्युस्तुषेषु विभक्तेषु हस्तेन शूर्पमास्ते, स मन्त्रपूर्वकमुलूखलाद्बहिर्निकाष्य हवींषि शूर्पे च निर्वपति।[4] आपस्तम्बेनात्र बह्वृचब्राह्मणमुदाहृतम्, तन्मतेनाध्वर्युर्हस्तेनोपवपति।[5] तत उ० क० अध्वर्यु अद्भिः कपालं प्रक्षाल्य, प्रज्ञातं निधाय, उपस्पृश्य तान् पुरोडाशीयान् विविनक्ति 'वायुर्वो विविनक्तु' इति। तान् विविच्य पात्र्यां चासादयति।[6]

---

1. का० श्रौ० (२।४।१२), आ० श्रौ० (१।६।१६।५-७)
2. का० श्रौ० (२।४।१३-१४)
3. आ० श्रौ० (१।६।१६।८)
4. का० श्रौ० (२।४।१६), आ० श्रौ० १।६।२०।६)
5. आ० श्रौ० (१।६।२०।१०)
6. का० श्रौ० (२।४।१६।२०), आ० श्रौ० (१।६।२०।११)

**त्रिःफलीकरणम्**—तत उभयोः कल्पयोरध्वर्युः त्रिःफलीकर्त्तुं संप्रेष्यति। यजमानपत्नी पृथक्करणार्थं तण्डुलान् अवहन्ति। पत्न्यामविद्यमानायामन्यः कश्चिदपि अवहन्ति। तान् सुफलीकृतान् तण्डुलान् त्रीन् मन्त्रानुक्त्वा अध्वर्युः फलीकरणं करोति। स तुषयुक्तान् तण्डुलानुत्करे क्षिपति। न्यङ्गाः खण्डिताश्च तण्डुला 'रक्षसां भागोसीति' त्यज्यन्ते। तण्डुलान् सुफलीकृत्वा अध्वर्युः कणांश्च सुगुप्ते देशे निदधाति।[1]

**पेषणोपधाने**—कात्यायनस्य मतेन तण्डुलानां पेषणं कपालानां चोपधानं युगपद् भवतः।[2] किन्त्वापस्तम्बेन पूर्वं पेषणं विधीयते पश्चाच्चोपधानम् कथितम्। वयं त्वत्र कात्यायनीयक्रममनुसरामः। तदनुसारेणाध्वर्युस्तण्डुलानां पेषणं करोति, अग्नीच्च कपालान्युपदधाति। अग्नीत् प्रथमं कपालानि प्रक्षालयति, तत उपवेषम् हस्ते गृहीत्वा, तेन खरस्थानपरभागान् गार्हपत्याङ्गारान् खरस्य प्राग्भागे करोति, पश्चाद्भागं च कपालोपधानार्थं रिक्तीकरोति। तत सोऽग्नीत् सव्याङ्गुल्याशून्येऽङ्गारं 'ध्रुवमसीति' मध्यमे कपाले निदधाति, मध्यमकपालस्य पश्चात् 'धरुणमसी'ति पुरस्ताद्दधाति, 'विश्वाभ्य' इति मन्त्रेण दक्षिणतो द्वे कपाले चोपदधाति, एवं समं विभज्य द्वे दक्षिणत एवमुत्तरतो द्वे कपाले उपदधाति, एवम् एकादशकपालान्युपधीयन्ते।[3] आपस्तम्बीयं विधानमपि प्रायेण कात्यायनविधानेन समानम्।[4] एतानि सर्वाणि कपालानि संश्लिष्टानि समानि चोपधेयानि, यथान्तराभूमिर्न दृश्यते। अत्र कपालचितिक्षेत्रं मध्यमाश्वशफप्रमाणं षडङ्गुलं वृत्तं कृत्वा सम्पूर्यते।[5]

ततः का० क० अग्नीद्गार्हपत्ये पिष्टसंयवनार्था अपोऽधिश्रयति, ताश्चाप उपसर्जनीसंज्ञकाः भवन्ति, यदा तप्ताभिरद्भिः पिष्टान् संयौति तदा मार्दवं च भवति। एतत्कर्म संयवनमुच्यते। यदा आहवनीये हविः श्रपणं क्रियेत तदोपसर्जन्यधिश्रपणं कपोलोपधानं चाहवनीय एव

1. का० श्रौ० (२।४।२२।२४), आ० श्रौ० (१।६।८१।१-२)
2. का० श्रौ० (२।४।२४)
3. का० श्रौ० (२।४।२६-३६)
4. आ० श्रौ० (१।७।२२।३-४), (१।७।२३।१-३)
5. का० श्रौ० भा० (पृ० २००)

कर्त्तव्ये। ततः पेषणार्थं का० क० पूर्ववत्कृष्णाजिनादीनामादानं भवति। अत्राध्वर्युः कृष्णाजिने दृषदमधिवर्तयति। स दृषदि चोपलां स्थापयति। तत्र सतण्डुलानोप्य मन्त्रपूर्वकं पेषणं करोति। आपस्तम्बमते तु दासी पत्नी वा पिनष्टि, अपि वा पत्न्यवहन्ति, शूद्रा पिनष्टि।[1] अत्र विषये कात्यायनीयं मतं तु न प्रज्ञायते।

का० क० अध्वर्युः कृष्णाजिने धृतानि पिष्टानि हवींषि चक्षुषा समीक्षते। अस्य समीक्षणकर्मणः प्रयोजनमासीत् न तस्य कर्मणो वैपरित्यमिति मन्तव्यम्, विना परीक्षणेन शुद्धान्यशुद्धानि वेति न ज्ञायन्ते, तेन समीक्षणं परीक्षणं चावश्यके अभवताम्। ततोऽध्वर्युः सपवित्रायां महत्यां पात्र्यां पिष्टतण्डुलानावपति, तदनन्तरं सोऽध्वर्युर्गार्हपत्यस्य पश्चाद्देशे चोपविशति। तत आग्नीध्र उपसर्जनीरप आनयति, ताश्चाध्वर्युः सपवित्राभ्यां कुशाभ्यां प्रतिगृह्णाति। अतः परं पूर्वोक्तं संयवनं भवति। संयवनान्तरमध्वर्युः द्वौ पिण्डौ समौ कृत्वा पुनरमिश्रयन् दक्षिणमाग्नेयमुत्तरमग्नीषोमीयमादत्ते, एवं यथादेवतमन्यानि हवींषि चादत्ते। ततो मन्त्रपूर्वकं गार्हपत्ये अग्नीत् पुरोडाशानधिश्रयति। कात्यायनस्य मते त्वपत्नीकस्य यजमानस्य आहवनीये श्रपणं भवति।[2] अध्वर्युरेव पुरोडाशान् कपालेषु अधिश्रयति।[3]

आ० क० तु पूर्वं पेषणमुक्तं ततः कपालोपधानस्य विधानम्। आपस्तम्बेनात्र पेषणे शूद्राविधानं कृतम्, शेषं तु कात्यायनविधानेन तुल्यम् तत्तु पूर्वमेवोल्लिखितम्।[4]

**पुरोडाशश्रपणम्**—संयवनानन्तरमध्वर्युः पुरोडाशान् कपालेष्वधिश्रयति, स पुराडाशपिण्डानि यावन्ति यत्परिमाणपृथूनि कपालानि तावन्ति पृथूनि करोति।[5] स यत्र तत्र विदीर्णं पृथुं कपालमुदकेन संयोजयति। ततोऽध्वर्युः पुरोडाशमुल्मुके पर्यग्नि करोति। पक्वानन्तरं

1. आ० श्रौ० (१।६।२१।८–९)
2. का० श्रौ० (२।५।१८), तथा च—'मृतायामपि भार्यायां वैदिकाग्नीन्न तु त्यजेत्। उपाधिनापि तत्कर्म यावज्जीवं समापयेत्।'
(कर्मप्रदीपे ३।१।९)
3. का० श्रौ० (२।५।८–१८)
4. आ० श्रौ० (१।६।२१)
5. आ० श्रौ० (१।८।२४।६)

पुरोडाशं स आलभते, तदनन्तरमाप्त्येभ्यो जलेभ्यः पात्र्यङ्गुलिप्रक्षालनं करोति। उ० क० अध्वर्यु राहवनीये गार्हपत्ये वा हवींषि श्रपयति (का० श्रौ. ), (आ० श्रौ० १।७।२२।१) आ० क० अध्वर्यु राग्नेयं पुराडाशमष्टासु कपालेष्वधिश्रयति।[1] पुराडाशं च अतुङ्गमनपूपाकृति कूर्मस्येव प्रतिकृतिमश्वशफमात्रं भवति। (आ० श्रौ० १।८।२५।४)।

का० क० अध्वर्यु रन्वाहार्यसंज्ञकं दक्षिणार्थं तण्डुलरूपमोदनं दक्षिणाग्नौ पचति। अत्रावसरे च यजमानेन व्रतोपायनं कर्त्तव्यमिति च शाखान्तरे विधानम् (का० श्रौ० २।५।२७–२८)। आपस्तम्बेन प्रक्षालनानन्तरं तिसृलेखाविधानमपि कृतम्, तच्च का० क० न श्रूयते (आ० श्रौ० १।८।२५।१४)।

**वेदिकरणम्** आपस्तम्बस्तु प्रायेण मन्त्रपुरस्सरं सूत्रेषु विधानं करोति, यदा कात्यायनस्तु सूत्राणि प्रायेण मन्त्रहीनानि रचयति। अत्र प्रकरणे आपस्तम्बेन मन्त्रविनियोगपूर्वकं सूत्राणि रचितानि, कात्यायनसूत्रेष्वत्र न मन्त्राः।

का० क० अध्वर्यु रथवा कश्चित् कर्मकरः आहवनीयसमीपे त्र्यङ्गुलखातां वेदिं खनति, सा तु पश्चात्तिर्यक् व्याममात्री चतुररत्निमात्रा भवति। पूर्वपार्श्वे त्र्यरत्निमात्रा च भवति।[2] अथवा विकल्पेन अनिश्चितप्रमाणा प्रमाणाद् भूयसी वा भवेत्।[3] सा वेदिः प्राच्यामुदीच्यां वा निम्ना च भवेत्, वेदिमध्ये संग्रहौ च कर्त्तव्यौ, तदुक्तं परिशिष्टे कात्यायनेन—

आनीय रज्जुं पूर्वार्धात्पश्चार्धं यावदेव तु।
द्विगुणीकृत्य तां रज्जुमन्ते तस्यास्तु शङ्कुकौ॥
भ्रामयेत्तेन मानेन तया रज्ज्वाष्टभागया।
वा पृथुत्वतुरीयेण भागेनालिख्य संग्रहौ॥

वेदेराग्नेयैशानकोणौ आहवनीयमुभयतो भवतः। वेदेः खातं च भूमिमध्ये यावन्ति मूलानि च दूरमपि यावत्प्रसरन्ति तावत्पर्यन्तम्। तथा

1. आ० श्रौ० (१।८।२४।६)
2. का० श्रौ० (२।६।१।४), तथा हि—शतपथे–'पुरस्तात्तिर्यक् त्र्यरत्निं मिमीते।' (१।२।५।१६)
3. का० श्रौ० (२।५।५), (अपरिमित—'अनमैर्जड')

ह्याचार्यो ब्रवीति, पशुकामस्य आहार्यपुरीषा वेदिः खन्यते।[1] अग्नीद् वेदिं परिसमुह्य वितृत्तीये देशे उत्करं च करोति, अध्वर्युश्च सव्ये हस्ते सतृणं स्फ्यमादाय दक्षिणेनालभ्य मन्त्रं जपन् स्तम्बयजुर्हरति। स्तम्बयर्जुरिति तृणस्य छिन्नस्य पांसूनां च नामधेयम्। स पांसून् हस्तेन उत्करे च करोति।[2]

आ० क० तु० वेदिः द्वयङ्गुलखाता, त्र्यङ्गुलखाता, चतुरङ्गुलखाता यावत्पार्ष्ण्याः शुक्लभागस्तावती पृथुमात्री रथवर्त्ममात्री सीतामात्री प्रादेशमात्री पुरीषवती च क्रियते।[3] आपस्तम्बेन त्वतिखननं प्रतिषिध्यते।[4] आ० क० प्राञ्चौ च वेद्यंसौ उन्नतौ, प्रतीच्यां श्रोणि, पुरस्तात्तन्वी, पश्चात् पृथुला मध्ये सन्नता च भवेत्।[5]

आ० क० अध्वर्युः स्तम्बहरणात्प्राग् वेदेन वेदिं त्रिस्सम्मार्ष्टि अनेन मन्त्रेण—

वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवानि।
गर्भं बिभर्त्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिः॥[6]

उभयोः कल्पयोः स्तम्बहरणविधानं समानं वर्तते। मन्त्रपाठा अपि समानाः, यथा दर्भनिधाने—'पृथिव्यै वर्मासि' इत्यादि।[7] एवमुभयोः कल्पयोः 'अपारुरुम देवयजने पृथिव्या' इत्यादि, द्वितीये प्रहरणे जप्यते।[8] चतुर्थं प्रहरणं तूष्णीं कात्यायनकल्पे, आ० कल्पे त्विदं मन्त्रपूर्वकं भवति 'अवबाढ़ा यातुधाना' इति।[9] ततो 'बधान' इत्यादि मन्त्रेण उ० क० पुरीषनिवपनं भवति।[10] 'अरुरुस्ते दिवं मास्कानिति'

---

1. का० श्रौ० (२।५।८।११), आहार्यपुरीषां—'यत्पुरीषमग्रत आह्रियते'
2. का० श्रौ० (२।५।१२–१४)
3. आ० श्रौ० (२।२।२७)
4. 'नैतामात्रा अतिखनति' (आ० श्रौ० २।२।२।८)
5. आ० श्रौ० (२।२।३।१)
6. आ० श्रौ० (२।१।१।३)
7. का० श्रौ० (२।६।१५), आ० श्रौ० (२।१।१।५)
8. का० श्रौ० (२।६।२१), आ० श्रौ० (२।१।२।१)
9. का० श्रौ० (२।६।२४), आ० श्रौ० (२।१।२।२)
10. का० श्रौ० (३।६।१९), आ० श्रौ० (२।१।१।६)

मन्त्रेण उत्करस्य हस्ताभ्यां पिधानं विहितम् ।[1] तत उ० क० 'गायत्रेण' इत्यादि मन्त्रेण वेदेः परिग्रहणं भवति ।[2] अत्र विधानं प्रायेण समानं केवलं शब्दानुपूर्वी भिद्यते, अत्र आग्नीध्रः स्फ्येन वेदेरुपरितनीं मृदमुद्धृत्य उत्करे त्रिर्निर्वपति ।[3] अत्र का० क० त्रिरेखाकरणस्य विधानं दृश्यते,[4] आ० क० च० तन्नास्ति । आ० क० त्वध्वर्युः संप्रेष्यति—

इमां नराः कृणुत वेदिमेतां वेदेभ्यो जुष्टामदित्या उपस्थे ।
इमां देवा अजुषन्त विश्वे रायस्पोषा यजमानं विशन्तु ॥
(आ० श्रौ० २।१।२।६)

का० क० अध्वर्युरुत्तरं परिग्रहं—'स्योनोर्जस्वतीति' मन्त्रेण परिगृह्णाति', 'पुरा क्रूरस्येति', वेदिं समीकरोति', (का० श्रौ० २।६।३१), आ० क० तु स 'ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामिति ब्रह्माणमामन्त्र्य 'वेदेन वेदिं परिगृह्णाति तत्र स वेदिं समीकरोति—

'ऋतमसीति' दक्षिणतः
'ऋतसदनमसीति' पश्चात्,
'ऋतश्रीरसीत्युत्तरतः,
'धा असि, स्वधा असीति' प्रतीचीम् ।[5]

**प्रैषवचने मतभेदाः**—उ० क० अध्वर्युः स्फ्यमुद्यम्य सम्प्रेष्यति—'प्रोक्षणीरासादय, इध्माबर्हिरुपमासादय स्रुवं च स्रुवश्च समृड्ढि, पत्नीं सन्नह्याज्येनोदेहीति'[6] आ० क० विकल्पोऽप्युक्तः, अपि वा सम्प्रेषं न ब्रूयादिति'[7], एवं च कात्यायनस्य मतं पराधिकारात् प्रैषमन्योऽपि वक्तुमर्हति' इति ।[8] तन्मते च अध्वर्युरेव आग्नीध्रं सम्प्रेष्यति, तथा च सम्प्रेषित आग्नीध्र आसादनादिं कर्म करोति ।[9]

---

1. का० श्रौ० (२।६।२२), आ० श्रौ० (२।१ १।९)
2. का० श्रौ० (२।६।२५), आ० श्रौ० (२।१।२।१३)
3. का० श्रौ० (२।६।२७), आ० श्रौ० (२।१।२।१५)
4. 'वेद्यां त्रिखलिख्याह हर त्रिरिति' का० श्रौ० (२।६।२६)
5. आ० श्रौ० (२।१।३।६–८) ।
6. का० श्रौ० (२।६।३४), आ० श्रौ० (२।१।३।१०)
7. आ० श्रौ० (२।१।३।११)
8. का० श्रौ० (२।६।३५)
9. का० श्रौ० (२।६।३७)

**आसादनम्**—एवं सम्प्रेषित आग्नीध्रः, प्रैषाभावे स्वयमध्वर्युरेव 'द्विषतो बध' इति सफ्यमुदञ्चं प्रहृत्य, अवनिज्य पाणी, प्रणीतानां समीपे स्फ्यं निदधाति, तत इध्मं पूर्वं निधाय, पश्चात् बर्हिः संसादयति, आग्नीध्रः स्रुवम् प्रतप्य, अप उपस्पृश्य तं अध्वर्यवे ददाति, एवं स जुहूम्, स्रुचः, प्राशित्रहरणम्, शृतावदानम्, पात्रीं च तस्मै प्रयच्छति ।[1]

**स्रुक्सम्मार्जनम्**—कात्यायनेन तु पूर्वं स्रुक्सम्मार्जनं विहितम्[2], आ० क० विकल्पेन पूर्वं संहननं वा भवति ।[3] तथापि उभाभ्यामाचार्याभ्यां पूर्वं स्रुक्सम्मार्जनमेवोपवर्णितम् । उ० क० 'अनिशितेति' (शु० १।२९) मन्त्रेण सम्मार्जनं क्रियते ।[4] आ० क० सम्मार्जनविधानं किञ्चित् विस्तरेण प्रोक्तम् । उ० क० अग्नीध्रः सम्मार्जनानन्तरं सम्मार्जनसाधनानि वेदाग्रमूलादीनि उत्करे प्रक्षिपति, अपि वा आहवनीये प्रक्षिपति ।[5]

**पत्नीसन्नहनम्**—आग्नीध्रो यजमानस्य पत्नीं त्रिगुणेन मुञ्जमयेन बध्नाति तदेव सन्नहनमुच्यते । तच्चैतत्संहननं नाभेरधः कटिप्रदेशे भवति । का० क० यजमानपत्नी गार्हपत्यस्य प्रत्यदक्षिणतो नैर्ऋत्या दिश्यैशानदिङ्मुखी उपविशति, तामुपविष्टामाग्नीध्रो 'अदित्यै रास्तासीति' मन्त्रेण वाससो बहिः परितो परिवेष्ट्य संहननं करोति । का० क० आग्नीध्रो योक्त्रे पाशं कृत्वा ग्रन्थि न करोति ।[6] आ० क० आग्नीध्रः 'आशासाना सौमनसामिति' मन्त्रेण ऊर्ध्वज्ञुमासीनां पत्नीं तिष्ठन्तीं वा संनह्यति । संनहनविधानं त्वत्रापि कात्यायनविधानेन समानम् ।[7] आ० क० पत्नी चोत्थाय—'अग्ने गृह्यते' इति गार्हपत्यमुपतिष्ठते, ततो 'देवानां पत्नीरूपमाहूयध्वमिति देवपत्नीरुपतिष्ठते, ततोऽपाक्रम्य 'सुप्रजस्त्वा वयमिति उदीच्यामुपविशति, तथा च जपति—

---

1. का० श्रौ० (२।६।४२–४९), आ० श्रौ० (२।२।४)
2. का० श्रौ० (२।६।४६), आ० श्रौ० (२।२।४।१)
3. का० श्रौ० (२।६।४६)
4. आ० श्रौ० (२।२।४।२)
5. का० श्रौ० (२।६।५०–५१), आ० श्रौ० (२।२।५।१)
6. का० श्रौ० (२।७।१–३)
7. आ० श्रौ० (२।२।५।४–६)

इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा ।
अस्थूरि त्वा गार्हपत्योपनिषदेसुप्रजाः ।[1]

**आज्यग्रहणम्**–सा यजमानपत्नी वेदं हस्ते गृहीत्वा आज्यं पश्यति । का० क० अग्नीत्तदाज्यं नीत्वा आसादितानां प्रोक्षणीनां पश्चाद्द्वेधा करोति ।[2] उ० क० आज्यस्याधिश्रयणं गार्हपत्ये आहवनीये वा विकल्पेन भवति ।[3] पत्न्यभावे गार्हपत्याधिश्रयणं विधीयते ।[4] आ० क० च आग्नीध्रः 'पूषा ते बिलं विष्यत्विति' मन्त्रेण सपिधानस्य भाण्डस्य मुखं विवृत्य दक्षिणभागाज्यं विलाप्य 'अदितिरस्याच्छिदपुत्रे' इत्याज्यस्थालीमादाय एवं निर्वपति—'महीनां पयोऽस्योषधीनां रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्यया' इति (आ० श्रौ० २।२।६।१) ततो गार्हपत्ये आहवनीये वा अधिश्रयणम्, तदनन्तरं सा तदाज्यं स्फ्यस्य वर्त्मना आसादयति, ततोध्वर्युर्यजमानश्च नेत्रे निमील्य वीक्ष्यानुश्वसन्तौ आज्यमवेक्षेते—'आज्यमसि' सत्यमसीति' ।[5] ततः, का० क० अध्वर्युर्यजमानो वा वेदमुपगृह्य वेद्यामासादितमाज्यमुत्पुनाति—'सवितस्त्वेति' मन्त्रेण ।[6] आ० क० तु अध्वर्युः पुनराहृतमाज्यं 'शुक्रमसीति' प्रथममुत्पुनाति, 'ज्योतिरसीति', द्वितीयम्, 'तेजोऽसीति' तृतीयमुत्पुनाति ।[7] का० क० अध्वर्यु० 'तेजोऽसीति' आज्यमवेक्षते[8], आ० क० स० 'महीनां पयोऽसीति' मन्त्रेण प्रेक्षते ।[9] का० क० अध्वर्युर्यजमानो वा मन्त्रपूर्वकं चतुरः स्रुवान् जुह्वां गृह्णाति, अष्टौ स्रुवान् उपभृति गृह्णाति । यद्यनुयाज्यभवेयुर्यदि न भवेयुस्तर्हि चतुरः स्रुवान् गृह्णाति, ध्रुवायां च चतुरः स्रुवान् गृह्णाति ।[10] एवं च विधानं आ० क० चास्ति ।[11] परन्तु तन्मते पशुकामस्य यजमानस्य पञ्चगृहीतमाज्यं ध्रुवायां भवेदिति ।[12]

---

1. आ० श्रौ० (२।२।५।९)
2. का० श्रौ० (२।७।५)
3. का० श्रौ० (२।७।६), आ० श्रौ० (२।२।६।१०)
4. आ० श्रौ० (२।२।६।४)
5. आ० श्रौ० (२।२।६।२–६)
6. का० श्रौ० (२।७।७)
7. आ० श्रौ० (२।२।७।६)
8. का० श्रौ० (२।७।९)
9. आ० श्रौ० (२।२।६।२)
10. का० श्रौ० (२।७।१२–१४)
11. आ० श्रौ० (२।२।७।४)
12. आ० श्रौ० (२।२।७।५)

**बर्हिराहरणम्**—का० क० आग्नीध्र: इध्मं, वेदिं, बर्हिश्च प्रोक्षति।[1] आ० क० इध्मबर्हिषो: वेदेश्च प्रत्येकं त्रि: कृत्व: प्रोक्षणं विधीयते।[2] तत्रोभयो: कल्पयो: समानो मन्त्रपाठ:—'कृष्णोऽस्याखरेष्ठ' इति' (आ० श्रौ० २।३।८।१, का० श्रौ० २।७।१६)। उ० क० प्रोक्षणीशेषं तु बर्हिमूलान्युपपादयति।[3] आ० क० तु० प्रोक्षणीशेषं वेदेर्दक्षिणस्यां श्रोणोत्तरस्यां च सततं निनीयते—'स्वधा पितृभ्य' इति। पत्न्या ग्रन्थि च विस्रंसयति।[4] का० क० प्रणीतासु पवित्रे निधाय अध्वर्युर्ग्रन्थि विस्रंसयति, तस्य बर्हिष: पूर्वभागात्प्रस्तरहरणं (निष्कासनं) करोति।[5] तत्रोभयो: श्रौतसूत्रयो: प्रस्तरस्य पृथक्करणे मन्त्र: समान:—

'विष्णो: स्तूपोऽसीति'[6]

आ० क० अध्वर्यु: प्रस्तरं कर्षन् उत्क्षेपणादि कर्म न करोति।[7] ततो मन्त्रं पठति—

'अयं प्राणश्चापानश्च यजमानमपि गच्छताम्।
ह्यभूतां पोतारौ पवित्रे हव्यशोधने॥'

'यजमाने प्राणापानौ दधामीति' प्रस्तरे पवित्रे निधाय तं यजमानाय प्रयच्छति, तं यजमानो ब्रह्मणे ददाति, ब्रह्मा च तं धारयति।[8] एवं च का० क० विधानम्।[9] तत उ० क० 'उर्णम्रदसं त्वा स्तृणामीति' अध्वर्युर्वेदिं बर्हिषा स्तृणाति (आच्छादयति) तत्स्तरणं त्रिवृत् भवति।[10] आ० क० विकल्पेन त्रिवृत् पञ्चवृत् वा स्तरणं भवति।[11] कात्यायनोऽप्येवं विकल्पते।[12]

---

1. का० श्रौ० (२।७।१६)
2. आ० श्रौ० (२।२।८।१)
3. का० श्रौ० (२।७।२), आ० श्रौ० (२।३।८।२)।
4. आ० श्रौ० (२।२।८।३)
5. का० श्रौ० (२।७।२१)
6. का० श्रौ० (२।७।२१), आ० श्रौ० (२।२।८।५)
7. 'नौद्योतिन-प्रयोतिन-प्रतियौतिन-विक्षिपतिन-प्रमार्ष्टिन-प्रतिमार्ष्टिनानुमार्ष्टि' (२।२।८।५)।
8. आ० श्रौ० (२।२।८।६)
9. का० श्रौ० (२।७।२१–२२)
10. का० श्रौ० (२।७।२२)
11. आ० श्रौ० (२।३।६।२)
12. का० श्रौ० (२।७।२३)

**परिधिपरिधानम्**—तत० उ० क० अध्वर्युर्ब्रह्मण: सकाशात्प्रस्तरं चादाय संसृष्टान् परिधीन् परिदधाति—'गन्धर्वोऽसि विश्वावसुरित्येतैर्मन्त्रैराहवनीयं कल्पयति। का० क० चैषां परिधीनां वृक्षा: कथ्यन्ते—'पलाशविकङ्कतकाष्मर्यबिल्वखदिरौदुम्बरा: ।'[1] आ० क० चात्र वाजसनेयिनां मतमुद्धृतम् ।[2] अत्र उदूहने प्रज्वलितकाष्ठाग्नि प्राग्भागे करोति वाजसनेयिमतात्, दर्शपूर्णमासयोस्तु अनुयाजा नित्यं भवन्त्येव, अनुयाजानामभावे उदूहनाभावोऽपि भवेदिति। उ० क० अध्वर्यु: वीतिहोत्रामिति' मन्त्रेण प्रथमं परिधिमादधाति, द्वितीयां समिधं (समिदसीति'[3] आ० क० तूत्तरां समिधं विकल्पेन तूष्णीं वा दधाति[4], तथा च मध्यमं (प्रथमं) परिधिं आघारसमिदिति' कृत्वा आदधाति ।[5]

**विधृती**—उ० क० अध्वर्युर्वेदिं प्रत्यागत्य विस्तृतस्य बर्हिषो द्वे तृणे आदाय आहवनीयस्य पश्चात् प्रदेशे तिरश्ची निदधाति ते च विधृतीति उच्येते ।[6]

याज्ञिकेषु जुह्वादयो यज्ञायुधानीति प्रसिद्धानि। उ० क० अत्रैव अध्वर्यु: प्रस्तरे जुहूस्रुवध्रुवादीनासादयति ।[7] एतेषामासादनान्तरमध्वर्युर्द्वौ पुरोडाशावभिघारयति। तौ पुरोडाशौ पात्रे निधाय सर्पिषा चानक्ति सैव अध्वर्यु:। अत्र पुरोडाशस्याञ्जने उ० क० समानो मन्त्र:-(स्वल्पपाठान्तरेण)[8]—

---

1. का० श्रौ० (२।८।१)
2. 'अनुयाजार्थे प्राची उल्मुके उदूहतीति वाजसनेयकम् ।' (आ० श्रौ० २।३।९।८)। तत्तुलनीयं—का० सूत्रेण—'उल्मुके उदूहत्यनुयाजाश्चेत्' (का० श्रौ० २।७।३०)
3. का० श्रौ० (२।८।२-३)
4. आ० श्रौ० २।३।९।१०)
5. आ० श्रौ० (२।३।९।१०)
6. का० श्रौ० (२।८।५), आ० श्रौ०— 'समावनन्तगर्भौ दर्भौ विधृती कुरुते' (२।३।९।११)
7. का० श्रौ० (२।८।१२-१३), आ० श्रौ० (२।२।९।१४, २।२।१०।१-२), का० श्रौ० २।८।१४)
8. आ० श्रौ० (२।३।१०)–पाठान्तरम्–'यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान् सोमघृतवान् हि भूत्वा देवान् गच्छ सुवर्विन्द यजमानाय मह्यम् ।।'

'यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे।
आत्मन्वान्त्सोमघृतवाहिभूत्वाग्नि गच्छ स्वर्यजमानाय विन्द ॥'

अत्र मन्त्रविनियोगस्य काल्पनिकत्वमपि द्रष्टव्यम्। प्राणहीने पदार्थे (पुरोडाशे) प्राणस्यात्मनो वा कः प्रश्नः। याज्ञिकेष्वेते काल्पनिका मन्त्रविनियोगाः कात्यायनापस्तम्बाभ्यां बहुकालात्पूर्वमेव प्रचलिता आसन् इति च मन्तव्यम्।

पुरोडाशाञ्जनानन्तरं कपालानामञ्जनं भवति। का० क० त्वनेन मन्त्रेण कपालाञ्जनम्—

'यानि घर्मे कपालानि उपचिन्वन्ति वेधसः।
पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम् ॥ (२।८।१६)

अथवा तूष्णीं कपालाञ्जनं भवति। आ० क० तु कपालाञ्जने मन्त्रपाठः–'इरा भूतिः पृथिव्यै रसो मोत्क्रमीत्' इति स्रुवेण तद्भवति।[1] अञ्जनानन्तरमध्वर्युरेव वेदेर्मध्ये सन्तापकुम्भ्यौ संदधाति, तत्र एककुम्भ्यां श्रृतं पयो भवति, अपरायां च दधि।

**सामिधेनीवाचनम्**—उ० क० अध्वर्युर्होतुरुपवेशनार्थं होतृषदनमासनं कृत्वा एहि होतरित्येवं होतारमामन्त्रयते।[2] ततो होतरि तत्रागते सति अध्वर्युरिध्मादेकां समिधं हस्ते गृहीत्वाऽग्नये समिध्यमानायानुब्रूहीत्येवं होतारं सम्प्रेष्यति।[3] कात्यायनेनात्र मन्त्रस्वराणामुच्चारणविधानमपि कृतम्, तदनुसारेण प्राक्स्विष्टकृतो मन्त्रा उच्चस्वरेणैव प्रयोक्तव्याः, स्विष्टकृतमारभ्य आ इडाया मध्यमस्वरेण, इडातः प्रारभ्य यज्ञसमाप्तिपर्यन्तं सर्वे मन्त्रा उत्तमस्वरेणैव—उपांशुप्रयोगेणैव प्रयोक्तव्याः।[4] आपस्तम्बेन तु स्वरोच्चारणविधानं परिभाषासूत्रेषु कृतम्। एतच्च पूर्वमेवाभिहितम्, तत्रैव द्रष्टव्यम्।

का० क० ततो यजमानो होतारं सम्बोधयति संतन्वन्निव मेऽनुब्रूहीति, यजमानो भूमिं पादाङ्गुष्ठाभ्यामाक्रम्य प्रपीड्य च द्वेष्यं प्रति-

1. आ० श्रौ० (२।३।११।३)
2. एतद् होतुरामन्त्रणं शांखायनश्रौतसूत्राच्च ज्ञायते (शा० श्रौ० १।४।४)
3. का० श्रौ० (३।१), आ० श्रौ० (२।२।१२।१)
4. का० श्रौ० (३।१।३-५)

ब्रूते । 'वेदेदमहममुमवबाधे' यावत्सामिधीवाचनं[1] होत्रा क्रियते, तावतिथं यजमानो 'द्वेष्यमवबाधे' इति नामधेयपूर्वकमुच्चारयति ।[2] उ० क० अत्र होता पञ्चदशसामिधेनीरन्वाह, तथा हि प्रतिप्रणवममध्वर्युः समिधमादधाति ।[3] आपस्तम्बमते तु 'सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते प्रतिह्रसमानासु प्रकृतिवत् ।'[4] तथा चोभयोः कल्पयोरेकवर्जं, सर्वमिध्मशेषमादधाति 'समिद्ध अग्ने' इति ।[5]

**आघारः**—उ० क० सामिधेन्यनुवाचनान्ते अध्वर्युर्वेदेनाहवनीयत्रिर्वाजयित्वा, आज्यं च गृहीत्वा आहवनीये ऋजुं दीर्घं सततं तूष्णीमेव पूर्वमाघारमाघारयति ।[6] ततोऽध्वर्युः राग्नीध्रं प्रतिप्रेषमाह—'अग्नीमग्नीत्संमृड्ढीति' ।[7] अत्र चाहवनीयस्य त्रिकृत्वः सम्मार्जने उ० कल्पयोः समानो मन्त्रः—'अग्ने वाजजिदिति' (का० श्रौ० ३।१।१३, आ० श्रौ० २।३।१३।१)। ततोऽध्वर्युणा जुह्वादीनां ग्रहणं क्रियते, आपस्तम्बमते आघारादन्यत्र जुह्वादीनां ग्रहणं तूष्णीकेणाध्वर्युणा कर्त्तव्यमन्यत्तु मन्त्रपूर्वकमेव हि ।'[8]

**उत्तराघारम्**—यज्ञायुधग्रहणानन्तरमध्वर्युरुत्तरमाघारमाघारयति, तत्र का० क० 'इत इन्दु' इति (शु० य० २।८–९) मन्त्रैराहुतिं जुहोत्यध्वर्युः ।[9] आ० क० तु० विस्तरेण हि उत्तराघारविधानं दृश्यते। तत्र 'समारभ्योर्ध्वो अध्वर' इति मन्त्रेण आघारो भवति। तेनाचार्येण द्वेष्यादीनामाधारणे च बहुलविधानं प्रपञ्चितम् (द्रष्टव्यम् आ० श्रौ० २।४।१४), यथा द्वेष्यस्याघारणमध्वर्युर्मध्ये विच्छिन्द्यात्, एवमादीनि विधानानि तत्र परिलक्षितानि। कात्यायनेन तु नैतद्विस्तीर्यते।

---

1. सामिधेनीयव्याख्यानं होत्रकल्पे द्रष्टव्यम् (लेखकः)।
2. का० श्रौ० (३।१।९)
3. का० श्रौ० (३।१।१०), आ० श्रौ० (२।४।१२।४)
4. आ० श्रौ० (२।४।१२।५)
5. का० श्रौ० (३।१।११), आ० श्रौ० (२।४।१२।६)
6. का० श्रौ० (३।१।१२), आ० श्रौ० (२।४।१२।७)
7. का० श्रौ० (३।१।१२), आ० श्रौ० (२।४।१२।१०)
8. का० श्रौ० (३।१।१६), आ० श्रौ० (२।४।१३।२-३)
9. का० श्रौ० (३।२।१)

आघारान्ते उ० क० जुह्वादीनां समञ्जनकर्म विधीयते। तत्र का० क० मन्त्रः - 'सं० ज्योतिषेति' (शु० अ० २।६), आ० क० मन्त्रः 'मखस्य शिरोऽसीति'।[1]

**होतृवरणम्**—प्रवरवरणात्प्राग् आश्रवणादि कर्म भवति। ऋत्विजामुपवेशनानन्तरमध्वर्युः—प्रवरमाश्रावयति, तदेवाश्रावणमुच्यते, तत आग्नीध्रः प्रैषस्योत्तरं ददाति—'अस्तु श्रौषडिति', तदेव प्रत्याश्रावणमुच्यते। अत्र श्रौषडिति पदस्यार्थः—'सर्वं सुष्ठु भविष्यति इति अतो यज्ञमारभताम्', 'यज यज' चाध्वर्युः कथयति, ततो 'ये यजामहे' इति वाक्येन सहमतिं प्रदर्शयति, एषा चाभिगूर्तिरुच्यते।[2] यज्ञात्पूर्वं याज्या पुरोऽनुवाक्यामन्त्रा होत्रा उच्चार्यन्ते, एष सर्वो विषयो होत्रकल्पे चोच्यते। तस्मिन्नेव प्रकरणे सर्वं व्याख्यातम्। तत्रैव द्रष्टव्यम्।

उ० क० यजमानोऽनेन मन्त्रेण ऊर्ध्वज्ञुमासीनं होतारं प्रवृणीते—'अग्निदेवो होता देवान् यक्षद्विद्वांश्चिकित्वान् मनुष्वद् भरतवदमुवदमुवदिति'[3] अत्र यजमानः प्रवरकाण्डोक्तान् स्ववंश्यान् ऋषीन् अमुवदमुवदिति नामभिः कीर्तयति। एतदेव प्रवरवरणमुच्यते। यस्य यजमानस्य ये ऋषयो गोत्रप्रवर्तका मन्त्रकृतश्च तानेव स कथयति नान्यान्। उ० क० यजमानः त्रीन् प्रवरान् प्रवृणीते।[4] का० क० तु यजमानस्य यावन्तो वंशप्रवर्तका मन्त्रकृत ऋषयः, तान् सर्वानेव कथयति न त्रीण्येव, इति। अथवा राजायजमानः पुरोहितस्यार्षेयाणि वृणीते विकल्पेन, 'क्षत्रियवैश्ययोस्तु पुरोहितार्षेयवरणं नित्यं समामनन्ति कात्यायनाचार्याः। अथवा सर्वेषां वर्णानां 'मनुवदिति' वा भवति।[5] आ० क० अपि वैकं द्वे त्रीन् पञ्च वा मन्त्रकृत ऋषीन् वृणीते यजमानः, किन्तु तन्मते न चतुरो वृणीते न पञ्चातिवृणीते।[6] कात्यायनविधानवत्

1. का० श्रौ० (३।२।२), आ० श्रौ० (२।४।१४।११)
2. का० श्रौ० (३।२।३–४), आ० श्रौ० (२।४।१५।३-४)—'उतो तेषामभिगूर्तिर्न इन्वतु' (ऋग्वेदे १।१६२।६)
3. का० श्रौ० (३।२।७), आ० श्रौ० (२।५।१६।५)
4. का० श्रौ० (३।२।७), आ० श्रौ० (२।५।१६।६)
5. का० श्रौ० (३।२।६-११)
6. आ० श्रौ० (२।५।१६।७-८)

पुरोहितार्षेयवरणं मनुवरणं च आपस्तम्बेनापि विहितम्।[1] अत्र यज्ञेषु आर्षेयवरणस्य कारणं सारेण विचारणीयम्। अस्यैतिह्ये विचार्यमाणे वयं निश्चिनुमो यत्पुराकाले त्रेतादिषु युगेषु[2] ये मन्त्रकृत ऋषय आसंस्त एव गोत्रप्रवर्तका अपि अभूवन्, वंशपरम्परया त एव प्रवरा यज्ञं कुर्वन्ति कारयन्ति स्म च। उत्तरेषु युगेषु मन्त्रकृतामृषीणां परम्परा प्रायेण विच्छिन्ना अभवत् तथापि परम्परया सूत्रकारैस्तेषां प्रवराणां मन्त्रकृतां नाम्नामुच्चारणस्य नियमः पूर्ववत् परिपालितः। प्रायेण पुराकाले पुरोहिता अपि वंशैस्सह निश्चिता एव सम्बध्यन्ते स्म, यथा वासिष्ठाः पुरोहिता इक्ष्वाकुवंशजानां प्रसिद्धाश्चैतिह्ये, एवं भार्गवाः पुरोहिता दैत्यानां दानवानां च निश्चिता आसन्। इदानीमपि भारते वर्षे वंशपरम्परया पुरोहिता भवन्ति, एभिः कारणैर्यज्ञेषु निश्चितस्य पुरोहितस्य तस्यार्षेयस्य च प्रवरणं भवति।

ततो यजमान उ० क० अनेन मन्त्रेण होतुर्नाम गृह्णाति—'ब्रह्मण्वदा च वक्षदब्राह्मणा अस्य यज्ञस्य प्रावितारोऽसौ मानुष'[3] इति। अस्मिन् मन्त्रे अग्निदेवो हि होतृरूपेण व्रियते, तथापि मानुषो होता अपि नामधेयेन चात्र कीर्त्यते। अतस्तयोर्मानुषदैव्ययोः संहत्यकारित्वेन यज्ञः सम्पूर्यते, इति ज्ञेयम्। उ० क० दैव्यस्य होतुरुपांशु नामग्रहणम, मानुषस्य तूच्चैर्नामग्रहणं विधीयते।[4] होतृवरणानन्तरं सर्वे ऋत्विजो यथास्थानमुपविशन्ति।[5]

**प्रयाजाः**—दर्शपूर्णमासयोरारम्भे या पञ्चाहुतयो हूयन्ते ताः प्रयाजा[6] उच्यन्ते। यज्ञान्ते या तिस्र आहुतयो भवन्ति ते अनुयाजा

---

1. आ० श्रौ० (२।५।१६।१०,१२)
2. 'तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि' मु० उ० १।२।१)
3. का० श्रौ० (३।२।१२), आ० श्रौ० (२।५।१६।२१)
4. का० श्रौ० (३।२।१३), आ० श्रौ० (२।५।१६।१४)
5. का० श्रौ० (३।२।१४)
6. आ० श्रौ०—शतपथे चैषां प्रयाजानां नामधेयानि—समित्तनूनपात्बर्हिरिडास्वाहाकाराश्च।'

आ० श्रौ० (२।५।१७।२), श० ब्रा० (१।५।३।१-१३)।

इति परिभाष्यन्ते, तौ चोभौ (अनुयाजप्रयाजौ) यज्ञाङ्गे[1] कथ्येते। का० क० अध्वर्यु: पञ्चप्रयाजेषु प्रथमं (समिधम्) समिद्धतमे वह्नि-प्रदेशे जुहोति। शेषान् चतुरो 'यज यज' इति प्रेषानन्तरं यजति।[2] आ० क० च अध्वर्यु घृतवति शब्दे तूक्ते जुहूपभृतावादाय पञ्च प्रयाजान् यजति, तत्र प्रतिदिशं वा समिध: पुरस्तात्तनूनपातं दक्षिणत इडं पश्चाद्बर्हिरुत्तरत: स्वाहाकारं मध्ये च यजति। अथवा एकस्मिन् प्रज्वलिततमे स्थाने जुहोति।[3] उ० क० अध्वर्युस्तिष्ठन् ध्रुव इव अविचलित: प्रयाजान् जुहोत्यथवा विकल्पे, अभिक्रम्याभिक्रम्य वा जुहोति।[4]

**आज्यभागौ**—उ० क० अत: परमध्वर्युराज्यभागाभ्यां चरति—आग्नेयेन सौम्येन च।[5] का० क० सवषट्कारास्वाहुतिषु चतुरवत्तं भवति[6], किन्त्वापस्तम्बसम्प्रदाये जमदग्नीनामन्येषां च पञ्चावत्तं सर्वत्र सवषट्कारप्रदानेषु।[7] तत उ० क० पुरोडाशमवद्याध्वर्युराप्यायनं करोति।[8] ततो याज्याया: पश्चात् याग: प्रारभ्यते।

**प्रधानभाग:**—उ० कल्पयोराग्नेयमाज्यभागमाहवनीयस्योत्तरपूर्वार्धे ईशानकोणे जुहोत्यध्वर्यु:[9] तथा च स सौम्यभागमाहवनीयस्याग्नेयकोणे जुहोति।[10] तावुभौ भागौ समिद्धतमे अग्नौ च हूयेते (आ० श्रौ० २।६।१८।८, का० श्रौ० ३।३।२२)। उ० क० अध्वर्यु: प्रधानयागं तूपांशु अग्नीषोमाभ्यां यजति। आ० क० उपांशुयाग: पौर्णमास्यां वैष्णवोऽग्नीषोमीय: प्राजापत्यो वा भवन्ति (आ० श्रौ० २।६।१८।२३), यजमानो

1. 'प्रयाजानुयाजौ यज्ञाङ्गे (अष्टा० ७।३।६२), 'त्रयोऽनुयाजाश्चत्वार: पत्नीसंयाजा:' (श० ब्रा० ११।४।१)
2. का० श्रौ० (३।२।१७-१९)
3. आ० श्रौ० (२।५।१७।१-३)
4. का० श्रौ० (३।२।२०।२१), आ० श्रौ० (२।५।१७।५)
5. का० श्रौ० (३।३।१०), आ० श्रौ० (२।६।१८।१)
6. का० श्रौ० (३।३।११), आ० श्रौ० (२।६।१८।२)
7. आ० श्रौ० (२।६।१८।१)
8. का० श्रौ० (३।३।१२), आ० श्रौ० (२।६।१८।४)
9. का० श्रौ० (३।३।२०।२१)
10. आ० श्रौ० (२।६।१८।६-७)

विभूतिमिच्छन् विष्णुं यजेत (आ० श्रौ० २।६।८।२५), का० क० च विष्णुर्वामावस्यायामुपांशुयागस्य देवता भवति (का० श्रौ० ३।३।२५) आ० क० अध्वर्यु र्भ्रातृव्यवतो यजमानस्य त्वग्नीषोमौ यजेत, ततोऽध्वर्यु: स्रुवेण पार्वणौ होमौ जुहोति–'ऋषभं वाजिनं वयमित्यादि', (आ० श्रौ० २।६।१६।१,५)। तत आपस्तम्बो नारिष्ठहोमादीन् प्रपञ्चयति, कात्यायनश्रौतसूत्रे नैतान् पश्यामः।[1]

**स्विष्टकृद्यागः**–उ० क० ततोऽध्वर्यु र्हविषामुत्तरार्धादेकवारं स्विष्टकृतेऽवद्यति, तत्र जमदग्नीनां द्वे अवदाने, इतरेषां त्वकैम्, ततो होमो भवति।[2] आपस्तम्बानुसारेण दैवतसौविष्टकृतेऽचतुर्धाकारिणकानामुत्तरमुत्तरं ज्यायो अवदानं भवति।[3] आपस्तम्बस्य मते 'इडामेके पूर्वं समामनन्ति प्राशित्रमेके[4] इति। तथाप्युभयोः कल्पयोः पूर्वं प्राशित्रविधानं कृतम्। अध्वर्युः संचरमद्भिरभ्युक्ष्य प्राशित्रहरणे प्राशित्रं ब्रह्मणो भागं यवमात्रं पिप्पलमात्रं वा द्विरवद्यति।[5]

**इडा**—अध्वर्युः प्राशित्रं ब्रह्मणे दत्त्वा इडापात्रमुपस्तीर्य सर्वेभ्यो हविभ्यश्चतुरवत्तां पञ्चावत्तां वा इडां समवद्यति।[6] तां यथाभागं कृत्वा सोऽध्वर्युः सर्वप्रथमं होत्रे तद्भागं प्रयच्छति, ततो होता अङ्गुलपर्वणी अनक्ति।[7] ततोऽध्वर्यु रवान्तरेडां होतुर्हस्ते आदधाति। ततः सर्वे ऋत्विग्यजमाना उपहूयमानामिडामन्वारभन्ते।[8] आ० क० त्वध्वर्यु र्यजमानश्चोभौ एव अन्वारभेते।[9] का० क० यजमान इडोपहूतेत्युच्यमान आग्नेयं पुराडाशं चतुर्धा कृत्वा मन्त्रान्ते बर्हिषदं करोति, तांश्चतुरो भागान् चतुर्भ्य ऋत्विग्भ्यः प्रयच्छति, ततो 'द्यावापृथिव्योरुपाह्वाने' यजमानो अग्नीध्रे षडवत्तं ददाति, तत्षडवत्तमग्नीत्प्राश्नाति, ततः सर्वे उपहूतामिडां भक्षयन्ति।[10] एवं च प्रायेण आ० क० विधीयते।

1. आ० श्रौ० (२।६।१६।६, इत्यादि)
2. का० श्रौ० (३।३ २६-२७), आ० श्रौ० (२।६।२०।३)
3. आ० श्रौ० (२।६।२०।४)
4. आ० श्रौ० (३।१।१।१)
5. का० श्रौ० (३।४।१), आ० श्रौ० (३।१।१।२)
6. का० श्रौ० (३।४।६), आ० श्रौ० (३।१।१।६)
7. का० श्रौ० (३।४।८-६), आ० श्रौ० (३।१।२।१,३)
8. का० श्रौ० (३।४।१०-१२)
9. आ० श्रौ० (३।१।२।५,८)
10. का० श्रौ० (३।४।१३-२२)

तत्र इडां प्राश्य सर्वे ऋत्विग्यजमाना वाग्यता आसत आमार्जनात्। चतुर्धाकरणादिकं च तत्र कल्पे पूर्ववत् भवति।[1] ततोऽस्मिन् कल्पे इडाभक्षणानन्तरं दक्षिणाग्नावन्वाहार्यपचनं महान्तमपरिमितमोदनं भवति, विकल्पेन क्षीरो विधीयते।[2] का० क० तु भक्षणानन्तरमुपविष्टा ऋत्विजः पवित्रयोरेव स्थिताभिरद्भिरात्मानं शोधयन्ति मन्त्रेणानेन—'सुमित्रिया न आप' इति (शु० य० ६।२२)। ततोऽत्र कल्पे अन्वाहार्यपचनं पच्यते, तं वेद्यां निधायाध्वर्युरालभते–'प्रजापते भागोऽस्यूर्जस्वानिति' (का० श्रौ० ३।४।३०) एषोऽन्वाहार्यो हि ऋत्विजां दक्षिणा च भवति।[3]

**अनुयाजाः**—उ० क० प्रैषानन्तरमाग्नीध्रो अनुयाजार्थं पुनः समिध आदधाति, ब्रह्मणा अनुज्ञातोऽध्वर्युरौपभृतमाज्यं जुह्वां समानीय त्रिभिरनुयाजैश्चरति।[4] का० क० त्वध्वर्युस्त्रीननुयाजान् समिधि प्रतीच्या जुहोति[5], आ० क० स पूर्वार्धे प्रथमं समिधि जुहोति, मध्ये द्वितीयं प्राञ्चमुत्तमम्।[6] आ० क० त्वध्वर्युः प्रत्याक्रम्यायतेन स्रुचौ सादयित्वा वाजवतीभ्यामृग्भ्यां स्रुचौ व्यूहति, उद्ग्राभं चेति जुहूमुद्यच्छति उपभृतं नियच्छति।[7]

**सूक्तवाकः**—उभयोराचार्ययोर्मतेनाध्वर्युराश्राव्य प्रत्याश्रावितः सम्प्रेष्यति—'इषिता दैव्या होतारा भद्रवाचाय मानुषस्सूक्तवाकाय सूक्ता ब्रूहीति'[8] उ० क० अध्वर्युर्विधृतीस्थाने धृत्वा प्रस्तरमग्रमध्यमूलेष्वनक्ति, उपभृतं च मध्ये, जुहूमग्रे, ध्रुवायाश्च मूले अनक्ति।[9] तथा चाध्वर्युः 'मरुतामिति' मन्त्रेण प्रस्तरमाहवनीये प्रहरति।[10] का० क०

1. आ० श्रौ० (३।१।३)
2. आ० श्रौ० (३।१।३।१२-१३)
3. का० श्रौ० (३।४।३१)
4. का० श्रौ० (३।५।५-६), आ० श्रौ० (३।१।५।१)
5. का० श्रौ० (३।५।१०)
6. आ० श्रौ० (३।१।५।२)
7. आ० श्रौ० (३।१।३,५)
8. का० श्रौ० (३।६।१), आ० श्रौ० (३।१।६।५)
9. का० श्रौ० (३।६।४-७) आ० श्रौ० (३।१।६।१-४)
10. का० श्रौ० (३।६।८), आ० श्रौ० (३।१।६।६)

कृतप्रवासे यजमाने तस्य भागं च जुहोति, अनेन मन्त्रेण च स्वाहाकरोति—'अहं त्वय्यस्मि मदसि त्वय्येतन्मम त्वं योनिस्तव योनिरस्मि ममैव सन्दिवि । देवेष्वधिपुत्र: पित्र्ये लोककृज्जातवेद: स्वाहेति' ।[1] आ० क० त्वत्र स्वाहाकारं न भवति ।[2]

**शंयुवाक:**—उ० क० आग्नीध्रो अध्वर्युं प्रेष्यति—स्वगा दैव्या होतृभ्य: स्वस्तिर्मानुषेभ्य: शंयो ब्रूहीति, तथा हि सोऽध्वर्यु: शंयुवाकं प्रोच्य परिधीन् आहवनीये क्षिपति ।[3] तदनन्तरमुभयोराचार्ययोर्मते संस्रावहोमो भवति ।[4] आ० क० त्वत्रैव ऋत्विजो हविश्शेषान् भक्षयन्ति ।[5] का० क० त्वत्र यजमानो 'यज्ञ नमश्चेति' मन्त्रेण वेदिमालभते' ।[6]

**पत्नीसंयाजा**:—उ० क० अध्वर्युश्चान्ये पत्नीसंयाजार्थं गार्हपत्यं गच्छन्ति । अध्वर्युस्तु पूर्वदक्षिणेन पूर्वेण वा मार्गेण तत्र गच्छति ।[7] तथा चोभयो: कल्पयोरुध्वर्ज्ञव आसीना ऋत्विज: पत्नीसंयाजान् उपांशु चरन्ति ।[8] आ० क० उच्चैरुपांशुर्वा चरणं विधीयते ।[9] अत्र कर्मणि चतस्रो देवता इज्यन्ते—सोम:, त्वष्टा, देवपत्न्य:, गार्हपत्याग्निश्च ।[10] आ० क० सोमत्वष्टारौ आज्येन, देवपत्न्यो जाघन्यात्र (पशुपुच्छेन) इज्यन्ते, आपस्तम्बेन विकल्पोऽप्युक्त: यथागृहीतेनाज्येन वा पत्नीस्संयाजयन्ति[11] आपस्तम्बसम्प्रदाये इमास्तिस्रो देवपत्न्यश्चेज्यन्ते,

---

1. का० श्रौ० (३।६।१०)
2. आ० श्रौ० (३।१।६।७)
3. का० श्रौ० (३।६।१०), आ० श्रौ० (३।२।७।१०)
4. का० श्रौ० (३।६।१८), आ० श्रौ० (३।२।७।१३)
5. आ० श्रौ० (३।२।७।१४)
6. का० श्रौ० (३।६-२१)
7. का० श्रौ० (३।७।१-३), आ० श्रौ० (३।३।८।२)
8. का० श्रौ० (३।७।६)
9. आ० श्रौ० (३।३।८।८)
10. 'यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति' (का० श्रौ० ३।७।१०)
11. आ० श्रौ० (३।३।८।१०)

राका सिनीवाली कुहूश्च ।[1]

**पिष्टलेपफलीकरणहोमौ**—तत उ० क० अङ्गुल्यादीनां प्रक्षालनार्थं पिष्टलेपफलीकरणहोमौ विधीयेते । अनयोर्होमयोर्विश्वेदेवाः[2] इज्यन्ते, उ० क० अत्र सरस्वती देवता विशेषेण इज्यते । (का० श्रौ० ३।७।१८, आ० श्रौ० ३।३।१०।२) ।

**वेदमोक्षः**—का० क० होमान्ते पत्नी वेदं प्रमुञ्चति 'वेदोऽसीति' उक्त्वा (का० श्रौ० ३।८।१), आ० क० 'वेदोऽसीति' वेदं होता पत्न्या उपस्थे त्रिः प्रास्यति, तस्या योक्त्रपाशं च विमुञ्जते (आ० श्रौ० ३।३।१०।३,६) । उ० क० होता वेदं गार्हपत्यस्योत्तरदेशादारभ्य वेदिपर्यन्तं स्तृणाति ।[3]

**समिष्टयजुः**—आ० क० योक्त्रपाशविमोचनानन्तरं सर्वप्रायश्चित्ताहुतयो हूयन्ते ।[4] तासां प्रायश्चित्ताहुतीनां देवाः—ब्रह्म, यज्ञः, मरुतः ऋभव इत्यादयो भवन्ति । (आ० श्रौ० ३।४।१) उ० क० अध्वर्युरन्तर्वेद्यां तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति ।[5] एता नव समिष्टयजुषामाहुतयो भवन्ति, (द्रष्टव्यम् श० ब्रा० ४।४।४।१) । का० क० त्वत्राध्वर्युर्यजमानस्य मुखप्रक्षालानार्थं पूर्णपात्रं निनयति । यजमानोऽञ्जलिना 'स वर्चसेति' (शु० यजु० २।२४) मन्त्रेण प्रतिगृह्णाति, मुखं च विमृष्टे । (का० श्रौ० ३।८।८।१०) आपस्तम्बेन तु पत्नीमुखप्रक्षालनमेव चोक्तं न यजमानस्य ।[6]

**विष्णुक्रमाः**—उ० क० यजमानो विष्णुक्रमसंज्ञकांस्त्रीन् क्रमान् क्रमते ।[7] आ० क० त्वत्र विष्णुक्रमात् पूर्वं कपालविमोचनं कर्म विहि-

---

1. 'राकां पुत्रकामो यजेत, सिनीवालीं पशुकामः, कुहूं पुष्टिकामः' (आ० श्रौ० ३।३।६।४)
2. 'विश्वेदेवा सर्वे देवाः' (निरु० १२।३६)
3. का० श्रौ० (३।८।३), आ० श्रौ० (३।३।१०।५)
4. आ० श्रौ० (३।३।१०।१)
5. का० श्रौ० (३।८।४), आ० श्रौ० (३।४।१३।२)
6. आ० श्रौ० (३।३।१०।६)
7. का० श्रौ० (३।८।११), आ० श्रौ० (४।४।१४।६)

तम् ।[1] का० क० त्रीन् क्रमानेव यजमानः प्रतिमन्त्रं क्रामति—
'दिवि विष्णुरिति' प्रथमं क्रमम्,
'अन्तरिक्षे विष्णुरिति' द्वितीयं क्रमम्
'पृथिव्यां विष्णुरिति' तृतीयं क्रमम्

अथवा स व्युत्क्रमेण (पृथिव्याम्, अन्तरिक्षे, दिवीति), अवरोह-क्रमेण जपति ।[2] आ० क० तु यजमानो 'विष्णोः क्रमोऽसीति' चतुरो विष्णुक्रमान् प्राचः क्रामति ।[3] किन्तु सर्वेषां शास्त्राणां मते विष्णोस्त्रय एव पादाः (क्रमाः) भवन्ति, एष चतुर्थः पादः कुत आगतः, ततः कथमाचार्येण एतद्विहितम् । तत्र विष्णुक्रमान्यत्र विशिष्टा मन्त्राः समाम्नाताः । धूर्तस्वामिनो मते 'तूष्णीमवस्थाय चतुर्थं मन्त्रं यजमानो जपेत्, अथवा स तृतीयं क्रमं क्रान्त्वा तत्रैव अवस्थाप्य चतुर्थं मन्त्रं जपति, न तेन क्राम्यतीत्यर्थः ।'[4]

का० क० यजमानस्तु सूर्यप्रदक्षिणं करोति, 'शतं हिमा' इति गार्हपत्यमुपस्थाय पुनः सूर्यस्य प्रदशिक्षणां करोति ।[5] ततो यजमानः प्राङ्गच्छन् जपति—'उरु विष्णो' इति (शु० य० ५।३८) । ततो यजमानः पुत्रनामग्रहणमन्त्रं जपति—'ततोऽसि तन्तुरसीति' तूष्णीमाहवनीयमुप-स्थाय स व्रतं च विसृजते, ततो यजमानो ब्राह्मणतर्पणं करोति ।[6]

आ० क० यजमानः क्रमेण विष्णुक्रमान् विष्णवतिक्रमान् च क्रामति, अतिमोक्षमन्त्रांश्च जपति, कात्यायनविधानवदत्रापि यजमानः सूर्यप्रद-क्षिणं करोति गार्हपत्यं चाहवनीयं चोपतिष्ठते, तथा हि पूर्ववच्च मन्त्रपूर्वकं पुत्रस्य नाम गृह्णाति—'ज्योतिषे तन्तवे त्वाऽसावनु मा' इति' मन्त्रपाठस्त्वत्र भिन्नः ।[7]

---

1. 'यानि घर्मे कपालानि' इति चतुष्पद्यर्चा कपालानि विमुक्तसंख्ययो-द्वासयति' (आ० आ० ३।४।१४।४)
2. का० श्रौ० (२।८।११-१२)
3. आ० श्रौ० (४।४।१४।७)
4. आ० श्रौ० (४।४।१४।६), भाष्यम्, पृ० ४२२
5. श० ब्रा० चैतत् पुनः प्रदक्षिणस्य विधानमस्ति (१।६।३।२०), (का० श्रौ० (३।८।२१-२४)
6. का० श्रौ० (३।८।२५-३१)
7. आ० श्रौ० (४।४।१४।६,१०; ४।४।१५।५; ४।४।१६।४)

## पिण्डपितृयज्ञः

**पिण्डपितृयज्ञपदार्थः**—समासे अत्र पदत्रयं विद्यते—पिण्डः, पितृ, यज्ञश्च। पिण्डैस्साध्यः पितृयज्ञः पिण्डपितृयज्ञः । यज्ञशब्दस्त्वन्यत्र व्याख्यातः। अत्र पिण्डास्तु तण्डुलानां भवन्ति। पितृपितामहप्रपितामहाश्चात्र 'पितर' इत्युच्यन्ते। पिण्डपितृयज्ञे त्वेषां त्रयाणां प्रतिरूपकास्त्रयः पिण्डाः क्रियन्ते, तस्मात् त एव पितरो भवन्ति।

**इतिहासपुराणेषु पिण्डपितृयज्ञस्यैतिह्यम्**—इतिहासपुराणेषु च पिण्डपितृयज्ञस्येतिवृत्तमुपलभ्यते तेनेतिवृत्तेन वयं पिण्डपितृयज्ञस्य प्रारम्भं प्राचीनतां चावगच्छामः, तस्मात्तद्वृत्तमत्र सारेण संगृह्यते। तत्र महाभारते शान्तिपर्वणि नारायणाख्ये महत्युपाख्याने नारदनारायणयोः संवादे कथितम्—

इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम्।
गोविन्द उज्जहाराशु वाराहं रूपमास्थितः॥

(म० शा० ३४५।१२)

पुराणमनेन तेन वाराहमूर्तिधरेण भगवता उर्वी समुद्धृत्य तस्यां पिण्डपितृयज्ञः प्रवर्तितः--

प्राप्ते चाह्निककाले तु मध्यदेशगते रवौ।
दंष्ट्राविलग्नांस्त्रीन् पिण्डान् विधाय सहसा प्रभुः॥
स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद।
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि॥
संकल्पयित्वा त्रीन् पिण्डान् स्वेनैव विधिना प्रभुः।
आत्मगात्रोष्मसम्भूतैः स्नेहगर्भैस्तिलैरपि॥
प्रोक्ष्यापसव्यं देवेशः प्राङ्मुखः कृतवान् प्रभुः।
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम्॥
आश्रिता धरणीं पिण्डास्तस्मात् पितर एव ते।
त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे॥
पिता पितामहश्चैव तथैव प्रपितामहः।
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः॥

(महा० शा० अध्याये ३४५।२१)

हरिवंशे चैतद् वृत्तमुल्लिखितम्, कश्यपेन प्रजापतिनोत्पादिता इन्द्राय पितरं तिरश्चक्रुः। ततः क्रुद्धः प्रजापतिस्तान् शशाप–'यूयं मूढा

नष्टसंज्ञा भविष्यथ' इति तथा चोक्तम्—

देवानसृजत ब्रह्मा मां यक्ष्यन्तीति भार्गव।
तमुत्सृज्य तथात्मानमयजंस्ते फलार्थिनः।।
ते शप्ता ब्रह्मणा मूढ़ा नष्टसंज्ञा दिवौकसः।
(हरिवंश पु० १।१८।२२–२३)
पुत्रांश्च परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ।।
(हरिवंश पु० १।१८।२५)

तथा हि वरुणादीनामादित्यानां पुत्रा भृगुवसिष्ठविश्वामित्रादयो वेदर्षयस्तान् देवानध्यापयामास[1]—'यद्ध वा असुरैर्महासंग्रामं संयेते तद्ध वेदान् निराचकार, तान् ह विश्वामित्राद् अधिजगे। ततो हैव कौशिक ऊचे' (जै० ब्रा० २।७९)। एवं पुराणेभ्यो ज्ञायते यद्देवानां पुत्रा ऋषयः कालान्तरे मूढ़ान् इन्द्रादीन् देवानध्यायययामासुः तस्मात्ते पुत्रा देवानां पितरश्चाभवन्—

'ततस्ते मन्त्रदाः पुत्राः पितृत्वमुपपेदिरे।
पुत्राश्च पितरश्चैव परस्परमपूजयन्।।'[2]
एते सप्तर्षयः पितर उच्यन्ते—
'क्रतुर्वसिष्ठः पुलहः पुलस्त्योऽत्रिस्तथाङ्गिराः।
मरीचिस्तु तथा धीमान् देवगन्धर्वसेविताः।।'[3]

**पितृपूजा श्राद्धश्च**—केषांचिद् विदुषां मते पिण्डपितृयज्ञो हि श्राद्धस्यापरविधिरस्ति। यथा गोभिलगृह्यसूत्रे एवं वर्णितम्।[4] श्राद्धश्च वैवस्वतेन मनुना प्रवर्तितः, तेन स श्राद्धदेव उच्यते—'अथैतन्मनुः श्राद्ध-शब्दं कर्म प्रोवाच प्रजानिश्श्रेयसाय।[5]

---

1. 'अध्यापयामास पितृञ्शिशुराङ्गिरसः कविः।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान्।। (मनुस्मृतौ २।१५१)
2. म० शान्ति (अ० ३४५।९)
3. हरि० पु० (१७।१५)
4. "Gobhil seems to look upon the Pind Pitra Yanjya is itself a Sradha." (D. R. in India, p. 105).
5. आप० धर्म० (२।७।१।१)–'प्रवर्तयति श्राद्धानि नष्टे धर्मे प्रजापतिः।
तस्मादेवं स्वधर्मेण श्राद्धदेवं वदन्ति वै।।'
(हरि० पु० १।१८।७०-७१)

**पिण्डपितृयज्ञस्य कालः**—आपस्तम्बेन तु प्रथमे अध्याये पिण्डपितृयज्ञो दर्शप्रकरणमध्ये हि निरूप्यते, यदा कात्यायनस्तं चतुर्थेऽध्याये दर्शात्प्राङ् निरूपितवान्। कात्यायनस्य भाष्यकाराणां मते च पिण्डपितृयज्ञो दर्शस्य प्राक्कालीनं कर्म भवति, तथा चाह—'अधुना दर्शस्यानुविधानं करिष्यंस्ततः प्राक्कालीनं पिण्डपितृयज्ञमनुविदधाति।[1] उभयोराचार्ययोर्मते यदहश्चन्द्रो न दृश्यते तदा तस्मिन्नहनि आमावस्यायामपराह्णे पिण्डपितृयज्ञोऽनुष्ठीयते। तथा हि श्रूयते च—'पूर्वाह्णो वै देवानां मध्यदिनो मनुष्याणापराह्णः पितृणामिति (श० ब्रा० २।४।२।८)। आ० क० यदा सूर्यस्य तापो वृक्षाणामुपर्येव न पृथिव्याम्, तस्मिन् दिनस्य पश्चिमे भागे चायं यज्ञः कर्तव्यः[2], तथा चास्मिन् यज्ञे पाकादयो दक्षिणाग्नौ एव सम्पच्यन्ते, होमोऽपि दक्षिणाग्नौ भवति।

**यज्ञस्य सम्भाराः**—उ० क० अत्रापि पौर्णमासवत् दर्भाणां परिस्तरणं पात्रासादनं च भवतः। उभयोर्मते चैतानि पात्राणि एकैकशो भवन्ति—स्फ्यं मेक्षणं कृष्णाजिनमुलूखलं मुसलं शूर्पमाज्यस्थाली, चरुस्थाली, अन्यानि च अर्थवन्ति पात्राणि। उ० क० चात्र पूर्ववत् सकृत्फलीकरणादिकं कर्म भवति, अध्वर्युस्तान् तण्डुलान् अन्वाहार्यपचनार्थं दक्षिणाग्नौ पचति।[3] आपस्तम्बेनात्र बर्हिषा वेदिस्तरणादिकं चोक्तम्।[4] का० क० अध्वर्युः सारतण्डुलमपूर्णं श्रपयित्वाभिधयोद्वास्य मेक्षणेन जुहोति—'अग्नये' इति', 'सोमाय' इति (शु० २।२९)। ततो स मेक्षणं दक्षिणाग्नौ प्रास्य स्फ्येन लेखां करोति 'अपहता असुरा' इति। उल्मुकं च रेखाया दक्षिणप्रदेशे निदधाति—'ये रूपाणीति'[5] आ० क० अध्वर्युरुपवीती उत्पूतेन नवनीतेनानुत्पूतेन वा सर्पिषा स्थालीपाकमभिघाय मेक्षणमासाद्य स्थालीपाकमासादयति, तत ऊर्ध्वं भूत्वा स दक्षिणग्नौ जुहोति—'सोमाय पितृपीताय स्वधा नम' इति प्रथमाहुतिः, यमायाङ्गिरस्वते पितृमते स्वधा नम' इति द्वितीयाहुतिः, 'अग्नये कव्यवाहनाय नम' इति तृतीयाहुतिः। आपस्तम्बस्त्वत्र परमतेनाह—

1. का० श्रौ० भा० (पृ० २८८)
2. आ० श्रौ० भाष्ये, पृ० ५९
3. का० श्रौ० (४।१।७), आ० श्रौ० (१।३।७।१)
4. आ० श्रौ० (१।३।७।१)
5. का० श्रौ० (४।१।७-९)

'न यमाय जुहोतीत्येके' ।[1] एतत्तु अत्रैतिह्यपद्धत्या विचारणीयम् तदुक्तमितिहासे—'यमो वैवस्वतो राजेत्याह तस्य पितरो विश:' (श० ब्रा० १३।४।३।६) 'वैवस्वतं पितॄणां च यमं राज्येऽभ्यषेचयत्' (वायुपु० ७०।८)। पं० भगवद्दत्तमहोदयानां मते यमो वैवस्वत: पारस्य (ईरान) देशस्य राजा आसीत् ।[2] ऐतिहासिक-दृष्टचा यमोऽस्माकं पितृस्थानीयो नास्ति—'स वाव विवस्वानादित्यो यस्य मनुश्च वैवस्वतो यमश्च। मनुरेवास्मिल्लोके यमोऽमुस्मिन् (मै० सं० १।६।१२)। तस्यादुचितमेवापस्तम्बमतम । भारते वर्षे यम: पितृस्थानीयो न भवितुमर्हति। वैवस्वतो मनुरेव भारते वर्षे 'श्राद्धकल्पं' प्रवर्तयामास, तेन स 'श्राद्धदेव' उच्यते। पितृपूजा त्वसुरेषु शाकद्वीपीयब्राह्मणेष्वधिका प्रचलिता आसीत्।

अत: प्रकृतमनुसराम:। आ० क० उल्मुकनिधानानन्तरं यजमानो प्राचीनावीती भूत्वा कर्माणि करोति, अनेन मन्त्रेण च स वेद्यां त्रीनुदकाञ्जलीन् निर्वपति—'मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहा:' ।[3] इति अत्रैवापस्तम्बेन उदकाञ्जलिसम्बन्धि वाजसनेयिनां मतमुदाहृतम् ।[4] तैत्तरीयाणां विधाने त्रय उदकाञ्जलयो भवन्ति, वाजसनेयिनां सम्प्रदाये त्रीणि पात्राणि विधीयन्ते। वाजसनेयिनामन्यतमेनाचार्येण कात्यायनेन चैवं विहितम् ।[5] कात्यायनमतेन यजमानो अपसव्येन पिण्डानादायावनेजयति ।[6] तत: उ० क० पिण्डदानमभिहितम्। का० क० मूलसमीपे छिन्नानि दर्भतृणानि रेखायास्तीर्य यथावन्निक्तं पिण्डान् ददाति यजमान: 'अमुकोऽहमिति'–'पितृभ्य: पृथिवीसद्भ्य' इति प्रथमं पिण्डं ददाति, 'स्वधा पितृभ्यो-

1. आ० श्रौ० (१।३।७।७-१०)
2. भा० वृ० इति०, प्र० भा०, पृ० २२६–३०
3. आ० श्रौ० (१।३।८।१३)
4. 'प्रसव्यं वा त्रि: परिषिञ्चति त्रीनुदयात्रान् वाजसनेयिनस्समामनन्ति' (आ० श्रौ० १।३।८।१३)
5. 'उदयात्रेणावनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यादसाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतीन् त्रीन् (का० श्रौ० ४।१।१०)
6. तत्राङ्गुष्ठमूले पितृतीर्थं स्मर्यते, तेन पितृतीर्थेन पितॄणामुद्धरणं कर्तव्यम्-'कार्यमङ्गुलिमूलेऽग्रे दैवं पित्र्यं तयोरध: (म० स्मृ० २।५६)।

ऽन्तरिक्षसद्भ्य' इति द्वितीयं पिण्डम्' स्वधा पितृभ्यो दिविसद्भ्यः, इति तृतीयपिण्डं ददाति।[1] पिण्डदाने यजमानः पित्रादीनां नाम च गृह्णाति, गोत्राज्ञाने 'काश्यप' इति प्रयोज्यः। आपस्तम्बमते शौनकमते च यदि यजमानो द्विपिता स्यादेकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेत्।[2] उ० क० 'अत्र पितर' इत्युक्त्वा उदङ्मुखो यजमानस्तिष्ठते, ततः प्रदक्षिणं कृत्वा पिण्डाभिमुखो जपति—'अमीमदन्त पितरस्सोम्या' इति, (आ० श्रौ० १।३।९।५, का० श्रौ० ४।१।१४)। का० क० यजमानो नीविं विस्रंस्य नमो वः' इति षड्भिर्मन्त्रैः षडञ्जलीन् करोति। (का० श्रौ० ४।१।१५)। ततो यजमानः प्रतिपिण्डं त्रीणि सूत्राणि मेषरोमाणि ऊर्णावस्त्रं वा पिण्डानामुपरि निदधाति। यदि यजमानः पञ्चाशत् वर्षेभ्य ऊर्ध्वं भवेत्तर्हि तस्य वक्षरोमाणि सूत्राणां स्थाने प्रतिपिण्डं प्रास्यति। ततः पिण्डानामुपरि उदकसेचनम्। ततो यजमानस्तान् पिण्डानवजिघ्रति। (का० श्रौ० ४।१।१६–२०), एवं च प्रायेण शब्दान्तरेण आपस्तम्बोऽपि विदधाति (आ० श्रौ० १।३।९, १।३।१० च)। तत्रापस्तम्बीयो मन्त्रपाठस्तु नमस्कारादिषु भिद्यते, यथा—'नमो व पितरो रसायेति', तथा च अत्र यजमानः त्रीनुदकाञ्जलीनुपनिनीय पिण्डानामञ्जनाभ्यञ्जने करोति।[3] तत उ० क० पुत्रकामा यजमानपत्नी मध्यमपिण्डं प्राश्नाति।[4] आपस्तम्बकल्पे अवशिष्टानां पिण्डानामेकं यजमानः प्राश्नाति न वा प्राश्नाति।[5] का० क० यजमानः प्रेतेभ्यो दानं च ददाति।[6] आ० क० यजमानः प्रवाहण्या पितॄन् प्रवाहवति।[7]

का० क० जीवपितृको यजमानोऽपि पिण्डपितृयज्ञे अधिक्रियते।[8] एवञ्चापस्तम्बकल्पेऽप्यस्ति, परन्तु तत्र यजमानो होमं कृत्वा निवर्तते।[9]

---

1. का० श्रौ० (४।१।११), आ० श्रौ० (१।३।९।२)
2. का० श्रौ० (४।११।११), आ० श्रौ० १।३।९।२)
3. का० श्रौ० (१।३।९।७)
4. का० श्रौ० (४।१।२२), आ० श्रौ० (१।३।१०।७)
5. आ० श्रौ० (१।३।१०।९)
6. का० श्रौ० (४।१।२३)
7. आ० श्रौ० (१।३।१०।५)
   'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसदिति' पत्नी जपति।
8. का० श्रौ० (४।१।२४)
9. आ० श्रौ० (१।३।९।३)

## (२) दर्शेष्टिः

**अनुष्ठानकालः**—उभयोराचार्ययोर्विधानमत्र समानं वर्तते। अदृष्टे चन्द्रमसि चतुर्दश्याम् आमावस्यायां वा शाखाहरणं च कृत्वा दर्शेष्टेरनुष्ठानं विधीयते।[1] का० क० तस्मिन् काले यजमानः शामीलीं पर्णशाखां वा छिनत्ति—'इषे त्वेत्यूर्जे त्वेति', अथवा 'ऊर्जे त्वेति' यजमानः शाखां संनमयति (ऋजूकरोति), सा च शाखा बहुपर्णा, अशुष्काग्रा प्रागुदीचीं प्राचीं उदीचीं वा प्रसृता भवेत्।[2] आ० क० सान्नायं कर्त्तुमिच्छन् यजमानः पलाशशाखां शमीशाखां वा हरति, सा बहुपर्णा, अप्रतिशुष्काग्रा, अछिद्रा (असुषिरा) च भवेत्। तां यजमानः पूर्ववत् 'इषे त्वोर्जे त्वेति' मन्त्रेण चाच्छिनत्ति, अपि वा इषे त्वेत्याच्छिनत्यूर्जे त्वेति' सन्नमयत्यनुमार्ष्टि वा। एवमुभौ कल्पौ समानौ स्तः।[3] आपस्तम्बश्रौतसूत्रे चात्र मन्त्रवर्ण उदाहृतः—

इमां प्राचीमुदीचीमिषमूर्जमभिसंस्कृताम्।
बहुपर्णामशुष्काग्रां हरामि पशुपागहम्॥'[4]

**वत्सापाकरणम्**—का० क० यजमानः शाखाहरणकाले वैकल्पिकं व्रतमुपैति। अथवा यथाकालं व्रतग्रहणं भवति।[5] तत उ० क० यजमानो वत्समपाकरोति। का० क० स वत्सं शाखयोपस्पृशति, 'वायव स्थे'ति मन्त्रेण।[6] आ० क० तु यजमानो अनेनैव मन्त्रेण शाखया: दर्भैः, दर्भमुञ्जीवैर्वा वत्सानपाकरोति मातृभिः संसृष्टान् वत्सान् पृथक्करोति। ततः का० क० यजमानो 'देवो वस्सवितेति' मन्त्रेण शाखया गामेकामुपस्पृशति, आ० क० शाखया गाः गोचराय प्रस्थापयति।[7] तत उ० क० ऐन्द्रं माहेन्द्रं वा सान्नायं भवति।[8] का० क० अध्वर्युर्यजमानो वा

1. 'श्वोनोदित्येयदृष्टे वा' (का० श्रौ० ४।२।१), प्रागुदयादमावस्यायाः' (आ० श्रौ० १।४।१४।१)
2. का० श्रौ० (४।२।१-४)
3. आ० श्रौ० (१।१।१।७,१०,११)
4. आ० श्रौ० (१।१।२।१)
5. का० श्रौ० (४।२।५-६)
6. का० श्रौ० (५।२।७)
7. का० श्रौ० (४।२।९), आ० श्रौ० (१।१।२।४)
8. का० श्रौ० (४।२।१०), आ० श्रौ० (१।१।२।७)—'इन्द्रो वै वृत्रमहन्त्सोऽन्यान् देवानत्यमन्यत स महेन्द्रोऽभवत् (मै० सं० ४।६।८), 'यत्महान् इन्द्रोऽभवत् तन्महेन्द्रस्य महेन्द्रत्वम्' (ऐ० ब्रा० १२।१०)

अग्न्यागारे, आ० क० अग्न्यागारे अग्निष्ठे अजसि वा शाखामुपगूहति ।[1]

**बर्हिराहरणादि**—अतः परम् आपस्तम्बश्रौतसूत्रे असिदस्याश्वपर्शोऽनुडुत्पर्शोर्वा प्रतपनमुक्तम् ततोऽध्वर्यु बर्हिराहरणाय प्राचीमुदीचीं वा दिशमभिप्रव्रजति। तथा स बर्हिषि मन्त्रोच्चारणपूर्वकं लुनाति, स तत्र सनखं मुष्टिं लुनाति स प्रस्तर[2] उच्यते। तानि लूनानि बर्हींषि आच्छेत्ता भूमौ न निदधाति, वाहनादेरुपरि एव निदधाति, अत्रापस्तम्बेन वाजसनेयिनां मतमुदाहृतम्—'प्रस्तरमेव मन्त्रेण ददाति तूष्णीमितरदिति वाजसनेयकम्।' (आ० श्रौ० १।२।४।५)। अत ऊर्ध्वमापस्तम्बेन शुल्वकरणम्, इध्माहरणम्, वेदकरणम्, उपवेषकरणम्, पवित्रकरणम्, च विस्तारेण प्रोच्यन्ते। का० क० त्वेते पदार्थाः प्रायेण सारेण उच्यन्ते, एषां वेदकरणविधिस्तु परिभाषासूक्तः, अत्र सारेण शुल्वकरणादीनां शेषविधानानि वक्ष्यन्ते।

**शुल्वकरणम्**—बर्हिषां बन्धनार्थानि संहननानि शुल्वानि (रज्जवः) उच्यन्ते। का० क० तानि अयुग्मधातूनि भवन्ति[3], आ० क० तु त्रिधातु पञ्चधातु वा शुल्वं भवति। आच्छेत्ता मन्त्रपूर्वकं बर्हींषि बद्ध्वा तान्यादाय प्रतिनिवर्तते गमनकालमन्त्रानेष तर्हि जपति—'प्रेयमगादित्यादीन्।[4] तानि बर्हींषि स वेदिसकाशे निदधाति—'या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा' (आ० श्रौ० १।२।५।४)।

**इध्माहरणम्**—इध्मपरिधीनां संख्यादयस्तु परिभाषाप्रकरणे चोक्ताः, अत्रानुक्तं किञ्चिद् वक्ष्यते। इध्मकाष्ठानि त्रिभिः शुल्वैः बन्धनीयानि भवन्ति।[5] इध्मकाष्ठान्यपि वाहनादौ निधीयन्ते न भूमौ।[6]

---

1. का० श्रौ० (४।२।११),आ० श्रौ० (१।१।२।१०)
2. आपस्तम्बेनात्र प्रस्तरस्य प्रमाणान्युक्तानि—'कुलिपमात्रो अरत्निः प्रादेशः उर्वस्थि जान्वस्थि स्रुग्दण्ड इति वा तिर्यक्प्रमाणानि'
(आ० श्रौ० १।२।३।१३)
3. का० श्रौ० (१।३।१४)
4. आ० श्रौ० (१।२।५।१)
5. का० श्रौ० (१।३।२१)
6. आ० श्रौ० (१।२।६,२)

**उपवेषकरणम्**—अध्वर्युः यया शाखया वत्सानपाकरोति तस्याः पलाशानामेकदेशं प्रशात्य मूलतः शाखां परिवास्य उपवेषं करोति ।[1] अङ्गारप्रेषणार्थं काष्ठमुपवेष इति समाख्यायते, सान्नायके कर्मणि चोपवेषेण कपालोपधानादि कर्म क्रियते। असान्नायके कर्मण्यपि केचित् एवं विदधते। उपवेषश्चारत्निमात्रः प्रादेशमात्रो वा भवति।

**पवित्रकरणम्**—उ० क० त्रिशलाकं हस्तप्रादेशमात्रं तु त्रिवृत्कृत्वा पवित्रनिर्माणार्थं दर्भमादाय शाखायां शिथिलं संश्लेषयति, एतौ द्वौ कुशौ पवित्रे उच्येते तयोरेवं करणं पवित्रकरणमुच्यते ।[2] नवभिस्त्रिगुणैः त्रिगुणमिति केचित् वेण्याकारमिति केचिदाहुः ।[3]

**यवागूहोमः सान्नायश्च**—उ० क० संनयत् यजमानो अमावस्यायां रात्र्यां स्वयं यवाग्वाऽग्निहोत्रहोमं जुहोति ।[4] आपस्तम्बेन दध्ना आतञ्चनानन्तरं यवागूशेषस्य दोहमध्ये प्रक्षेप उक्तः, तन्मते चास्यां रात्रौ कुमारा अपि पयो न लभन्ते।[5] तत उ० क० सायमग्निहोत्रे हुते अध्वर्युरग्निं परिस्तीर्य गां दोग्धि ।[6] आपस्तम्बकल्पेन तु गार्हपत्यस्योत्तरेदेशे दर्भान् संस्तीर्य अध्वर्युर्द्वन्द्वशः—सान्नायपात्राणि संस्थापयति कुम्भीं शाखापवित्रमभिधानीं निदानं दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वापिधानार्थं होत्रहवणीमुपवेषं च ।[7] तत उ० क० अध्वर्युः कुम्भीं गार्हपत्ये-

---

1. आ० श्रौ० (१।२।६।६), का० श्रौ०—मूलादुपवेषं करोति 'वेषोऽसि' (४।२।८), आ० क० पूर्णमन्त्रपाठः—
'उपवेषोऽसि यज्ञाय त्वां परिवेषमधारयन् ।
इन्द्राय हविः कृण्वन्तः शिवश्शग्मो भवासि नः ॥ (आ० श्रौ० १।२।६।६)
2. का० श्रौ० (४।२।१५,१६), आ० श्रौ० (१।२।६।८,६)
आ० श्रौ० च पवित्रस्य स्तुतिः 'त्रिवृत् पलाशे दर्भः इयान् प्रादेशसंमितः। यज्ञे पवित्रं पोतृतमं पयो हव्यं करोतु मे ॥ इमौ प्राणापानौ यज्ञस्याङ्गानि सर्वशः आप्यायन्तौ संचरतां पवित्रे हव्यशोधने ॥'
(आ० श्रौ० १।२।६।६)
3. का० श्रौ० भा० (पृ० ३०२)
4. का० श्रौ० (४।२।१७), आ० श्रौ० (१।४।११।१)
यवागूः—'तण्डुलैः शिशिलपमयवा यवागूरित्युच्यते' (कः)।
5. 'नास्येतां रात्रिं कुमाराश्च न पयसो लभन्ते' (आ० श्रौ० १।४।११।२)
6. का० श्रौ० (४।२।१८), आ० श्रौ० (१।४।११।३,४)
7. आ० श्रौ० (१।४।११।५,६)

ऽधिश्रयति।[1] आपस्तम्बेन त्वत्र सान्नायपात्राणां प्रतितपनस्य विधानं विस्तरेण प्रोक्तम्। तेन मन्त्रा अपि बाहुल्येनोदाहृताः।[2] तथा चोदाहरणम्—

'प्र प्रस्त्रंसाय यज्ञस्योखे उपदधाम्यहम्।
पशुभिस्संनीतं विभृतमिन्द्राय शृतं दधि॥'[3]

अत्र एकायामुखायां सत्यां मन्त्रे द्विवचनमस्ति। तत आ० क० अध्वर्युः 'भृगूणामङ्गिरसां तपसा तपस्वेति' अङ्गारान् इतस्ततः कृत्वा वसोः पवित्रमसीति वाग्यतो दोहयति।[4] का० क० अध्वर्युः 'वसोः पवित्र'मिति (शु० य० १३) मन्त्रेण अशूद्रेण दोहयति।[5] आ० क० दारुपात्रे त्वध्वर्युर्दोग्धि, अदारुपात्रे शूद्रो दोग्धि।[6] उ० क० दोग्धा दोहपात्रेणैव पयः कुम्भ्यामासिञ्चति। कात्यायनस्तु कुम्भीं स्थाली इत्याख्यायते।[7] आपस्तम्बेनात्र अनुमन्त्रणदोहनादीनां मन्त्रा बाहुल्येनोदाहृताः, कात्यायनेन तु क्वचित् क्वचित् प्रतीकमात्रेण मन्त्राः प्रदर्शिताः। का० क० यजमानस्य यावत्यः स्वस्य गावो भवन्ति ता सर्वा दोहयति अथवा तिस्रो दोहयति।[8] आ० क० चैवम् एकस्या द्वयोस्तिसृणां वैकाहे द्व्यहे त्र्यहे वा पुरस्तादुपवसथदिनात् आतञ्चनार्थं दोहयति।[9] तदनन्तरं कृताग्निहोत्रहोमशेषेण दध्ना पय आतनक्ति। अयमेव सान्नाय इत्युच्यते। तत्र सोमेन त्वातनच्मीन्द्राय दधीति' मन्त्रेण आ० क० आतञ्चनम्[10], का० क० 'इन्द्रस्य त्वेति' (शु० १।४) मन्त्रेणातञ्चनं भवति।[11] अत्र आ० क०, 'ओषध्यः पूतीकाः क्लवा-

1. का० श्रौ० (४।२।२०), आ० श्रौ० (१।४।१२।१)
2. आ० श्रौ० (१।४।११ कण्डिका)
3. आ० श्रौ० (१।४।१२।२)
4. आ० श्रौ० (१।४।१२।३)
5. का० श्रौ० (४।२।२२)
6. आ० श्रौ० (१।४।१२।७)
7. का० श्रौ० (४।२।२३), आ० श्रौ० (१।४।१२।३)
8. का० श्रौ० (४।२।२८-२९)
9. आ० श्रौ० (१।४।१३।६)
10. आ० श्रौ० (१।४।१३।७)
11. का० श्रौ० (४।२।३३)

स्तण्डुलाः पर्णवल्काश्च आतञ्चनविकल्पाः प्रोक्ता ।[1] तत उभयोराचार्ययोः कल्पयोरयस्पात्रे दारुपात्रे वोदकमानीय, तेन पात्रेण दोहस्थालीं (कुम्भीं) ढंकयति '(अपिदधाति)[2]' तयोः कल्पयोर्मन्त्रोऽपि समानः 'विष्णो हव्यं रक्षस्वेति' ।

**प्रातर्दोहः**—अत्रापि सायंदोहवत् सर्वं वत्सापाकरणादिकं कर्म क्रियते । अत्र का० क० प्रातराग्नेयोऽष्टाकपालः पुरोडाशः, असंनयतो यजमानस्य द्वादशकपाल ऐन्द्राग्नो पुरोडाशो द्वितीयं हविः । अत्रान्यस्मिन् पात्रे प्रातर्दोहो भवति ।[3] आतञ्चनादिकं च पूर्ववत् भवति । उ० क० सोमयाजी संनयेत्, अर्थात् सान्नायनेन्द्रं महेन्द्रं वा यजेत, किन्तु नागतश्रीः महेन्द्रं यजेत । त्रयो वै गतिश्रिय इति तु पूर्वमेव व्याख्यातम् । का० क० 'कामादितरश्च संनयेत्, इन्द्रं च यजेत' इति ।[4] और्वगौतमभारद्वाजगोत्रीयास्तु सोमेनेष्ट्वा हि महेन्द्रं यजेरन्, इत्यापस्तम्बमतिः ।[5] दर्शेष्टौ उक्तादन्यत्सर्वमग्न्यान्वाधानादिकर्मापवर्गान्तं पौर्णमासवत् भवति ।[6]

**दाक्षायणयज्ञः**—अत्र दाक्षायणयज्ञे सर्वाणि दर्शपूर्णमासवत् हवींष्यादीनि प्रत्यभिज्ञायन्ते केवलम् अग्नीषोमीयैन्द्राग्न सांनायानां क्वचित् विकारः । अतः कात्यायनेन नामगुणयोगात्कर्मान्तरमुक्तम् ।[7] अस्य यज्ञस्यापरनामानि चापस्तम्बेनाख्यायन्ते—ऐडादधयज्ञः, सार्वसेनियज्ञः, वसिष्ठयज्ञः, शौनकयज्ञश्च ।[8] सर्वप्रथमो अनेन यज्ञेन दक्षः प्रजापतिरीजे तेन एष दाक्षायणयज्ञ इति उच्यते ।

---

1. आ० श्रौ० (१।१४।१४।१)
2. का० श्रौ० (४।२।३४), आ० श्रौ० (१।१४।१४।३)
3. का० श्रौ० (४।२।३५-३७)
4. आ० श्रौ० (१।१४।१४।८-९), का० श्रौ० (४।२।४५-४६)
5. आ० श्रौ० (१।१४।१४।१०)
6. का० श्रौ० (४।२।४४)
7. का० श्रौ० (४।४।२)
8. ऐडादधस्सार्वसेनियज्ञो वसिष्ठयज्ञः शौनकयज्ञश्च व्याख्याताः (आ० श्रौ० ३।५।१७।१२), शतपथब्राह्मणे चास्य यज्ञस्य परम्परा एवं प्रकारेणोपवर्णिता—'प्रजापतिर्ह वा एतेनाग्रे यज्ञेनेजे······ ···स वै दक्षो नाम । तद्यदनेन सोऽग्रेऽयजत तस्माद्दाक्षायणयज्ञो नाम, तमेनमेके वसिष्ठयज्ञ

का० क० प्रजाकामः पशुकामो अन्नकामो यशस्कामो वा पुरुषोऽनेन यज्ञेन यजते।[1] आपस्तम्बस्त्विमं यज्ञं स्वर्गकामाय विदधाति।[2] उ० क० यजमानो दाक्षायणयज्ञं पञ्चदश वर्षाणि यजेत।[3] उ० क० दाक्षायणयज्ञे पौर्णमास्याम् अग्नीषोमीय एकादशपाल पुरोडाशः, अमावस्यायां चैन्द्राग्नश्च एकादशकपालः पुरोडाशः। ततः प्रातः पौर्णमासी प्रतिपदि सान्नायवत्कर्म भवति, तेन तत्राग्नेयः पुरोडाशो दधिपयसी च हवींषि इन्द्रश्च देवता, तथा च प्रातः प्रतिपदि अमावस्यायां मैत्रावरुणीपयस्या।[4] आ० क० पूर्वस्यां पौर्णमास्यामाग्नेयो अष्टाकपालोऽग्नीषोमीय एकादशकपाल पुरोडाशः, तथा हि आग्नेयोऽष्टाकपालः, ऐन्द्रं च दधि उत्तरस्यां पौर्णमास्याम्, एवं च आग्नेयोऽष्टाकपालः, ऐन्द्राग्न एकादशकपालः पुरोडाशः पूर्वस्याममावास्यायाम्, आग्नेयोऽष्टाकपालो मैत्रावरुण्यामिक्षा द्वितीयं हविरुत्तरस्याममावास्यायाम्।[5] आपस्तम्बेन त्वतिसंक्षिप्तरीत्याऽयं यज्ञो उपवर्णितः, यर्हि कात्यायनेनास्य विधानं किञ्चिद् विस्तीर्यते। तदनुसारेण दाक्षायणयज्ञे लौकिकदधिन्येवाज्यनिर्वापानन्तरं पयस्यार्थं दोहनं कृत्वा पयसि शृते तप्ते सति पश्चाद्दध्यानयति, न प्रथमम्, शृते पयसि दधि मिश्रयित्वा पयस्या च निर्मीयते, तस्याः पयस्यायाः उदकं पृथक्कृत्वा वाजिनं सम्पाद्यते, अनेन वाजिनेन वाजिनयागं क्रियते। यज्ञान्ते शेषं वाजिनं होता, अध्वर्युः, ब्रह्मा, आग्नीध्रो यजमानाश्च भक्षयन्ति। दाक्षायणयज्ञस्य दाक्षायणं (सुवर्णं) दक्षिणा विधीयते। कात्यायनेन विकल्पेन संवत्सरपर्यन्तोऽपि दाक्षायणयज्ञस्य निर्दिष्टः। अस्मिन् यज्ञेऽपि मांसभक्षणं मैथुनमनृतवचनादीनि वर्जितानि कृतानि सूत्रकारैः।[6]

---

इत्याचक्षते····· वसिष्ठयज्ञेनेजे···तेनो ह तत ईजे प्रतीदर्शश्नैक्वः··· तमाजगाम सुप्ला साञ्जयः—··· स वै सहदेवः साञ्जयः······तेनो ह तत ईजे देवभागः श्रौतर्षिः··· स उभयेषां कुरूणां च सृञ्जयानां च पुरोहित आस। तेनो ह तत ईजे दक्षः पार्वतिः। (श० ब्रा० २।४।१)

1. का० श्रौ० (४।४।१)
2. आ० श्रौ० (३।५।१७।४)
3. का० श्रौ० (४।२।२८), आ० श्रौ० (३।५।१७ १०)
4. का० श्रौ० (४।४।४-७), आ० श्रौ० (३।५ १७।५)
5. आ० श्रौ० (३।५।१७।६)
6. का० श्रौ० (४।४ कण्डिका द्रष्टव्या)

**वैमृधेष्टिः**—कात्यायनेन त्वकेस्मिन् सूत्रे[1] हि वैमृधेष्टिर्निरुप्यते, यदाऽऽपस्तम्बः तां विस्तरेण वक्ति। अस्येष्टेरामावास्यं तन्त्रं, समानतन्त्रेऽपि भवत्यूहा विकृत्याश्रयणात्। आपस्तम्बमते अयं यागः सप्तदशसामिधेनीको यथा श्रद्धदक्षिणो भवति।[2] अत्रेष्टौ यजमानः पौर्णमास्यामग्नीषोमीयमेकादशकपालं पुरोडाशं अदित्यै घृतेन चरुम् अमावस्यायां सारस्वतं चारुं पौष्णं चैन्द्रमेकादशपालं पुरोडाशं पौर्णमास्याममावास्यायां च, भ्रातृव्यवतोऽभिचरतो वा यजमानस्य चैवं विधीयते। तन्मते च भ्रातृव्यादात्मानं रिरक्षिसुस्तं वा जिघांसुरिमे द्वे इष्टी द्वयोः पर्वणोरनुनिर्वपति।[3] अत्रैवापस्तम्बेन अन्या इष्टय इद्रार्थं च निरूपिताः।[4]

**साकंप्रस्थीयः**—आपस्तम्बेन अत्र (३।५।१६ कण्डिकायाम्) साकंप्रस्थीयाख्यो यज्ञश्च निरूपितः। अयं का० क० न दृश्यते।

**आग्रयणम्***—इयं नवसस्येष्टिरासीत्, यस्मिन्नृतौ यानि यानि अन्नानि भवन्ति तैराग्रयणे इष्ट्वा जनाः तदन्नानि भुञ्जते स्म।[5] पुराकाले आर्येषु केचित् भैषजयज्ञाः प्रचलिता आसन्, आर्तवानां रोगाणां निवारणार्थमेते यज्ञाश्चानुष्ठीयन्ते स्म, अन्यत्र वक्ष्यमाणानि चतुर्मास्यानि च एवंविधा भैषज्ययज्ञा[6] अभूवन्, पण्डितप्रवराणां रघुनंदनशर्मणां मते चाग्रायणमेवंविधो भैषज्ययज्ञो अस्ति।[7]

---

1. 'इन्द्राय विमृध एकादशपालः पौर्णमासमनु' (का० श्रौ० ४।५।२४)
2. आ० श्रौ० (३।५।१५।४)
3. आ० श्रौ० (३।५।१५।६)
4. आ० श्रौ० (३।५।१५।७,८,११ इत्यादिषु सूत्रेषु)।
5. 'नानिष्ट्वाग्रयणेनाहिताग्निर्नवाश्नीयात्' (आ० श्रौ० ।६।८।२९।२)
6. भैषजयज्ञा वा एते। ऋतुसन्धिषु व्याधिर्जायते, तस्मादृतुसन्धिषु प्रयुज्यन्ते' (श० ब्रा०)—'भैषज्यकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति' (छा० उ० ४।१७।१८)
7. 'होली ऐसा ही सार्वजनिक भैषज्ययज्ञ है, जो संवत्सर के अन्त में किया जाता है। यह नवसस्येष्टि भी कहलाती है। नवसस्य का नाम होता है। इसलिये होली में हरे भुने चने को होला कहते हैं। यह होली एक प्रकार का भैषज्य यज्ञ है।' ···वै० समान्ति (पृ० ३५९)

* उक्तं च—'अग्रे अयनं भक्षणं येन कर्मणा तदाग्रयणम्' (आश्वलायनश्रौतटीकायाम् २।९।१)

अत्रापि उभयोराचार्ययोर्विषयवर्णनक्रमे चान्तरं वर्तते, यदा कात्यायनेन तु दर्शपूर्णमासप्रकरणस्यान्ते आग्रयणेष्टिर्निरूपिता, आपस्तम्बेन तु पूर्वमग्न्याधेयम्, ततः पुनराधेयमग्निहोत्रं च वर्णितानि तेषामनन्तरमाग्रयणमुपवर्णितम्, कात्यायनेनाग्न्याधेयादीनि त्वाग्रयणमुक्त्वा प्रतिपादितानि ।

**यजनकालः**—आ० क० वर्षासु श्यामकैर्यजेत, शरदि व्रीहिभिर्वसन्ते यवैर्यथर्तु वेणुयवैरिति सिद्धान्तः ।[1] कात्यायनेन चान्यत्रोक्तम्—

शरद्वसन्तयोः केचिन्नवयज्ञं–प्रचक्षते। धान्यपाकवशादन्ये श्यामको वनिनः स्मृतः ।[2] उभयोराचार्ययोर्मतयोराग्रयणं पौर्णमास्याममावास्यायां वा भवति । का० क० प्रथमं हरिरैन्द्राग्नम् तत्र 'ऐन्द्राग्न एकादशकपालः पुरोडाशो भवति । शरदि व्रीह्याग्रयणं वसन्ते च यवाग्रयणमिति केचित् वदन्ति ।[3] आ० क० तु यजमानो निर्वपणकाले आग्नेयमष्टाकपालं पुराणानां व्रीहीणां निर्वपति ।[4] अत्राचार्येण कस्माच्चित् ब्राह्मणप्रवचनात् प्रामाण्यमुदाहृतम् यथा कृषको दान्तेन बलीवर्देन सहादान्तं योजयति तादृगेव नवानां हविषां पुराणेन सह निर्वपणमाहुराचार्याः ।[5]

का० क० वैश्वेदेवश्चरुर्द्वितीयं हविरुपांशु भवति ।[6] तथा हि तन्मते द्यावापृथिवीय एककपालः पुरोडाश उपांशु निरुप्यते ।[7] अथवा तं पुरोडाशमाज्येन छादयित्वा होमश्च कर्त्तव्यः, अथवा वैश्वेदेवश्चरु जीर्णानां व्रीहिणां च भवति ।[8] तथा च का० क० सौम्यः श्यामकश्चरु-

---

1. आ० श्रौ० (६।८।३१।१४)
2. कर्मप्रदीपे (३।७।६)
3. का० श्रौ० (४।५।१)
4. आ० श्रौ० (६।८।२६।६)
5. 'यथा दान्तेनादान्तं संयुनक्ति तादृक्तदिति विज्ञायते'
(आ० श्रौ० ६।८।२। )
6. 'वैश्वदेवश्चरु पयसि दुग्धे वा श्रप्यते उदके वा, तत्र पयःपक्षे मन्त्रः—'स पय ओषधीभिः समोषधयो रसेन संरवेज्जगतीभिः पृच्यतां सं० मधुमन्मधुमतीभिः पृच्यतामिति' (का० श्रौ० भाष्ये, पृ० ३४३) ।
7. का० श्रौ० (४।६।४)
8. का० श्रौ० (४।६।५-७)

रारण्यस्य धान्यस्य च वर्षासु शरदि वा भवति, ग्रीष्मे च वंशमयः सौम्यश्चरुर्भवति, संवत्सरोपसुत्यादौ यज्ञे आग्रयणकाले प्रवर्ग्ये नवान्नेन रौहिणौ पुरोडाशौ कर्तव्यौ भवतः, सुत्यासु च सवनीयान् पुरोडाशान् कुर्वन्ति ।[1]

आ० क० नवानामन्नानामैन्द्राग्नो द्वादशकपाल आग्नेन्द्रो वा पुरोडाशो भवति, का० कल्पवच्च वैश्वदेवश्चरु पयसि कर्तव्यः, तथा हि सौम्यश्चरुः श्यामाको द्यावापृथिवीय एककपाल निरुप्यते च, परमतेनाचार्यः सौम्याच्चरोः पूर्वं द्यावापृथिवीयं एककपालं विदधाति ।[2] ततोऽस्मिन् कल्पेऽपि पञ्चाज्यानि जुहोति यजमानः ।[3] आ० क० हरितयवान्, हरितचणकान् गोधूमान् चानिष्ट्वापि वा यथेच्छं भक्षयति ।[4] ततोऽत्र कल्पे आचार्येण वेणुयवानामिष्टिः समाम्नाता । वेणुतण्डुला वेणुभवा उच्यन्ते ।[5] आ० क० आसु इष्टिषु सप्तसामिधेन्यो भवन्ति, सद्वन्तावाज्यभागौ, विराजौ च संयाज्ये भवतः ।[6] उ० क० यजमानेन स्वगोष्ठे प्रथमजो वत्सो दक्षिणायां दीयते ।[7]

का० क० दर्शपौर्णमासानीजानो दक्षिणाग्नौ पक्वमन्नं चतुरो ब्राह्मणान् भोजयेत् किंचित् दानं च दद्यात्, अत्राग्निहोत्रकर्त्ता तु नवान्नैः प्रातः सायं चाग्निहोमं कुर्यात्, अथवा नवान्नखादितया गोः पयसा होतव्यम्, अत्राचार्यः पुनर्दक्षिणाविधानं करोति—'पुनः संस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाकृतं वा वासः ।'[8] आ० क० वासः, दधिमन्थः, मधुमन्थः, मधुपर्कः, मधुलुन्थः, पिङ्गलाक्षो गौर्वा दक्षिणायाम् विधीयते ।[9]

---

1. का० श्रौ० (४।६।१४–१७)
2. आ० श्रौ० ६।८।२९।९)
3. आ० श्रौ० (६।८।२९।१०)
4. आ० श्रौ० (६।८।३१।७)
5. आ० श्रौ० (६।८।३१।८)
6. आ० श्रौ० (६।८।३१।४)
7. 'प्रथमजो गौर्दक्षिणा (का० श्रौ० ४।६-८), 'ये प्राचीनमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं ददाति ।' (आ० श्रौ० ६।८।३०।७) ।
8. का० श्रौ० (४।६।१०–१२,१८)
9. आ० श्रौ० (६।८।३१।५)

आपस्तम्बेनात्र बह्वृचब्राह्मणस्य प्रामाण्येन आग्रयणे व्रीहिभिर्यजनं विहितम् ।[1]

## (३) अग्न्याधेयम्

कात्यायनापस्तम्बश्रौतसूत्रयोरग्न्याधेये विषयानुक्रमयोरन्तरमवलोकनीयम्—

| का० श्रौ० | आ० श्रौ० |
|---|---|
| १. अग्न्याधानकाल: | अरण्योराहरणम् |
| २. अग्न्यंगारनिर्माणम् | सम्भारसम्भरणम् |
| ३. वपनादि | आधानकाल: |
| ४. दक्षिणाग्नेराहरणम् | अग्न्यागारनिर्माणम् |
| ५. अरणीप्रदानम् | वपनादि |
| ६. अजबन्धनं तद्दानं च | ब्रह्मौदनम् |
| ७. समिदाधानम् | अग्न्याधानम् |
| ८. ब्रह्मौदनम् | वरदानम् |
| ९. रात्रिजागरणम् | अजबन्धनम् |
| १०. शर्करानिवपनम् | सिकतानिवपनादि |
| ११. अग्निमन्थनम् | अग्निमन्थनम् |
| १२. वरदानम् | सामगानम् |
| १३. अग्न्याधानम् | आहवनीयाधानम् |
| १४. आहवनीयोद्धरणम् | दक्षिणाग्नेराहरणम् |
| १५. सम्भारनिधानम् | अश्वपदे अग्निनिधानम् |
| १६. अश्वपदे अग्निनिधानम् | होम: |
| १७. दक्षिणाग्निनिधानम् | सामगानम् |
| १८. द्यूतम् | सभ्यावसथयोराधानम् |
| १९. सामगानम् | पूर्णाहुति: |
| २०. पूर्णाहुति: | द्यूतम् |
| २१. तनूहवींषि | पावमानहवींषि |
| २२. इष्टय: आदित्यचर्वाद्या० | हिरण्यदक्षिणा |
| २३. दक्षिणा | द्रष्टव्य:—आदित्यचर्वाद्या: |
| २४. यजमानव्रतानि | यजमानव्रतानि |

1. 'व्रीहिभिरेवोभयमते ह वै सूपचारतया भवन्तीति बह्वृचब्राह्मणम्' (आ० श्रौ० ६।८।११।१३)

कात्यायनस्तु सर्वमेतद्विषयजातं समासेनैव उक्तवान्, यद्यापस्तम्बस्तु विस्तीर्यैतत्कर्मकाण्डमाह।

**अग्न्याधेयकालः**—अग्न्याधेयमिति अग्न्यागारादीनां समुच्चयेन संज्ञा, मन्थनमात्रस्य स्थापनमपि वा तदुच्यते। सर्वश्रौतकर्मकाण्डोपकारकं सर्वप्रथमभावि चाग्न्याधेयं भवति, किन्तु मन्त्रसंहितासु दर्शपूर्णमासयोरनन्तरमेवाग्न्याधेयमन्त्राः पठ्यन्ते, तेन श्रौतसूत्रादिष्वपि चायं क्रम उपलभ्यते। का० क० अमावस्यायामेवाग्न्याधेयं विधीयते[1], आ० क० तु पौर्णमास्याममावास्यायां वाऽग्निराधेय इति विकल्पो दृश्यते।[2] तत्रोभाभ्यामाचार्याभ्यां नक्षत्रविकल्पा अपि उच्यन्ते, अमावास्याया पौर्णमास्याः सह नक्षत्राणि न सङ्गच्छन्ते, तस्मादयं विकल्पो भवति, न समुच्चयः। का० क० यजमानः कृत्तिकारोहिणीमृगशिरःफाल्गुनीषु च विकल्पेन अग्निमादद्यात्, लाभकामो ब्राह्मणो हस्तनक्षत्रे अग्निमादधीत, क्षत्रियश्च लाभकामश्चित्रायामादधीत।[3] तत्रापस्तम्बोऽपि ब्राह्मणार्थं कृत्तिकारोहिणीमृगशीर्षफल्गुनीपुनर्वसुहस्तनक्षत्रेषु अग्न्याधेयं विहितवान्, स ब्राह्मणप्रवचनान्युदाहृत्योदाहृत्य अग्न्याधेयस्य नक्षत्राणि विदधाति।[4] तत्रकल्पे हि चित्रायां राजन्यो भ्रातृव्यवान् वाग्निमादधीत। स आचार्यो विशाखयोः प्रजाकामाय, अनुराधेष्वृद्धिकामाय, श्रवणे नक्षत्रे पुष्टिकामाय, उत्तरेषु प्रोष्ठपदेषु प्रतिष्ठाकामाय चाग्न्याधेयं विहितवान्[5], अथवा सर्वाणि नक्षत्राणि नित्यानि भवन्तीत्येकेषां मतम्।[6]

का० क० वसन्त आधानकालो ब्राह्मणस्य निष्कामस्य ब्रह्मवर्चसकामस्य च, ग्रीष्म आधानकालः क्षत्रियस्य निष्कामस्य श्रीकामस्य च,

---

1. का० श्रौ० (४।७।१)
2. आ० श्रौ० (५।१।३।७)
3. का० श्रौ० (४।७।२–४)
4. कृत्तिकासु ब्राह्मण आदधीत मुख्यो ब्रह्मवर्चसी भवति', 'रोहण्यामाधाय सर्वान् रोहान् रोहति', 'मृगशीर्षे ब्रह्मवर्चसकामो यज्ञकामो वा', 'यः पुरा भद्रस्सन् पापीयान् स्यात्स पुनर्वस्वोः', 'पूर्वयोः फल्गुन्योर्यः कामयेत दानकामा मे प्रजास्स्युरिति', 'हस्ते यः कामयेत प्र मे दीयेतेति', (आ० श्रौ० ५।१।३।३,३,५,६,७,८,१२)।
5. आ० श्रौ० (५।१।३।१४)
6. आ० श्रौ० (५।१।३।१५)

वर्षाश्चाधानकाल: प्रजाकामपशुकामवैश्यस्य रथकारस्य च ।[1] आ० क० चैवंविधमेव विधानमस्ति[2], तन्मते च शिशिर: सार्ववार्णीक आधानकालो भवति, तथा हि सोमेन यक्ष्यमाणस्तु ऋतुं नक्षत्रं चानादृत्यापि अग्निमादधीत। न हि सोमस्य किञ्चिन्नक्षत्रमुपदिष्टं तेनाचार्येण ।[3]

आपस्तम्बेन तु शालादीनां निवासिनां शालीनानां[4] यायावराणां[5] च कृतेऽपि अग्न्याधेयविधानं विहितं कृतम्, तन्मते देशान्तरगमनाय शालीनो अग्निमादधीत, एवं यायावरोऽपि एकाहप्रयाणेन गमनाय (उदवासाय) अग्निमादधीत ।[6]

**अग्न्यागारा:**—उ० क० अग्न्याधेये चत्वार्यगाराणि भवन्ति—गार्हपत्यागारम्, आहवनीयगृहम्, सभ्यागारम्, आवसथ्यागारं च। तथा च सभ्यागारं (द्यूतशाला) पृथग्भवति। प्रतिगृहमेक: खरोऽपि क्रियते। आ० क० गार्हपत्यात्प्राचीनमष्टप्रक्रमेषु ब्राह्मणस्याहवनीयागारम्, एकादशप्रक्रमेषु क्षत्रियस्य, द्वादशप्रक्रमेषु च वैश्यस्य भवेत् ।[7] दक्षिणाग्नेरायतनं तु गार्हपत्यागारे आहवनीयगारे वा तयो: सकाशे वा भवति ।[8]

---

1. का० श्रौ० (४।७।५-७)
2. आ० श्रौ० (५।१।३।१८)
3. (आ० श्रौ० १।१।३।१८,२०,२१)। अग्न्याधानस्य सविस्तरं वर्णनं तैत्तिरीयब्राह्मणे (१।१।२-१०), शतपथब्राह्मणे (२।१। तथा २।२) चोपलभ्यते-'ब्रह्मैव वसन्त: क्षत्रं ग्रीष्म:। विडेव वर्षास्तस्माद् ब्राह्मणो वसन्ते आदधीत, ब्रह्म हि वसन्तस्तस्माद् क्षत्रियो ग्रीष्मे आदधीत क्षत्रं हि ग्रीष्मस्तस्माद् वैश्यो वर्षास्वादधीत विड्ढि वर्षा:।

   (श० ब्रा० २।१।३।४)
4. 'शालायां—गृहे नित्यवासी शालीन उच्यते।
5. नित्ययाता—यायावर:–तदुक्तं बौधायनेन—'तत्रोदाहरन्ति यायावरा ह वै नामर्षय आसंस्तेऽध्वन्याश्रयंस्ते' बौ० श्रौ० ३।१।३), महाभारते च जरत्कारुवचनम्—'यायावरा नाम वयमृषय: संशितव्रता:'

   (१।४१।१६)।
6. आ० श्रौ० (५।१।३।२२), आ० श्रौ० (५।१।४।३)
7. आ० श्रौ० (५।१।४।३)
8.

**यजमानस्य वपनादि**—का० क० यजमानस्य पौर्णमासवत् केशश्मश्रुवपनं विहितम् ।[1] एवं च आ० क० नखनिकृन्तनसहितं वपनं विहितम् पत्न्या अपि केशवर्जं सर्वं भवति । उ० क० जायापती क्षौमे वाससी परिधत्तः ।[2]

**व्रतग्रहणम्**—यजमानो व्रतग्रहणानन्तरं न मांसमश्नाति, न स्त्रियमुपैति, नास्य गृहात् कोपि अग्निमुद्धरति, एवं वीणया तूणवेन वा रात्रौ जागरयन्ति, अपि वा न जागरयन्ति, स वाचं च नियच्छति ।[3] आ० क० यजमानः शल्कैरेतां रात्रिमिन्धान आस्ते ।[4] का० क० त्वत्राध्वर्युर्यजमानाय द्वे अरणी (अश्वत्थशमीगर्भस्यारणी) प्रयच्छति ।[5] अत्रापस्तम्बेन शमीगर्भसम्बन्धि वाजसनेयकं मतमुदाहृतम्—'शमीगर्भस्याश्वत्थस्यारणी आहरति', 'अशमीगर्भस्येति वाजसनेयकम् (आ० श्रौ० ५।१।१।२–३), तथा ह्याचार्यो मण्डूकप्लुत्या द्वितीयसूत्रमरीरचत् 'न सम्भारान् संभरेदिति वाजसनेयकम्' (आ० श्रौ० ५।१।१।६), वस्तुतः कात्यायनेन स्वस्मिन् श्रौतसूत्रे सम्भारसम्भरणं नोक्तम् । आपस्तम्बविधाने यजमानः सप्तपार्थिवान् सम्भारानाहरति—भूयांसो अष्टौ वा हरति । पञ्च सप्त वा वानस्पत्याः सम्भारा भवन्ति । तथा हि पार्थिवाः—'सिकता', उषाः (उषो भवा मृत्तिका), आखुकरीषं वल्मीकवपाः, सूदः (चिक्कणमृत्), वाराहविहता मृत्, पञ्च सौवर्णानि शकलानि, पञ्चराजतानि, त्रीणि त्रीणि वा, यदि पञ्चौदुम्बराणि (ताम्रमयानि) भवेयुस्तदा पञ्चमो लौहशकलानि सम्भारो भवेत् । अथ पञ्च वानस्पत्याः—अश्वत्थम्, उदुम्बरम्, एनयोः पर्णे, विकङ्कतस्तथा च पुष्करपूर्णम् ।[6]

**अजबन्धनम्**—का० क० यजमानो ब्रह्मौदनात्प्राग् गार्हपत्यागारे अजं बध्नाति न वा बध्नाति, तमजं स प्रातरग्नीधे संस्थितयज्ञे ददाति । आ० क० अजबन्धनस्य विधानमपि दृश्यते ।

---

1. का० श्रौ० (४।७।११)
2. का० श्रौ० (४।७।१२,१३,१४), आ० श्रौ० (५।१।४।१०-११)
3. आ० श्रौ० (५।२।८।२-४)
4. आ० श्रौ० (५।२।८।४)
5. का० श्रौ० (४।७।२२)
6. आ० श्रौ० (५।२।७।१७)

**ब्रह्मौदनम्**—उ० क० यजमानश्चतुश्शरावं ब्रह्मौदनं पचति, तं प्रभूतेन सर्पिषा चासिच्य ऋत्विग्भ्यो ददाति। तत उ० क० यजमानोऽध्वर्युर्वा तिस्र समिधाश्चित्रियस्याश्वत्थस्य घृताक्ता आदधाति, तास्समिधा आर्द्रा सपलाशा: प्रादेशमात्र्यो भवन्ति। आ० क० त्वत्र विकल्पेन क्षीरौदनं वा पच्यते। तत उ० क० वरदानविधानं विहितम्। उभयोराचार्ययोर्मते यजमान: संवत्सरपर्यन्तं वरदानान्तमोदनं प्रत्यहं कुर्यात् तत: सर्वानग्नीनादधीत।[1] उभयोर्मते समिधश्शेषनाशे सति प्रायश्चित्ताधानमापदि एकाहे चतुर्दश्यां कर्त्तव्यम्। उ० क० यजमान: पुनराधास्यमान: पुनर्ब्रह्मौदनं पचति पूर्ववत् व्रतग्रहणादिकं कर्म च भवति।[2] आ० क० यजमानो व्रतग्रहणे वाचं यच्छन्नाह—'अनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामि इति (आ० श्रौ० ५।२।८।१), तत उ० क० वीणादिभिश्च रात्रिजागरणं भवति, तथा रात्रौ काष्ठशकलैरग्नि: प्रदीप्यते च।[3]

**शर्करानिवपनम्**—का० क० व्युष्टायां रात्रौ तं प्रज्वलितमग्निं यजमान उपशमयेत्, अथवा दक्षिणस्यां दिशि तं संहृत्य तस्मिन् अन्वाहार्यपचनं कुर्यात्, उपशमितस्याग्ने: स्थानं स्फ्येनोल्लिख्य अभ्युक्ष्य च तत्र भूमौ हिरण्यशकलं निधाय तत्रैषामाखूत्करं च निवपति, प्रान्तेषु च शर्करा निदधाति। आ० क० तु व्युष्टायां रात्रौ यजमान: तस्मिन्नग्नौ अरणी निष्टपति, ततोऽद्भिरवोक्ष्य तत्स्थानं, गार्हपत्यदक्षिणाग्न्याहवनीयसभ्यावसथ्यानां स्थानानि करोति, तत: सिकतानामर्धं द्वैधं विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेरायतने च, अर्धं च त्रैधं विभज्य आहवनीयसभ्यावसथ्यादीनां आयतनेषु निवपति। अत्र कल्पे सर्वेषां सम्भाराणां एव विभागो निवपनमुक्तम् आचार्येण विस्तरेण। तत्राचार्येण हिरण्यशकलप्रासनं रजतदानं च विधीयेते।[5]

---

1. का० श्रौ० (४।८।११), आ० श्रौ० (५।२।७।७)
2. का० श्रौ० (४।८।१२), आ० श्रौ० (५।२।७।१५)
3. का० श्रौ० (४।८।१३-१४), आ० श्रौ० (५।२।८।३,४)
4. का० श्रौ० (४।८।१५-१६)
5. आ० श्रौ० (५।३।८–१० कण्डिकासु)

**अग्निमन्थमनम्**—तत उ० क० पुरस्तात् स्थितेऽश्वे अग्निमन्थनं शमीगर्भाद् भवति ।[1] गार्हपत्यखरस्य पश्चात्प्रदेशे चाग्निमन्थनं[2] क्रियते । आ० क० मथ्यमाने अग्नौ मन्त्रजपः सांकृतेस्सामगानं च क्रियेते, धूमे जातेऽध्वर्युः गाथिनः कौशिकस्य साम गायति—'अरण्योर्निहितो जातवेदो' इत्यादि, ततः स चतुर्होतॄन् यजमानं वाचयति ।[3] उ० क० जातेऽग्नौ यजमानो अध्वर्य्वादिभ्यो वरं ददाति । आपस्तम्बकल्पे गौर्वै वरो भवति, अनड्वान् वै अतिवरो भवति ।[4]

**अभिप्राणनम्**—तत उ० क० यजमानः—
'प्राणममृते दधे' इति, श्वासं गृह्णाति,
'अमृतं प्राण आदधे' इति, उच्छ्वासम्[5], निष्कासयति (कात्यायनकल्पे) एवं चापस्तम्बकल्पे—
'प्रजापतेस्त्वा प्राणेनाभिप्राणिमि, इति श्वासं गृह्णाति, अजीजन्नमृतं मर्त्यासो सोमाणं तरणिमिति उच्छ्वासः ।[6]

**गार्हपत्याग्न्याधानम्**—का० क० तं जातमग्निमुद्धृत्य आसीनो यजमानो दारुभिर्ज्वलन्तमादधाति 'भूर्भुव इति मन्त्रेण अमुष्य' त्वेति मन्त्रेण यर्थाष स्थापयति ।[7] आपस्तम्बस्त्वेनं अधिकं स्पष्टीकरोति 'भृगूणां त्वा देवानामिति' यो भार्गवः स्यात्, 'अङ्गिरसां त्वा देवानामिति यो ब्राह्मण आङ्गिरसः स्यात्, 'आदित्यानां त्वा देवानामिति

---

1. का० श्रौ० (४।८।२१,२६), आ० श्रौ० (६।३।१०।७,९)—'श्वेतोऽश्वो-विक्तिनाक्षो भवति रोहितो वा सितज्ञानुरपि वा य एव कश्चित् साण्डः ।'
2. मन्थनप्रकारश्च कात्यायनेन कर्मप्रदीपे चोक्तः 'चात्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः । कृत्वोत्तराग्रामरणिं तद्बुध्नमुपरि न्यसेत् ॥ चात्राय:कीलकाग्रस्तामेवोवीलीमुदग्रकाम् । विष्टम्भाद्धारयेन्मन्त्रं निष्कम्पं प्रयतः शुचिः । त्रिरुद्वेष्ट्याथ नेत्रेण चात्र पत्न्योऽहतांशुकाः । पूर्वे मन्थन्त्यरण्यन्ते प्राच्यग्नेः स्याद्यथाच्युतिः । कर्मप्रदीपे (१।८।२-४)
3. आ० श्रौ० (५।३.१०।११, ५।३।११।२)
4. का० श्रौ० (४।८।२७), आ० श्रौ० (५।३।११।४,५)
5. का० श्रौ० (४।८।२९–३०), आ० श्रौ० (५।३।११।६–६)
6.
7. का० श्रौ० (४।९।१)

अन्यासां प्रजानां, 'वरुणस्य त्वा राज्ञो व्रतपते' इति राज्ञः, इन्द्रस्य त्वेन्द्रियेण व्रतपते इति क्षत्रियस्य, 'मनोष्ट्वा ग्रामण्यो व्रतपते' इति वैश्यस्य, 'ऋभूणां त्वेति'[1] रथकारस्य यथव्यधानम् ।[2] एतस्मिन् कल्पे प्रथमया व्याहृत्या द्वाभ्यां व्याहृतिभ्यां वा सर्पराज्ञीभ्यामृग्भ्यां प्रथमेन धर्मशिरसा मन्त्रेण वाऽऽधानं भवति । मन्त्राणामन्ते रथन्तरयज्ञायज्ञिये सामनी च गीयेते ।[3] का० क० अध्वर्युर्वा ब्रह्मा रथन्तरं गायति । अत्र वामदेव्यसाम्नो गानमपि विधीयते ।[4]

**आहवनीयाधानम्**—का० क० उद्धरणे क्रियमाणे अश्वो अग्नेः पुरस्तादग्रतो युवा तरुणः पूर्ववाट् अग्रे याति, मन्थनकाले योऽश्व सोऽत्रापि भवति । आहवनीयोद्धरणे च यजमानः सम्भारानधिष्ठाय प्राङ्मुखेऽश्वे अग्रतो नीयमाने आहवनीयखरसमीपे तं स्थापयित्वा अश्वपदं द्विवारं स्पृष्ट्वा तृतीयेनाग्निमादधाति । ततो यजमानोऽग्नेः पुरस्तात्परिक्रम्य इध्मस्याग्रभागं हस्तेन गृहीत्वा 'योरिति' 'भूम्नेत्याह' (शु० य० ३।५) स तिसृभिः सार्पराज्ञीभिर्ऋग्भिः तमाहवनीयं चोपतिष्ठते ।[5] आ० क० त्वर्धोदिते सूर्ये यजमान आहवनीयमादधाति, विकल्पे चोदिते सूर्ये ब्रह्मवर्चसकाम आदधीत । तत्र कल्पे आहवनीये

1. अत्र वरुणभृगुऋभुवसिष्ठादित्यादयः प्रजानां पतयो (मूलपुरुषाः) आसन्नित्यैतिह्यमपि ध्यातव्यम्—तच्च द्रष्टव्यम्—
   'त्रयः प्राजापत्या देवा मनुष्या असुराः' (बृ० उ० ५।२।१)
   'आदित्या इमाः प्रजाः' (काठक सं० पृ० १०२)
   'आदित्या वा इमाः प्रजाः' (ताण्ड्यब्राह्मणे १३।९।५)
   'द्वय्यो ह वा इदमग्रे प्रजा आसुः आदित्याश्चैवाङ्गिरसश्च' (श० ब्रा० ३।५।१।१३)
   'विवस्वानादित्यस्तस्येमाः प्रजाः' (श० ब्रा० ३।१।३।५)
   'ऐडीश्च वा इमाः प्रजाः' (काठक सं० ११।१०)
   एवमृभुश्च रथकाराणामादिपूर्वज आसीत्, एतच्चैतिह्यं पूर्वमेवोल्लिखितम् ।
2. आ० श्रौ० (५।३।११।८)
3. आ० श्रौ० (५।३।११।७)
4. का० श्रौ० (४।९।७-८,१२)
5. का० श्रौ० (४।९।१३-१८), आ० श्रौ० (५।४।१४।४,५,७,१७)

उद्ध्रियमाणे वामदेवस्य साम्नो गानं भवति, सर्वे ऋत्विग्यजमाना अश्वं पुरस्तात्कृत्वा प्राचीं गच्छन्ति, आहवनीयस्य दक्षिणतो ब्रह्मा रथं रथ-चक्रं वा वर्तयति यावच्चक्रं त्रिः परिवर्तते, का० कल्पवदत्रापि यज-मानस्तृतीयेनाश्वपदेनाग्निं हरति, तद्वच्चात्र पूर्ववाडश्वस्तदभावेऽनड्-वान् वा भवति ।[1] आ० क० अर्धभागे यजमान ऋत्विग्भ्यो वरं दक्षति ।[2] ऊर्ध्वभागे च हिरण्यं निधाय अध्वर्युः 'नाकोऽसि बुध्न-प्रतिष्ठेति' आक्रमति ।[3] आहवनीयस्य पुरस्तात्प्रत्यङ्मुखो वाऽश्वो धार्यते ।[4] आपस्तम्बेन त्वश्वस्य स्थाने न हि केवलमड्वान् विकल्प्यते अपितु कमण्डलुपशुरजोऽपि वा विकल्प्यते ।[5] अथ यजमानस्तस्य पशोस्तृतीये-नोपस्पर्शनानन्तरं मन्त्रान् जपति, अरण्येऽनुवाक्या भवति, ततो यज-मानस्तिष्ठन् आहवनीयमादधाति, पूर्ववत् श्येतवारवन्तीययज्ञायज्ञियं सार्पराज्ञीयधर्मशिरसां गानं च भवति ।[6]

**दक्षिणाग्न्याधानम्**—का० क० गार्हपत्यादग्नेरेकदेशमादाय दारु-भिर्ज्वलन्तं दक्षिणग्निखरे स्थापयति ।[7] आ० क० आग्नीध्रस्तु लौकिक-मग्निमाहृत्य मथित्वा वोर्ध्वज्ञुरासीनो दक्षिणाग्निमादधाति, यज्ञा-यज्ञीये गीयमाने यथव्यधिानेन पूर्ववत् व्याहृत्यादि च जपति ।[8] का० क० वक्ष्यमाणाभ्यामरणीभ्यामग्निं निर्मथ्य गार्हपत्यागारे खरस्य मध्ये वा दक्षिणाग्निं स्थापयति । अथवा तन्मते हि वैश्य कुलादम्बरीषाद् (भ्राष्ट्राद्) महानसाद्वाऽऽहृत्य गार्हपत्यागारेऽग्निमादधीत ।[9] आ० क०

---

1.
2. आ० श्रौ० (५।४।१४।११)
3. आ० श्रौ० (५।४।१४।१२)
4. आ० श्रौ० (५।४।१४।१५)
5. 'पूर्ववाडश्वो भवति', 'तदभावेऽनड्वान् पूर्ववाडेतानि कर्माणि करोति इति पैङ्गायनिब्राह्मणं भवति' । कमण्डलुपद आदधातीति बह्वृच-ब्राह्मणम्', 'अजस्य पद आदधीतेति वाजसनेयकम्'
(आ० श्रौ० ५।४।१४।२४-२५, १५।१-२)
6. आ० श्रौ० (५।४।१५।३,५,६,७)
7. का० श्रौ० (४।६।१६)
8. का० श्रौ० (४।७।१६)
9. का० श्रौ० (४।७।१६)

ब्राह्मणराजन्यवैश्यशूद्राणां यो असुर इव पुष्टो भवेत्तस्य गृहात् पुष्टि-कामो दक्षिणाग्निमाहरेत् ।[1] आपस्तम्बवचनाच्च प्रतीयते यत्तस्य काले भारते वर्षे असुरा निवसन्ति स्म, ते विस्मृता नाभूवन्निति । अत्र का० क० यजमानो दिवा रात्रौ वाऽश्नाति । ततो यजमानो अस्तमय-कालमसीपे आहवनीयागारस्य पुरस्तादुपविष्टो देवान् पितॄँश्चाह्वयति—'देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे........।' (का० श्रौ० ४।७।१७–१८) ।

**सभ्यावसथ्ययोराधानम्**—का० क० दक्षिणाग्नेराधानान्तरं गार्ह-पत्यवत्सभ्यसंज्ञकमग्निं निर्मथ्य यजमानस्तं सभायां स्थापयति, एवं चावसथसंज्ञकमग्निं चावसथे स स्थापयति ।[2] आ० क० तु यजमानो लौकिकाग्निमाहृत्य मथित्वा वाऽऽहवनीयाद्वाहृत्य यथव्यधानेन पूर्व-विहितविधानवदेव सभ्यावसथ्यौ आदधाति ।[3]

**समिदाधानम्, पूर्णाहुतिश्च**—आ० क० ततस्त्रिष्वग्निषु आश्वथ्य-स्समिधः प्रत्येकं यजमान आदधाति, एवं शमीमय्या तिस्रस्समिधः, तथा चान्येषां वृक्षाणां च समिध आहवनीय आदधाति ।[4] तत उ० क० यजमानस्तूष्णीमग्निहोत्रं जुहोति न वा जुहोति पूर्णाहुत्यन्ते ।[5] ततो वरदानव्रतविसर्जनादीनि च कर्माणि भवन्ति ।[6] आ० क० तु सप्तवत्या ऋचा पूर्णाहुतिं जुहोति यजमानः ।[7] तत आ० क० यजमानो यथामन्त्रं पञ्चाग्नीनुपतिष्ठते ।[8]

**आग्नेयीष्टिः—तनूहवींषि च**—का० क० यजमानो द्वादशेऽहनि तनूहवींषि अग्नये पवमानायेत्यादीनि निर्वपति । सद्यो मासान्तरे, षण्मास्ये संवत्सरे वा निर्वपणविकल्पाः । तत्र कल्पे, 'अग्नये पवमानाय'

1. आ० श्रौ० (५।४।१४।१)
2. का० श्रौ० (४।६।२०)
3. आ० श्रौ० (५।५।१७।१)
4. आ० श्रौ० (५।५।१७।२-४)
5. का० श्रौ० (४।१०।४)
6. का० श्रौ० (४।१०।५-६)
7. 'समिधस्तप्तजिह्वा' इति (आ० श्रौ० ५।५।१८।१)
8. का० श्रौ० (५।५।१८।२)

प्रथमा, 'अग्नये पावकायाग्नये शुचये च द्वितीया, अदितये चरुस्तृतीया इष्टिर्भवति, अथवा आदित्यस्य चरोः पुरस्तादाग्नेय एव केवलो भवति ।[1] आ० क० तु यजमानः पावमानहवींषि सद्यो द्वादशाहे द्व्यहे त्र्यहे, चतुरहेऽर्धमासे मास्यृतौ संवत्सरे वा निर्वपेत्, तिस्र आज्याहुतयस्तु कात्यायनकल्पवद् हूयन्ते 'अग्नये पवमानायेत्यादि ।' अस्या इष्टेः शतमानं हिरण्यं दक्षिणा च विधीयते ।[2] अतः परमापस्तम्ब ऐन्द्राग्नमेकादशकपालम्, घृते चादित्यचरुम्, अग्नावैष्णवं चैकादशकपालम्, अग्नीषोमीयमेकादशकपालं विष्णवे शिपिविष्टाय च घृते चरुं विदधाति । तत्रापस्तम्बेन ऋत्विग्भोजनम्, दक्षिणा, यजमानकर्तृकमग्निहोत्रं च विधीयन्ते विस्तरेण ।[3] अत्रैव तेन वाजसनेयिनामादित्यचरुसम्बन्धि मतमुदाहृतम् ।[4]

**द्यूतम्**—कात्यायनेन तु केवलमेकस्मिन् सूत्रे सभ्याग्न्यागारे द्यूतविधानं सङ्केतितम् ।[5] आ० क० आग्नेयस्याष्टाकपालस्य निरुप्ते हवींषि, सभाया मध्ये अध्वर्युरधिदेवनमुद्धृत्यावीक्ष्य क्षान्नोप्य तेषु हिरण्यं निधाय 'निषसाद धृतव्रत' इति राजन्यस्य कृते जुहोति । अनेन प्रतीयते पूर्वयुगेषु यज्ञेषु क्षत्रियाणां द्यूतं प्रियं कृत्यमासीत् । सभ्यागारे ते सभ्या द्यूतं क्रीडन्ति स्म, नात्र संशयः । यज्ञसम्बन्धि द्यूतविषयकं विस्तृतविवरणं विवेचनम् चान्यत्रास्माभिरुपस्थापितं तत्रैव द्रष्टव्यम् । अथ प्रकृतमनुसरामः । तत आवसथाख्ये अतिथिगृहे पार्षदा निषीदन्ति, पूर्ववच्च हिरण्यहोमो भवति—

'प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ।' उत नोऽहिर्बुध्न्यश्शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वेदेवा ऋतावृधो हुवानाः स्तुता मन्त्राः हविशस्ता अवन्तु नः 'इत्युक्त्वा अध्वर्यु रक्षान् यजमानाय प्रयच्छन्नाह—'व्रीहिभ्यो

1. का० श्रौ० (४।१०।७-११)
2. आ० श्रौ० (५।६।२१।७-८)
3. आ० श्रौ० (५।७।२२ कण्डिका)
4. 'आदित्यं घृते चरुं सप्तदशसामिधेनीकं धेनुदक्षिणं सर्वेषामनुनिर्वाप्याणां स्थाने वाजसनेयिनस्समामनन्ति (५।७।२२।८)- तुलनीयं—आग्नेय एव वा पुरस्तादादित्यस्य धेनुरादित्यस्य' (का० श्रौ० ४।१०।११,१४)
5. '(यजमानः)' गां दीव्यध्वमित्याह' (का० श्रौ० ४।६।२१)

गा दिव्यताहिंसन्तः परूंषि विशसत' इति। ततः कृतसंज्ञकं द्यूताक्षं यजमानो जयति। न्युप्तेष्वक्षेषु चतुष्कणे विभज्यमानेषु यत्र सर्वे भागास्समा भवन्ति तत्कृतं नाम। ततस्तया गवाविजेता व्रीहीन् क्रीत्वा तैरोदनं पक्त्वा स सभासद्भ्य उपाहरति।[1] ततस्ते सर्वे पार्षदाः तद्भोजनमावसथे भुञ्जते।

**दक्षिणाविधानम्**—उ० क० आग्नेयीष्टेर्दक्षिणा च विधीयते, तयोरुभयोः कल्पयोः षड्, द्वादश–चतुर्विंशतिर्गाः प्रतिविभज्य दीयन्ते। का० क० भूयसीश्च गा यथाश्रद्धं दीयन्ते।[2] आ० क० यजमानो अजं पूर्णपात्रमुपबर्हणं सार्वसूत्रमग्नीध्रे, वह्निमश्वं ब्रह्मणेऽध्वर्यवे वा, अनडवाहमध्वर्यवे, धेनुं होत्रे, वासो मिथुनौ गावो नवरथ चैतानि साधारणानि सर्वेभ्यो दीयन्ते।[3]

**अन्वारम्भणीयेष्टिः**—अन्वारम्भतेऽनयेत्यान्वारम्भणीया (इष्टिः), सा च दर्शपूर्णमासारम्भविशेषः। का० क० यजमानो अन्वारम्भणादीनि कुर्यात् न वा कुर्यादिति विधानमस्ति।[4] अत्रेष्टौ यजमानः पूर्वं सारस्वतहोमं हुत्वाऽन्वारम्भणीयेष्ट्यामग्नावैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते द्वादशकपालं च निर्वपति, मिथुनौ गावौ च दक्षिणां ददाति।[5]

**आहिताग्नेर्व्रतानि**—का० क० आहिताग्निरनृतातिथ्यपनोदपूतिदार्वाधानबींसपक्वनाव्युदकानि च वर्ज्यंयति। स नित्यं ब्रह्मचारी, नित्याग्निधारी, क्षीरहोमी अग्निसमीपशायी च भवति, स एतान् नियमान् आधानानन्तरं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा पालयेत्।[6] आपस्तम्बोऽपि शब्दान्तरेणैवमेव विदधाति, तथा चाधिकान् नियमान् समाम्नाति, यथा—यजमानो हिङ्कृत्य वाग्यतः स्त्रियं प्रतिगच्छेत्, स नैतस्मिन् संवत्सरे पशुनाऽनिष्ट्वा मांसं भक्षयेदित्यादीनि।[7] इति च।

---

1. आ० श्रौ० (५।६।१६।१-४, २०।१-३)।
2. का० श्रौ० (४।१०।१२)
3. आ० श्रौ० (५।६।२०।१-१४)
4. 'ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्यजागरणेध्मपूर्वार्धान्वारम्भणसार्पराज्ञीर्न कुर्यात्।' (का० श्रौ० ४।१०.३)
5. आ० श्रौ० (५।७।२३।४-५,२४।५)
6. का० श्रौ० (४।१०।१५-१६)
7. आ० श्रौ० (५।७।२५।३-१६)

**पुनराधेयम्**—का० क० प्रतिज्ञातस्य (असिद्धस्य) पुनराधानं विधीयते।[1] तथा च का० क० राज्यकाम: क्षत्रिय: यशस्कामो वा ब्राह्मण: पुनरादधीतेति नियम:।[2] आ० क० च प्रायेणैवमस्ति, तन्मते यो यजमानो अग्नीनाधाय एतस्मिन् वर्षे वृद्धिं नाप्नुयात् स पुनराधानस्याधिकारी, प्रजापशुपुष्टिकामानामपि पुनराधानं विधीयते, अथवा हानौ पुत्रमरणे ज्ञातिनिग्रहे, अङ्गवैकल्ये, पत्नीमरणे च यजमान: पुनरादधीत।[3] का० क० च त्रिरात्रावराग्नीनुत्सृज्य च यजमान: पुनरग्निमादधीत, अथवा सद्य एवादधीत।[4]

**पुनराधानकाल:**—का० क० यदि आधानस्य विच्छेदो भवेत्तर्हि यजमान: पुनर्वसुनक्षत्रे वर्षासु मध्यदिने वाऽऽदधीत।[5] आ० क० रोहिणी, पुनर्वसू अनुराधा च पुनराधानस्य नक्षत्राणि, तत्र कल्पे च वर्षासु शरदि वा यजमानो अग्निं पुनरादधीत।[6]

आ० क० च यजमानोऽग्निमुद्वासनात् पूर्वमाग्नेयमष्टाकपालं वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमते अष्टाकपालं मैत्रं चरुं च निर्वपति (आ० श्रौ० ५।८।२६।४), भारद्वाजश्रौतसूत्रे चैवं विधानमस्ति, (द्रष्टव्यम् भार० श्रौ० ५।१७।८)।

का० क० पुनराधेये कुशैराधानं नेध्मेन, तत्र कल्पे च यजमानो व्रीहिमयमपूपमर्कपत्त्रयोरग्निना पक्वं गार्हपत्यस्थाने निदधाति, यावमपूपं तु आहवनीयस्थाने च निदधाति पूर्ववत्, तथा चाग्नेय: पञ्च-

1. 'आधानेन लक्षणेन यस्य प्रतिज्ञातमप्रकाश्यमुपजायेत स आधानाप्रतिज्ञात इति भर्तृयज्ञाचार्या:, यस्याधानानन्तरमेव प्रतिज्ञातमपगतं स आधानप्रतिज्ञात' इति कर्क: का० श्रौ० भाष्ये, पृ० ३८४)
2. का० श्रौ० (४।११।२)
3. आ० श्रौ० (५।८।२६।३)
4. का० श्रौ० (४।११।३-४)
5. का० श्रौ० (४।११।५-६)—तुलनीयं च—'पुनर्वस्वोरादधीत द्वे पुनराधेयस्य नक्षत्रे यत् पुनर्वसू' (तै० सं० १।५।१।४) तथा हि 'तदाहु: कस्मिन्नृतौ पुनरादधीतेति वर्षास्विति हैके आहुर्वर्षासु वै सर्वे कामा सर्वेषामेव कामानामाप्त्यै मध्या वर्षे पुनर्वसू नक्षत्रमुद्वीक्ष्य पुनरादधीत' (शांखायनब्राह्मणे १।३)
6. आ० श्रौ० (५।८।२७।५-६)

कपालं स निर्वपति, आ० क० तु द्वादशकपालादीनां विधानं दृश्यते अथवा प्रथम आज्यभाग आग्नेय एव, द्वितीयस्तु आग्नेय पवमानाय इन्दुमते (आ० क० अप्सुमते) वा कर्त्तव्यः। तत्र कल्पे च हिरण्यमनड्वान् वा दक्षिणा भवति। अन्यत्सर्वमग्न्याधेयवत् क्रियते।[1]

आ० क० तु यजमानो वानस्पत्यान् पार्थिवान् सम्भारान् च सम्भरति, पुरस्तात् स्विष्टकृतः सप्ताहुतीर्जुहोति।[2] ततो यजमान आयतनेषु पुराणान् दर्भान् संस्तीर्य 'सार्पराज्ञीभिर्ऋग्भिर्गार्हपत्यमादधाति, मध्यदिने त्वितरानग्नीन् ततः सप्तवत्या ऋचा अग्निहोत्रं च स जुहोति, ततोऽष्टाकपालं पञ्चकपालं वा पुरोडाशं निर्वपति। अत्र सर्वमाग्नेयं भवति।[3] अत्र कल्पे का० क० वत् शतमानं हिरण्यं दक्षिणा, अथवा पुनस्संस्कृतो रथो वा दीयते। तन्मते च यदीतराणि न विद्येरन्नप्यनड्वाहम् वा दद्यात्।[4] अत्राचार्येण पैङ्गायनिब्राह्मणवचनमुदाहृतम्।

**तृतीयाधानम्**—तैत्तिरीयसम्प्रदाये तृतीयाधानमपि श्रूयते, आपस्तम्बभारद्वाजाभ्यामत्र प्रसङ्गे चालेखनाश्मरथ्याचार्ययोर्मतान्युद्धृतानि।[5] आ० क० यदि यजमानस्तृतीयमादधीत, ततस्य एतान् होमांश्च जुहोति—

'लेकस्सलेकस्सुलेक' इति।[6]

## (५) अग्न्युपस्थानम्

**अग्न्युपस्थानम्**—कात्यायनेन पूर्वमग्न्युपस्थानं प्रोक्तं ततो अग्निहोत्रमाख्यायते, आपस्तम्बस्तु पूर्वमग्निहोत्रं कथयित्वा पश्चाच्चाग्न्युपस्थानं वर्णयति। वयं तु यथाप्रतिज्ञातं कात्यायनीयं क्रममनुसरन्तः पूर्वमुपस्थानं प्रतिपादयामः।

---

1. का० श्रौ० (४।११।७-१३)
2. अपि वा पञ्च पार्थिवान् संभारानाहरति एवं वानस्पत्यान्।' (आ० श्रौ० ५।८।२७।८)
3. आ० श्रौ० (५।८।२७ कण्डिका)।
4. आ० श्रौ० (५।८।२९।४) —'अनुडुहि ह वा एते च कामा अतश्च भूयांस इति पैङ्गायनिब्राह्मणं भवति।
5. आ० श्रौ० (५।८।२९।१४), (भार० श्रौ० ५।२१।१३)
6. आ० श्रौ० (५।८।२९।११)—तुलनीयं भारद्वाजसूत्रेण—'लेकः सलेकः सुलेक.' इति (भार० श्रौ० ५।२१।११)।

का० क० यजमानः सायमाहुत्यां हुतायां विकल्पेन वात्सप्रेणानुवाकेन गार्हपत्यमाहवनीयं चोपतिष्ठते। तत्र 'प्रयन्तोऽध्वर'मित्यन्तम् (शुक्लयजुर्वेदे ३।११) आरभ्य 'परिते दूडभ' इत्यन्तं (शु० य० ३।३६) वात्सप्रोपस्थानं समाम्नायक्रमेणैव कर्त्तव्यम्।[1]

आ० क० चैवं हि यजमानेन 'उपप्रयन्तोऽध्वरमिति' षड्भिर्ऋग्भिः, 'इन्द्राग्नी रोचना दिवं' इत्यपरपक्षे अष्टाभिर्ऋग्भिरेवोपस्थानम् कर्त्तव्यम्। तथा हि 'ममाग्ने वर्चो विहवेष्वस्त्विति' चतस्र ऋचः पुरस्तादग्नीषोमीयाः पूर्वपक्षे, तथा च इन्द्राग्न्या ऋचा अपरपक्षे आहवनीयोपस्थानम्, त्रिश्चित्रावसुना ऋचा सायमुपतिष्ठते यजमानः, त्रिरर्वाग्वसुना ऋचा च प्रातरुपतिष्ठते। ततः स 'इन्धानस्त्वा शतं हिमा' इति जप्त्वा त्रिभिर्यजुर्भिरेकत्राग्नौ चतस्रस्समिध आदधाति।[2]

तत उ० क० यजमानो गां प्रति गच्छति। तत्र का० क० स गोः स्पर्शनादिकं कृत्वा गार्हपत्यमुपतिष्ठते। तां गां पुनरुपस्पृश्य 'सोमानमिति' (शु० य० ३।२८–३६) मन्त्रान् जपति, ततः स पुत्रनाम गृह्णाति।[3] आ० क० यजमानः समिधमाधाय मुखं प्रक्षाल्य गोष्ठमुपतिष्ठते, तत्र स गोवत्सं, वत्सां चोपस्पृश्य 'उप त्वाग्ने दिव' इति तिसृभिर्गायत्रीभिर्गार्हपत्युमुपतिष्ठते, एवमन्यान् मन्त्रांश्च स जपति। गार्हपत्योपस्थानानन्तरं यजमानः पुनश्च गृहान् पशून् वा प्रेक्षते, ततः सः प्राजापत्येन तृचेन सूक्तेन आहवनीयमुपतिष्टते।[4] का० कल्पवदत्रापि पुत्रनामग्रहणादिकं च भवति।[5]

**छल्लकोपस्थानम्**–कात्यायनस्त्वस्यैवोपस्थानस्य स्थाने वैकल्पिकं क्षुल्लकोपस्थानमाह। तन्मते भूर्भुवस्वरिति यजमान उभावग्नी उपतिष्ठते।[6] आपस्तम्बेनेदं वाजसनेयिनां मतमुदाहृतम्।[7] तन्मते

1. का० श्रौ० (४।१२।१-३)
2. आ० श्रौ० (६।५।१६।१-१२)
3. का० श्रौ० (४।१२।६-१०)
4. आ० श्रौ० (६।५।१७ कण्डिका)
5. आ० श्रौ० (६।५।१८।२)
6. का० श्रौ० (४।१२।१२)
7. 'भूर्भुवस्सुवसुप्रजाः प्रजया भूयासमिति' उपतिष्ठेतेति वाजसनेयकम्।' (आ० श्रौ० ६।५।१८।७)

चैके वात्सप्रेणैव सायं प्रातरुपस्थानमाहुः। अथवा गोसूक्तेन अश्वसूक्तेन वा विकल्पेनोपस्थेयः, अथवा प्रातरवनकेनोपतिष्ठते ।[1]

**प्रवासोपस्थानम्**—पुराकाले अग्निहोत्रस्योपस्थानस्य च ईदृशी महिमा अनिवार्यता चास्तां यत्प्रवासेऽपि यजमानो अग्न्युपस्थानादिकानि नैत्यकानि कर्माणि करोति स्म। अत्र च विचिकित्सायां प्रवत्स्यता यजमानेन अनिवार्यरूपेण अग्न्युपस्थानमपि करणीयमासीत् तदुक्तं कात्यायनेन कर्मप्रदीपे—

'निक्षिप्याग्निं स्वदारेषु परिकल्प्यऽऽर्त्विज्यं तथा।
प्रवासेत्कार्यवान् विप्रो मृषैव न चिरं क्वचित्।
मनसा नैत्यकं कर्म प्रवसन्नप्यतन्द्रितः।
उपविश्य शुचिः सर्वं यथाकालमनुवदेदिति ॥'

आपस्तम्बमते योऽन्यं प्रवत्स्यन्तं कामयेत यदयमनामयमेव पुनरागच्छेदिति स तं प्रति स्वस्त्ययनं पठेत्—मा नश्शंसो अररुषो धूर्तिरित्यादि ।[2]

का० क० प्रवसन् यजमानो यथाकालं याजमानं कुर्यात्, अग्निहोत्रसम्बन्धि उदकभक्षणादि कुर्यात्। अतः प्रवसता तेन नित्यं कर्म यथाकालं मनसा चिन्तनीयम्, तथा हि मुण्डनव्रत्याशनाधःशयनव्रतग्रहणादिकं धर्ममात्रत्वात् उपकारकं विष्णुक्रमादिकं च कर्त्तव्यम्, एतत्सम्बन्धे

---

1. आ० श्रौ० ६।५।१६।७, २०।१)।
'प्रातरवनेकोनाम शाखान्तरीयमुपस्थानम्।'

2. आ० क० (६।५।१७।१२), स्वस्त्ययनपाठः पुराकाले प्रयाणस्यावश्यकमङ्गमासीत्, यथा रामायणे कौशल्या रामं प्रति स्वस्त्ययनं चकार—
'तथा हि रामं वनवासनिश्चितं ददर्श देवी परमेण चेतसा ॥
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥
तत सा पपाठ—'स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा' इत्यादीन् वैदिकदेवान् स्तुतवती (द्रष्टव्यम् अयोध्याकाण्डे २४, २५ सर्गे)।

एवं च महाभारते विनता गरुडं प्रति स्वस्त्याकाङ्क्षिणी बभूव—
'इहासीना भविष्यामि स्वस्तिकारे रता सदा।
अरिष्टं व्रज पन्थानं पुत्र कार्यार्थसिद्धये ॥' (आदिपर्वणि २।६)

शतपथब्राह्मणे (११।३।१।१-६) केचन प्राचीनाः श्लोका उदाहृताः, यैः प्रवासेऽपि अग्निहोत्रादिकं विधीयते। कात्यायनेनेदं श्रुतिप्रामाण्यं सूत्रे चोल्लिखितम् (का० श्रौ० ४।१२।१६) एते श्लोकाः प्रामाण्यगौरवात् पादटिप्पण्यामुदाहृताः।[1]

आ० कल्पे च कात्यायनकल्पवद् यजमानो विहाराभिमुखो अग्न्युपस्थानं जपति, अग्नीन् चोपतिष्ठते।[2] उ० क० यजमानो वाग्यतः प्रव्रजति।[3] उ० क० प्रवासात् चागत्य समित्पाणिर्यजमानो अग्नीन् (आहवनीयगार्हपत्यदक्षिणाग्नीन्) चोपस्थाय गृहानुपैति, वाचं च यच्छति,[4] तथा च यद्येनं राजा पिताऽऽचार्यो वान्तरेणाग्नीन् स्यात्, नैनमाद्रियते।[5] आपस्तम्बमते च यजमानः प्रतिनिवर्त्य एतानि कर्माणि च कुर्यात्—समिधादानम्, मैत्र्योपस्थानम्, दिगुपस्थानं च।[6] का० क० प्रवासादेत्य यजमानो मन्त्रपूर्वकं तूष्णीं वा सर्वान् पञ्चाग्नीनुपस्थाय 'गृहा मा बिभीतेति' (शु० य० ३।४१) मन्त्रेण गृहानागच्छति, 'क्षेमाय वः' (शु० य० ३।४३) इति च प्रविशति। पारस्करगृह्यसूत्रानुसारेण (१।१८) चात्र स पुत्रदर्शनजपादि च करोति—'अङ्गादङ्गात्, सम्भवसि' इत्यादि।[7] आ० क० च यजमान एभिरेव मन्त्रैर्गृहप्रवेशनादि करोति।[8]

**आ० कल्पे वास्तोष्पतीयहोमः**—तत्र कल्पे यजमानः सदारः प्रवासं गमिष्यन् वास्तोष्पतिदेवत्यहोत्रं करोति, केचिदाहुर्यदा सोऽत्यन्तं वसति

1. किंचिद् विद्वान् प्रवसति अग्निहोत्री गृहेभ्यः। कथंस्विदस्य काव्यं कथं संततो अग्निभिः॥ यो जविष्ठो भुवनेषु विद्वान् प्रवसन् विदे। तस्य काव्यं तथा संततोऽग्निभिः। यत्सदूरं परेत्य अथ तत्र प्रमाद्यति। कस्मिन्नस्य हुताहुतिर्गृहे यामस्य जुह्वति। यो जागार भुवनेषु विश्वा जातानि योऽबिभः। तस्मिन् यस्य हुताहुतिर्गृहे यामस्य जुह्वति।
(श० ब्रा० ११।३।१।५-८)
2. आ० श्रौ० (६।७।२४।१-६, २५।१)
3. का० श्रौ० (४।१२।१७), आ० श्रौ० (६।७।२४।८)
4. का० श्रौ० (४।१२।१८), आ० श्रौ० (६।७।२५।३)
5. आ० श्रौ० (६।७।२५।६)
6. आ० श्रौ० (६।७।२५।७)
7. का० श्रौ० (४।१२।२०-२५)
8. आ० श्रौ० (६।७।२७।३-५)

चिकीर्षति तदैव यायावरधर्मेण तेन अग्नयो नेयाः। सयजमानो अनसि चाग्नीन् समारोप्य भाण्डादिकं चारोप्य मार्गे होमादिकं करोति स्म। भारद्वाजोऽप्यैवं यायावरधर्मेण प्रवासेऽध्वनि चार्धमासाग्निहोत्रहोमं विदधाति।[1]

## (६) अग्निहोत्रम्

**अग्निहोत्रमहिमा**—आधानसिद्धेषु वैतानिकाग्निषु अग्निहोत्रादीनि कर्माण्यनुष्ठेयानि भवन्ति। तत्राग्निहोत्रं नाम अग्न्युद्देशेन सायं प्रातः क्रियमाणो होमविशेषः। सायणस्त्वाह—'अग्नये होमं होमोऽस्मिन् कर्मणि इति बहुव्रीहि व्युत्पत्याग्निहोत्रमिति कर्मनाम, अग्नये होममिति तत्पुरुषव्युत्पत्या हविर्नाम।'[2] शतपथे चाग्निहोत्रं दीर्घसत्रमुच्यते यच्च मरणपर्यन्तं मनुष्येण कर्त्तव्यमिति। दीर्घसत्रं ह वा एत उपयन्ति येऽग्निहोत्रं जह्वत्येतद्वै जरामर्यं सत्रं यदग्निहोत्रं जरया वाव ह्येवास्मान्मुच्यते मृत्युना वा।[3] तैत्तिरीयसंहितायामग्निहोत्रं परमयज्ञः कथितः।[4] प्रजापतिना परमेष्ठिना (कश्यपेन) चेदमग्निहोत्रं कर्म जीवनपर्यन्तं कृतं तेन स पमभेष्ठी उच्यते। ऐतरेयस्य मते सदा उदिते सूर्ये प्रातरग्निहोत्रं कर्त्तव्यम्।[5] तन्मते 'चतुर्विंशे ह वै संवत्सरेऽनुदितहोमी गायत्री लोकमाप्नोति।[6] शांखायनब्राह्मणे चाग्निहोत्रं देवातिथ्यमुक्तम्।[7]

**होमद्रव्याणि**—श्रुतिषु कल्पसूत्रेषु च पय आदीनि बहूनि होमद्रव्याणि आम्नातानि। तत्र पयो[8] मुख्यं द्रव्यं क्रत्वङ्गतयाऽऽम्नातम्।

---

1. भार० श्रौ० (२।६।२)
2. तै० ब्रा० भाष्ये (२।१।२)
3. श० ब्रा० (१२।४।१।१), तथा हि काठके चोक्तम्—'अग्निहोत्रम् ह वै नाम नास्मादन्यस्समानेषु वसीयान् भवति यस्त्वैवमग्निहोत्रं हूयते।' (६।१।१)
4. तैत्तिरीयसंहितायाम्—'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् तेन स परमां काष्ठामगच्छत्।'
5. ऐ० ब्रा० (२५।४)
6. ऐ० ब्रा० (२५।४)
7. 'उदिते होतव्यमनुदिते इति मीमांसते। स य उदिते जुहोति प्रवसत एवैतन्महते देवातिथ्यं करोत्यथऽनुदिते जुहोति संनिहितयैवैतन्महते देवातिथ्यं करोति।'
8. 'तत्पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति' (श० ब्रा० १४।४।३।४)

इतराणि च यवागूतण्डुलदधिघृतरूपाणि द्रव्याणि काम्यानि श्रुतावाम्नातानि। तदुक्तं जैमिनीयब्राह्मणे[1] च (जनकयाज्ञवल्क्ययोस्संवादे)—'तद् ह जनको वैदेहो याज्ञवल्क्यं पप्रच्छ 'वेत्थाग्निहोत्रं याज्ञवल्क्या इति वेदेति होवाच। किम् इति। पय इति। यत् पयो न स्यात् केन जुहुया इति। यद् अन्यद् धान्यं तेनेति। यदन्यद् धान्यं न स्यात् केन जुहुया इति। आरण्याभिरोषधिभिरिति। यद् आरण्या ओषधयो न स्युः केन जुहुया इति, अद्भिरिति। यदापो न स्युः केन जुहुया इति स होवाच न वा इह तर्हि किंचनासीद् अथैतद् उ हूयत इव सत्यं श्रद्धायाम् इति। तं होवाच वेत्थाग्निहोत्रं याज्ञवल्क्य नमस्तेऽस्तु ……।'[2] यदा मांसमया यज्ञाश्च प्रचलिता अभवन् तर्हि त्वङ्मांसलोहितादीनि अपि हविष्षु सम्मिलितानि कृतानि, तदुक्तं धूर्तस्वामिना—'तत्र यज्ञसाधनानि हवींषि पशुप्रभवं दशविधं पयो दध्यामिक्षा वाजिनं वपा त्वङ्मांसं लोहितं पशुरस इति।' 'ओषधं द्वादशविधं—ओषधयस्तण्डुला, पिष्टानि, फलीकरणा, पुरोडाशः, ओदनं, यवागू, पृथुकाः, लाजाः धानास्सक्तवः सुरेति। आकाशो वायुरापो मधुमांसे कृष्णलानि किंशुकानि समिधः शकलानि बर्हिः करीराणि खर्जूराणि स्वाहाकारः वषट्कारप्रदानानि च। अग्निशरीरं वायुश्शरीरी तुषा इत्येतान्यपि यज्ञसाधनानि हवींषि देवतार्थत्वात्।'[3]

---

1. जै० ब्रा० (१।१९), शतपथस्याख्यानेन सह च तुलनीयम् (१४।६।३।१३)
2. पुराणेषु चतुर्दश ओषधयो हवींषि चोक्त्वा—

'ओषध्यो यज्ञियाश्चैव ग्राम्याख्याश्चतुर्दश।
व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः॥
प्रियंगुसप्तमा ह्येते अष्टमी तु कुलत्थिका।
श्यामाका त्वथ नीवारा जर्तिसगवेधुका॥
कुरुविन्दा वेणुयवास्तथा मर्कटाश्च ये।
ग्रामारण्याः स्मृता ह्येता ओषध्यस्तु चतुर्दश॥
उत्पन्नाः प्रथमा ह्येता आदौ त्रेता युगस्य तु॥

(वायुपुराणे अध्यायः, ८)

तथा हि शतपथे च श्रूयते—'दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवौ तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दध्नि मधुनि घृतमुपसिञ्चत्याज्यस्य जुहोति।'

(श० ब्रा० १४।६।३।१३)

3. आ० श्रौ० भाष्ये, पृ० २-४

तत्राग्निहोत्रकर्मणि अग्निमुख्या देवता प्रजापतिरङ्गदेवता स्विष्टकृत्स्थानीया, सायंकाले प्रातश्च सूर्यो मुख्यो देवता प्रजापतिरङ्गदेवता। सूत्रकाराणां मते चास्याग्निहोत्रस्य महत्प्राशस्त्यमकरणे च महान् प्रत्यवायो जन्मनो वैयर्थ्यं च बहुप्रतिपादितं श्रुतिषु स्मृतिषु च।

इदं च कर्म यावत्संभवं यजमानेन स्वयं कर्त्तव्यम्, तदशक्तौ च ऋत्विजापि कारयितुं शक्यते 'तस्यैतस्याग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्[1]' इति तैत्तिरीयश्रुतौ। ऋत्विक्कर्त्तृत्वावबोधनात् स च ऋत्विगध्वर्युरेव भवितुमर्हति।

**अग्न्युद्धरणम्**—उ० क० अध्वर्युर्यजमानमग्न्युद्धरणाय सायं प्रातश्च प्रेरयति, स्वयं होमपक्षे तु प्रैषाभावः प्रकीर्तितः।[2] यजमान उपवेषमादाय गार्हपत्यमभिमन्त्र्य गार्हपत्यादाहवनीयमुद्धरति, दक्षिणाग्निस्तु यजमाने नित्यं धार्मो भवति। नित्यधृतानामपि प्रादुष्करणमनस्तमिते कर्त्तव्यम्।[3] तथा च शांखायनोऽप्याह—'पुरा छायायां संसर्गात् उद्धरणम्'[4]। आपस्तम्बेनात्र वाजसनेयकं मतमुदाहृतम्, तदनुसारेण दक्षिणाग्निम् उपवसथ एवाहरेयुरथ च नवावसाने एवैनमाहरेयुरिति।[5] पौर्णमास्याममावस्यायां वाग्न्याधानदिवस उपवसथ उच्यते, तदा हि नवगृहे (नवावसाने) एवं दक्षिणाग्निमाहरेत् यजमानः, इत्येवं वाजसनेयकं विधानमस्ति, तथा हि कात्यायनोऽपि सूत्रद्वयोरैतद् विधानं चानुवदते।[6]

**अलङ्करणम्**—कात्यायनसम्मतौ यजमानस्तूष्णीमुपविश्य अग्नीन् शोधयति (परिसमूहति), तृणादीन् चाग्नौ प्रक्षिपति। एतदेव कर्म आपस्तम्बेनालङ्करणमुक्तम्।[7] तन्मते सायं प्रातश्चैते अलङ्करणे कर्त्तव्ये।

---

1. तै० सं० (२।३।६)
2. का० श्रौ० (४।१३।१), आ० श्रौ० (६।१।१।३)
3. तदुक्तं कात्यायनेन कर्मप्रदीपे—'सूर्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिशदाङ्गुलैः। प्रादुष्करणमग्नीनां प्रातः सायं च दर्शनात्' (१।६।१)।
4. शां० श्रौ० (२।६।२-४)
5. का० श्रौ० (६।१।२।१५)
6. 'एकेषामुपवसथे', 'नवावसिते वा' (का० श्रौ० ४।१३।७-८)
7. 'परिसमूहनेनाग्नीनलङ्कुर्वन्ति' (आ० श्रौ० ६।१।३।१), (का० श्रौ० ४।१२।१६)

तथा चाग्नीनां दर्भैस्तृणैर्वा परिस्तरणमपि अध्वर्युः करोति ।[1] उभयोः कल्पयोरेतत्कर्म मन्त्रजपपूर्वकं भवति ।

**दोहनम्**—का० क० यजमानो नवावसिते गृहे दक्षिणाग्नौ मांस-वर्जं सर्वमन्नं पचेत्, अध्वर्युरेव पयो दक्षिणाग्नौ अधिश्रयति ।[2] ततोऽध्वर्युः तत्पयः पक्वा यजमानं प्रत्याह—एतत्पयो ब्राह्मणं पायस्व, ततः स यजमानस्तत् पयो ब्राह्मणं पाययति । ततो अग्नीनां पर्युक्षणादि कर्म भवति ।[3] एवं परिषिञ्जनादि कर्म आपस्तम्बोऽपि विदधाति ।[4] उ० क० दोहनार्थं यजमानेन प्रसृताकृतिरूर्ध्वकपाला चक्रावर्ती आयं-कृताग्निहोमस्थाली गृह्यते ।[5] का० क० दोग्धी गौः पुंवत्सा भवति ।[6] आ० क० दोग्धा विहारस्य दक्षिणे देशे तिष्ठन्तीमग्निहोत्रीं (धेनुं) दोहात्पूर्वमनुमन्त्रयते 'इडासि······त्वाह्वयामीति ।[7] उ० क० तां गां शूद्रो न दुह्यात् ।[8] आपस्तम्बस्तथापि विकल्पते, तन्मते शूद्रो दोग्धु-मर्हति, तत्कल्पे शूद्रोऽग्निहोत्रस्थाल्यामेव दोग्धि, एतेन कल्पेन ज्ञायते यद् आपस्तम्बकाले शूद्राणां कात्यायनकालिकी दुरवस्था नासीत्, ते सवर्णानामार्याणां यज्ञहवींष्यादीनि स्पृशन्ति स्म, तेषां स्पर्शनेन यज्ञीयं हविर्नादुष्यत्, इति आपस्तम्बकालिकी मान्यता आसीत् इति अवगम्यते । आपस्तम्बस्तु पुनर्विदधाति, 'यश्च कश्चिदपि शूद्रोऽशूद्रो वा दोग्धा स होमधेनोः पूर्वौ स्तनौ ज्येष्ठस्य ज्येष्ठिनेयस्य यो वा गतश्रीस्स्यात्तस्यार्थं दुह्यात्, अपरौ स्तनौ कनिष्ठस्य कानिष्ठनेयस्य यो वानुजावरो यो वानुजावरो बुभूषति तस्यार्थं स दुह्यात् ।[9]

---

1. का० श्रौ० (४।१३।१५), आ० श्रौ० (६।१।३।६)
2. का० श्रौ० (४।१३।६)
3. का० श्रौ० (४।१३।१४-१६), आ० श्रौ० (६।२।५।४)
4. आ० श्रौ० (६।२।५।४)
5. का० श्रौ० (४।१४।१), आ० श्रौ० (६।१।३।७)
6. का० श्रौ० (४।१४।१)
7. आ० श्रौ० (६।१।३।८)
8. 'असतो वा एष संभूतो यच्छूद्रः' (आ० श्रौ० ६।१।३।१२), तुलनीयं च—'पद्भ्यां शूद्रोऽजायत' (ऋग्वेदे १०।६०।१२), का० श्रौ० (४।१४।१)
9. आ० श्रौ० ६।१।४।१)

**होत्रकालविधानम्**—श्रौतकर्मकाण्डिनां पुराकाले होत्रकालस्य सम्बन्धे महती विचारणा अभवत्, सर्वेषु ब्राह्मणेषु कल्पसूत्रेषु चास्य होत्रकालस्य मीमांसा दरीदृश्यते, कानिचित् मतानि पूर्वमुद्धृतानि। का० क० यजमानो अस्तमिते सूर्ये सायमग्निहोत्रं जुहोति, तत्रास्तमितलक्षणामाह सकर्मप्रदीपे—

यावत् सम्यङ्न भाव्यन्ते तमस्यृक्षाणि सर्वतः।
न च लोहितमपैति तावत्सायं च हूयते ॥[1]

तन्मते च प्रातर्होमस्तु अनुदिते सूर्ये कर्त्तव्यः। तथा च मनुः श्रुतिमनुवदति 'उदितेऽनुदिते चैव समयाध्युषिते तथा।[2] समयाध्युषितलक्षणमाह कात्यायनः—'तथा प्रभातसमये नष्टे नक्षत्रमण्डले। रविर्याविन्न दृश्येत समयाध्युषितं हि तत्।'[3] 'आपस्तम्बस्यैवं विधानम्।'[4]

आ० क० यजमानः सूर्येऽस्तंगते गां दोग्धि, तदैव स ईषदस्तमिते होमं करोति। अहोरात्रयोस्सन्धौ होतव्यमित्यस्य विधानस्य प्रामाण्ये आपस्तम्बः शैलालिब्राह्मणमुदाहृतवान्—'समुद्रो वा एष यदहोरात्रस्तस्येते गाधे तीर्थे यत्सन्धी तस्मात्सन्धौ होतव्यमिति शैलालिब्राह्मणं भवति।'[5] तथा तन्मते सायं चत्वारो होमकाला भवति, सन्धौ, प्रथमनक्षत्रदर्शने, प्रदोषे, निशायां वा।[6] तथैवं चत्वारः प्रातर्होमस्य कालाः—उषसि, उपोदये, अर्धोदिते, उदिते (सङ्गवे) वा। यस्मिन् काले प्रातः प्रकाशो भवति—तमोहानिश्च स उषःकालः, समीपे आदित्योदयः स काल उपोदयः, उदयादारभ्य उदिते यावत्सङ्गवम् (सङ्गच्छन्ते) गावो यदा दोहनार्थं तृणानादाय गताः स सङ्गवमुच्यते। सङ्गवान्तः प्रातःकाल इति च भवति। आपस्तम्बस्तु आपद्यपि होमकालान् विदधाति—अपराह्णे, पूर्वरात्रौ, मध्यरात्रौ, अपरात्रौ वा जुहुयात् किन्तु स्वस्थः पुरुषो नैतेषु कालेषु जुहुयात्।[7]

---

1. क० प्र० (१।३।३)
2. म० स्मृ० (२।१५)
3. का० श्रौ० भाष्ये उद्धृतः (पृ० ४१५)
4. तथा चापस्तम्बः 'उषस्युपोदयं समयाविषिते उदिते वा प्रातः' (श्रौ० सू० ६।१।४।६)
5. आ० श्रौ० (६।१।४।७)
6. आ० श्रौ० (६।१।४।८)
7. आ० श्रौ० (६।१।४।११)

**श्रपणम्**—उ० क० तत: सायं होत्रार्थं यथास्थानमुपविश्य यजमान आचामति, मन्त्रं च जपति, तत: स उपवेषेण गार्हपत्याङ्गारान्निसह्य बहिर्गतान् गार्हपत्ये कृत्वा अग्निहोत्रस्थाल्यामानीतं पयोऽधिश्रयति तेष्वङ्गारेषु । उ० क० ईषदधिश्रितं पयो वा प्रतिषिच्यते। ततो यजमानस्तत: शृतं पय उद्वास्य उन्नयनस्थाने प्रतिष्ठापयति ।[1]

**उन्नयनम्**—का० क० यजमानो होमार्थं वैकङ्कतं स्रुचं स्रुवं च प्रतप्य संमृज्य तिष्ठन् चतुर: स्रुवानुन्नयति ।[2] आ० क० यजमानो अग्निहोत्रहवणीं स्रुचं दर्भै: प्रक्षाल्य पूर्ववदुन्नयति, अत्र कल्पे स्रुवस्तु खादिरो भवति, वैकङ्कती चाग्निहोत्रहवणी भवति ।[3] का० क० स्थाल्यां यत्पय: परिशिनष्टि तद्ब्राह्मणो पिबति नाब्राह्मण: । ततो यजमान आहवनीये पलाशादिवृक्षोद्भवां प्रादेशमात्रीं समिधमादधाति–'अग्निर्ज्योतिषं त्वावायुष्मतीं प्राणवतीं स्वर्ग्यां स्वर्गायोपदधामि भास्वतीमिति ।[4] आ० क० यजमानो दशहोतारं मन्त्रं व्याख्याय पालाशीं समिधं 'स्वाहाग्नये वैश्वानरायेति' 'वाताय त्वेति चादधाति ।'[5]

**अग्निहोत्रहोम**:–का० क० अध्वर्युर्यजमानो वा प्रदीप्तायां समिधि उपरि आहुतिं जुहोति 'अग्निर्ज्योतिरिति', 'सजूरिति वा' (शु० य० ३।९–१०), तन्मते हि च ब्रह्मवर्चसकामस्तु 'अग्निर्वर्च' इति (शु० य० ३।९) मन्त्रेण, जुहुयात् । तूष्णीमुत्तरां च भूयसीं जुहुयात्, भक्षार्थं च भूमिष्ठं स्रुचि हवि: परिशिनष्टि, स्रुचं द्विवारं प्रक्रम्य च होमकर्त्ता कूर्चे निदधाति ।[6] आ० क० च होमकर्त्ता आदीप्ते, लोहिते, अङ्गारमये चाग्नौ न होतव्यम्, तन्मते यजमानो अप उपस्पृश्य पालाशीं समिधमादधाति, एकाम् द्वे, तिस्रो वा—'विद्युदसि विद्यमे पाप्मानृतात् सत्यमुपैमीति', 'एषा ते अग्ने समिदिति' द्वितीयाम्, 'रजतां त्वा हरितगर्भामिति तृतीयामादधाति । तन्मते च अध्वर्युरादीप्तायामर्चिषि, श्यायां धूपायत्यां वा ग्रामकामस्य ज्वलत्यां ब्रह्मवर्चसकामस्य, अङ्गा-

---

1. का० श्रौ० (४।१४।२-५), आ० श्रौ० (६।२।५।७-१०)
2. का० श्रौ० (४।१४।७-१०)
3. आ० श्रौ० (६।३।१२।२)
4. का० श्रौ० (४।१४।११-१३)
5. आ० श्रौ० (६।२।८।९-१०)
6. का० श्रौ० (४।१४।१४-१९)

रेषु च तेजस्कामस्य जुहुयात् ।[1] का० क० होमानन्तरं होमकर्त्ता स्रुवप्रणालिकां उपमृज्य तद्व्यलिप्तं हस्तं कूर्चे निर्मार्ष्टि, तथा स्वं पाणिं कूर्चस्य दक्षिणतो भूमावेवोत्तानं निदधाति, मन्त्रमिमं जपन्, 'स्वधा पितृभ्य' इति, तथा च पुष्टिकामो दक्षिणाग्नौ गार्हपत्ये च जुहोति—'पुष्टिं पुष्टिपतिर्दधात्विह प्रजां रमयतु प्रजापतिः। अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति। तूष्णीं च द्वितीयामाहुतिं हुत्वा अनामिकया यजमानः स्रुक्स्थं हुतशेषं द्विवारं प्राश्नाति ।[2] आ० क० चैवं यजमानः प्राचीनावीतीभूत्वा 'स्वधा पितृभ्य' इत्यादि वचनपूर्वकं लेपं निमृज्य चाङ्गुल्या जिह्वया हुतशेषं प्राश्नाति ।[3] का० क० स्रुक्स्थं हुतशेषं पात्रान्तरे नीत्वा यजमानो हस्ते वा कृत्वा पुनर्हविःशेषं भक्षयति, ततो–अग्निहोत्रहवणीं स्रुचमुदकेन पूरयित्वा अध्वर्युरुत्सिञ्चति–'देवान् जिन्व पितॄन् जिन्व' इत्यादि। ततो यज्ञोपवीती भूत्वा स स्रुचं पूरयित्वा उक्षति—'सप्तऋषीन् जिन्वेति', ततश्चतुर्थवारं स्रुचं पूरयित्वा कूर्चस्थाने त्रिर्निषिञ्चति--'पृथिवीक्षिते स्वाहेति',[4] आ० क० च यजमानो अप आचम्य पुनर्हविःशेषं प्राश्य अप आचम्य अग्निहोत्रहवणीं दर्भैः प्रक्षालयति, तत सः—कात्यायनकल्पवदेव स्रुचं पूरयित्वा सर्पान् ससर्पीन्, चोदकेन जिन्वति, तद्वत्, चतुर्थीं स्रुचं पूरयित्वा स 'पृथिव्याममृतं जुहोमि स्वाहेति शेषं पत्न्या अञ्जलौ निनयति ।[5] तथा हि अत्रापि पुष्टिकामस्य गार्हपत्ये होमः पूर्ववद् विधीयते ।[6]

आपस्तम्बमताच्च, अप्राश्य वा यदा आहवनीये होमः कार्यस्तदनन्तरं प्राशनादि कृत्वा सप्तर्षिभ्यो हूयते, अथवा कल्पान्तरेण अप्राश्य गार्हपत्यदक्षिणाग्नयोरेव होमो विधीयते। किमसौ निन्दितत्वादनादरणीय एवापरहोम इति प्रश्ने तेनाचार्येण बह्वृचब्राह्मणमुदाहृतम्—'सर्वे वा एते (अग्नयः) होमार्था आधीयन्ते, चतस्रो गार्हपत्ये जुहोति, चतस्रोऽन्वाहार्यपचने, द्वे आहवनीये, इति दश सम्पद्यन्ते, दशाक्षरा

1. आ० श्रौ० (६।३।६।१-४, १०।३)
2. का० श्रौ० (४।१४।२३-२६)
3. आ० श्रौ० (६।३।११।५)
4. का० श्रौ० (४।१४।२७-२८)
5. आ० श्रौ० (६।३।१२।२-४)
6. आ० श्रौ० (६।४।१३।२)

विराट्, विराजा यज्ञसंमित' इति बह्वृचब्राह्मणं भवति ।'[1]

**काम्या होमाः**—अग्निहोत्रहोमानन्तरमुभाभ्यामाचार्याभ्यां काम्या होमाः प्रतिपादिताः । तत्र का० क० स्वर्गकामो यजमानः सायमस्तमितमात्रे, प्रातश्च सूर्योदयसमीपे जुहुयात् । विगते तमसि सायं प्रातश्चायुष्यकामो जुहुयात्, यस्मिन् काले सायं प्रातश्च ग्रामे पशवो भवन्ति, तदा पशुकामो जुहुयात्, सुप्ते जनलोके श्रीकामो जुहुयात् । एवमाचार्येण काम्या होमकाला उक्ताः, इदानीं काम्या अग्न्यवस्थाश्चोच्यन्ते । यो राजन्यो यजमानः स्वस्थ परस्य वा प्रजां निरुध्य बलमादातुमिच्छति स सधूमेऽग्नौ जुहुयात् । यो यजमानः प्रजां निगृह्य बलेन ताभ्योऽन्नं धनादिकं च स्वीकर्त्तुमिच्छति स भूयिष्ठार्चिषि अग्नौ जुहुयात् । कात्यायनस्य मते श्रीकामो यशस्कामश्च पुरुषः प्रदीप्ततमेऽग्नौ जुहुयात्, एतत्तु त्रैवर्णिकस्य सामान्यं विधानं न केवलं राजन्यस्य । अन्नस्य बुभुक्षुर्यजमानः ज्वालाप्रसरणे जायमानेऽग्नौ होमं कुर्यात्, अङ्गारेषु देदीप्यमानेषु ब्रह्मवर्चसकामस्य ब्राह्मणस्य होमः कर्त्तव्यः । पुनराचार्यः काम्यानि होमद्रव्याण्याह । तदनुसारेण स्वर्गकामः, पशुकामो वा यजमानः पयसा (दुग्धेन) जुहुयात्, यवाग्वा ग्रामकामः, तण्डुलैर्बलकामः, घृतेन च तेजस्कामो जुहुयात् । कात्यायनसम्मतौ एतेषु पूर्वोक्तकामसंयोगेषु संवत्सरेणैकेन कामस्य प्राप्तिर्भवति ।[2]

आ० क० पशुकामो द्वयोर्गवोः पयसा सायं प्रातश्च जुहुयात्, यस्य पशून् ज्वररूपेण रुद्रो हन्यात् सोऽपि पूर्वोक्तेन प्रकारेण (द्वयोर्गवो पयसा) जुहुयात् । पुनश्चाचार्यो ब्रवीति हूयमानोऽपि यदि रुद्रः पशून् हन्यात् ततस्सायं प्रातश्च तयोरुभयोर्गवोः पयसा निर्मितेन हविषा यजमानः (आज्येन) अग्निहोत्रं कुर्यात् । तदापि यदि पशुमरणं न विरमति, ततः पुनरनेन मन्त्रेण द्वादशाहमाज्येन जुहुयात् । 'अग्ने दुश्शीतर्तन्नो जुषस्व स्वाहेति ।' ततः परं ज्वरशान्तये न जुहुयादिति आचार्यः ।[3] अतः परमत्र विधाने पयसा पशुकामः, दध्ना इन्द्रियकाम[4],

---

1. आ० श्रौ० (६।४।१३।६)
2. का० श्रौ० (४।१५।१२-२८)
3. आ० श्रौ० (६।४।१४ कण्डिकायाम्)
4. इन्द्रियकामः—बलकामः ।

यवाग्ना ग्रामकामः, ओदनेन चान्नादकामः, तण्डुलैरोजस्काम, मांसेन यशस्कामः, सोमेन ब्रह्मवर्चसकामः, आज्येन च तेजस्कामो जुहुयात् ।[1] कात्यायनेन त्वत्र मांससोमादीनां होमस्य विधानं स्वस्मिन् श्रौतसूत्रे न कृतम् ।

## (७) चातुर्मास्यानि

**उभयोः कल्पयोः प्रायेण समानक्रमः**—यद्यपि आपस्तम्बेन षष्ठेऽध्याये अग्निहोत्रमुक्त्वा सप्तमेऽध्याये निरूढपशुबन्ध उक्तस्तथा अष्टमेऽध्याये चातुर्मास्यानि प्रोक्तानि, कात्यायनेन तु चतुर्थेऽध्याये अग्निहोत्रमुक्त्वा पञ्चमेऽध्याये चातुर्मास्यानि हि प्रोक्तानि। परन्तु चातुर्मास्यानां पर्वणां वर्णनक्रमस्तूभयोः कल्पयोः प्रायेण समानः—

| **का० श्रौ० क्रमः** | **आ० श्रौ० क्रमः** |
|---|---|
| १. वैश्वदेवपर्व | १. वैश्वेदेवपर्व |
| २. वरुणप्रघासाः | २. वरुणप्रघासाः |
| ३. साकमेधपर्व | ३. साकमेधपर्व |
| पितयज्ञः | पितृयज्ञः |
| त्रैयम्बकहोमः | त्र्यैम्बहोमः |
| ४. शुनासीरीयपर्व | ४. शुनासीरीयपर्व |
| ५. मित्रविन्देष्टिः | |

कात्यायनश्रौत० अस्मिन् अध्याये मित्रविन्देष्टि निरूपणमधिकं दृश्यते यद्यापस्तम्बश्रौतसूत्रे अस्या नामापि नोपलभ्यते। चातुर्मास्येषू-पर्युक्तानि चत्वारि पर्वाणि (वैश्वदेववरुणप्रघाससाकमेधशुनासीरीया-ख्यानि) भवन्ति। एतानि ऋतुयज्ञाः प्रोच्यन्ते ब्राह्मणादिषु ग्रन्थेषु—अपि वा भैषज्ययज्ञाः[2] सन्ति। एष्वपि शुनासीरीयं पर्व तु कृषियज्ञः प्रतीयते, एवमोल्डनवर्गनामा पाश्चात्यो विद्वान् मन्यते स्म।[3] वैदिके

2. आ० श्रौ० (६।४।१५।१)
1. 'शतपथे—'भैषज्ययज्ञा वा एते। ऋतुसन्धिषु व्याधिर्जायते तस्मादृतु-सन्धिषु प्रयुज्यन्ते।'
3. It is, according to Olderberg, an offering to the gene-uses of the plough to secure its good working.
(T. S. Translation by A. B. Kieth, p. CV)

देवविज्ञाने शुनासीरावुभौ कृषिदेवौ स्तः, तौ ऋग्वेदस्य ऋक्षु बहुधा स्तुतौ विद्येते। यास्कस्य मते—'शुनो वायुः शु एत्यन्तरिक्षे, सीर आदित्यः सरणात्[1], इति।'

**चातुर्मास्यपदव्याख्या**—चातुर्मास्यसम्बन्धि कर्म चातुर्मास्यमुच्यते। 'चतुर्षु मासेषु भवानि चातुर्मास्यानि' इति व्युत्पत्त्या तत्र भवाधिकारे चतुर्मासाच्च ण्यो वक्तव्य इति वार्त्तिकेन (अष्टा० ८।३।५८) चातुर्मास्यपदं व्युत्पन्नम्। यो वसंतादिषु ऋतुषु यजते स ऋतुयाजी भवति, ऋतुयाजी हि 'ऋत्विक्' (ऋतु + इक् = ऋतु + इज्, यज्[2] वा), उच्यते। तस्माद् एष चातुर्मास्ययाजी द्विविधः, एक ऋतुयाजी, इतरश्चातुर्मास्ययाजी। अत्र दर्शपौर्णमासवत् चत्वार ऋत्विजोऽध्वर्युजब्रह्महोत्राग्नीध्रा' इति।

**चातुर्मास्यप्रयोगकालः**—तत्र चतुर्षु पर्वसु, प्रथमं पर्व फाल्गुन्यां पूर्णिमायामनुष्ठेयम्, ततश्चतुर्षु मासेषु गतेषु आषाढ्यां पौर्णमास्यां वरुणप्रघासाख्यं द्वितीयं पर्व, ततश्चतुर्षु मासेषु गतेषु कार्तिक्यां साकमेधाख्यं तृतीयं पर्व, एवं पुनःपुनरावर्तितव्यम्, चतुर्थं पर्व शुनासीरीयं तु फाल्गुनशुक्लप्रतिपदि करणीयम्। आपस्तम्बेनात्र प्रामाण्ये ब्राह्मणप्रवचनमुदाहृतम्—'यो वसन्तोऽभूत्प्रावृडभूच्छरदभूदिति यजते स ऋतुयाजी। अथ यश्चतुर्षु चतुर्षु स चातुर्मास्याजी। वसन्ते वैश्वदेवेन यजते, प्रावृषि वरुणप्रघासौ, शरदि साकमेधैरिति विज्ञायते।'[3]

## वैश्वदेवपर्व

**अनुष्ठानकालः**—'मधुश्च माधवश्च वासन्तिकावृतू', चैत्रवैशाखौ मधुमाधवावुच्येते। अत्र फाल्गुन्यां चैत्र्यां वा पौर्णमास्यां वैश्वदेवपर्व कर्त्तव्यम्। उ० क० एवं हि वैश्वदेवपर्वणोऽनुष्ठेयकालः निर्दिष्टः।[4]

**वैश्वानरपार्जन्येष्टिः**—तथा चोभयोः कल्पयोर्यजमानो विकल्पेनारम्भणीयया सह वैश्वानरपार्जन्येष्टिं निर्वपति—वैश्वानरं द्वादशकपालं

1. निरुक्ते (९।४०), तथा चाह शौनकः—'वायुः शुनः सूर्य एवात्र सीरः। शुनासीरौ वायुसूर्यौ वदन्ति। शुनासीरं यास्क इन्द्रं तु मेने। सूर्येन्द्रौ तौ मन्यते शाकपूणिः।' (बृहद्देवतायाम् ५।८)
2. यजधातोः सम्प्रसारणात् 'इज्', 'इक्' वा भवति।
3. आ० श्रौ० (८।१।४।१३)
4. का० श्रौ० (५।१।१), आ० श्रौ० (८।१।१।२)

पार्जन्यं चरुं च।[1] आ० का० यजमानो दक्षिणायां हिरण्यं[2] वैश्वानरे ददाति, धेनुं च पार्जन्ये ददाति।[3]

**वैश्वदेवपर्व**—का० क० वैश्वदेवपर्वणि यजमानः प्राचीनप्रवणदेशे अहतवासा यजति।[4] अत्र कल्पे प्रथमेऽस्मिन् पर्वणि आग्नेयोऽष्टाकपालः पुरोडाशः, सौम्यश्चरुः सावित्रोऽष्टाकपालो वा पुरोडाशः, सारस्वतश्चरुः पौष्णः पैष्टश्चरुः, केवलेभ्यो मरुद्भ्यः, स्वतवद्गुणविशिष्टेभ्यो वा मरुद्भ्यः सप्तकपालः पुरोडाशः, वैश्वदेवी पयस्या, द्यावापृथिवीय एककपाल इत्यष्टौ हवींषि।[5] अत्र सरस्वत्या देवतात्वं न तु सारस्वतस्य, 'योषा वै सरस्वतीत्यर्थदर्शनात्' (श० ब्रा० २।१।१।११), एवं चापस्तम्बकल्पे—अष्टानां हविषां निर्वपणमुक्तम्।[6]

**अग्निमन्थनम्**—आ० क० अस्मिन् यागे पशुबन्धवद् गार्हपत्यादाहवनीयमग्निं प्रणयत्वध्वर्युः।[7] का० क० अध्वर्युणा हवींष्यासाद्याग्निमन्थनं कर्त्तव्यम्, ततः स काष्ठशकलं वेद्यां स्थापयति—'अग्नेर्जनित्रमिति' मन्त्रेण। उ० क० पुष्पितानां कुशानां प्रस्तरश्च विधीयते, उभयोः कल्पयोस्त्रेधा बर्हिः संनह्य पुनरेकधा क्रियते।[8] का० क० दारुशकले द्वे दर्भतृणे विधीयेते, तथा चैतयोः कुशतृणयोरुपर्युत्तरारणिं चाध्वर्युर्निदधाति, ततो मन्त्रपूर्वकमधिमन्थनं भवति।[9] आ० क० तु यजमानोऽग्नीनाधाय शाखामाहृत्य वैश्वदेव्या आमिक्षया (सायं दोहार्थं) वत्सानपाकरोति। तन्मते स श्वोभूते पात्रसंसादनकाले पालाशे पात्रे आमिक्षां गृह्णाति। वाजिनमपरपात्रे सिञ्चति।[10]

---

1. का० श्रौ० (५।१।३-४), आ० श्रौ० (८।१।१ ३)
2. हिरण्यम्—शतमानम्
3. आ० श्रौ० (८।१।१।४)
4. का० श्रौ० (५ १।२१।२२)
5. का० श्रौ० (५।१।५-२०)
6. आ० श्रौ० (८।१।२।२)
7. आ० श्रौ० (८।१।१६)
8. का० श्रौ० (५।१।२५), आ० श्रौ० (८।१।१।११)
9. का० श्रौ० (५।१।२०-३१)
10. का० श्रौ० (५।१।२९-३१)

**प्रयाजा अनुयाजाश्च**—उ० क० अत्र पर्वणि नव प्रयाजा नवानुयाजाश्च भवन्ति ।[1] का० क० वैश्वदेवपर्वण्यपि महाहविश्च वरुणप्रघासाश्च भवन्ति[2], उभयत्र श्रुतत्वात्, (श० ब्रा० २।५।२।४१) । आ० क० अध्वर्युः 'मधुश्च माधवश्चेति' चतुर्भिर्मासनामभिरेककपालमभिजुहोति । ततो नवानुयाजान्यजति । अत्र दक्षिणां च प्रथमजं वत्सं मिथुनौ गावौ वा ददाति यजमानः ।[3] पशुयागवत् त्रीणि समष्टियजूंषि च भवन्ति ।[4]

**वाजिनयागः**—का० क० तु वैश्वदेवपर्वणि वैश्वदेवी पयस्या विहिता (का० श्रौ० ५।१।१८), किन्त्वापस्तम्बेनात्र वाजिनयागस्य विधानं बहु विस्तीर्यते ।[5] तदनुसारेण प्रैषानन्तरमध्वर्युः संस्रावान्तं कृत्वा परिधीन् प्रहृत्य वाजिनयागं प्रारभते । सूक्तवाकवषट्कारादीन् होता करोति । ततः स ऊर्ध्वज्ञुरासीनो वाजिनयागे चमसेन जुहोति ततो हविशेषस्स भक्षणादीनि कर्माणि भवन्ति ।[6] कात्यायनश्रौतसूत्रे वाजिनयागस्य नैतावान् विस्तारो दृश्यते, यद्यपि वाजिनयागस्तत्रापि विधीयते ।

**वपनम्**—तत उ० क० यजमानस्य वपनं त्र्येण्यां शलल्यां क्रियते ।[7] तथा च शतपथे त्र्येनी शलली भवति लौहः क्षुरस्तेन परिवर्तयते ।' (श० ब्रा० २।६।४।५–७) । उ० क० अध्वर्युरेव यजमानस्य केशान् निवर्तयति ।[8] अस्मिन् पर्वणि यजमानो व्रतशीलो भूत्वा पूर्ववत् मधुमांसादीनि वर्जयति ।[9]

---

1. आ० श्रौ० (८।१ १।६, १६, २।१, ६)
2. का० श्रौ० (५।२।७), आ० श्रौ० (८।१।२।१४,२०)
3. का० श्रौ० (५।२।८)
4. आ० श्रौ० (८।१।२।१८-२०)
5. आ० श्रौ० (८।१।३)
6. आ० श्रौ० (८।१।३)
7. 'त्रिषु स्थानेषु श्वेता कर्बुरा त्र्येणी, शलली त्रेधाशलाकाश्वाविद्रोमः ।' का० श्रौ० (५।२।१५), आ० श्रौ० (८।१।४।१) (शल्यकमृगस्य कंटकमयी सूची शलली)
8. का० श्रौ० (५।२।१७), आ० श्रौ० (८।१।४।२)
9. का० श्रौ० (५।२।२१), आ० श्रौ० (८।१।४।११)

# वरुणप्रघासाः

**वरुणप्रघासपदव्याख्या**—अथ पदस्यार्थमवगन्तुं शातपथी चाख्यायिका द्रष्टव्या—'वैश्वदेवेन वै प्रजापतिः प्रजाः ससृजे, ता अस्य प्रजाः सृष्टा वरुणस्य यवान् जक्षुर्वरुण्यो ह वा अग्रे यवास्तद्यन्नवेव वरुणस्य यवान्प्रादंस्तस्माद्वरुणप्रघासा नाम।[1] अनया आख्यायिकया च प्रतीयते यदस्य पर्वणो वरुणेन च यवैस्सह च घनिष्ठः सम्बन्धो अस्ति, अयं त्वग्रे स्पष्टीभविष्यति।

**अनुष्ठेयकालः**—का० क० अषाढ्यां शुक्लप्रतिपदि वरुणप्रघासाः कर्त्तव्याः।[2] आपस्तम्बस्तु विकल्पते, तन्मते, आषाढ्यां पौर्णमास्यां, श्रावण्यां वा वरुणप्रघासाः प्रारभ्यन्ते, यदा फाल्गुन्यामुपक्रमस्तदाऽऽषाढ्यां यजनम्, यदा चैत्र्यामुपक्रमस्तदा श्रावण्यां यजनं भवति।[3] उ० क० यजमानो प्रदेशान्तरं गत्वा प्राचीनप्रवणे वरुणप्रघासान् यजते।[4] आपस्तम्बेन तु बह्वृचब्राह्मणस्य प्रामाण्येन 'प्ररूढकक्षे यष्टव्यमिति' विकल्पितम्।[5]

अत्र वरुणप्रघासे पञ्चर्त्विजः—होता, अध्वर्युः, ब्रह्मा आग्नीध्रः प्रतिप्रस्थाता चाधिकः। अस्य प्रतिप्रस्थातुस्सहयोगं एषु पदार्थेषु न भवति–प्रणीतापत्नीसन्नहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचतहोतृषदनवरणप्राशित्राङ्गुलिपर्वाजिनाडवान्तरेडाभागापराग्न्यवभृथेभ्यः प्रतिप्रस्थाता निवर्तते।[6] अत्र वरुणप्रघासे द्वे वेदी भवतः, तत्रोत्तरवेद्यामध्वर्युः कार्यं करोति, दक्षिणवेद्यां प्रतिप्रस्थाता च।[7]

**वेदिनिर्माणम्**—का० क० तु पूर्वं करम्भपात्रकरणं मेषमेषीकरणं च विधीयेते, आपस्तम्बेन तु पूर्वं वेदिनिर्माणविधिरुच्यते, अत्रापस्तम्बीयः क्रमः समीचीनः प्रतिभाति मे, तस्मादत्र तद्गृहीतम्। का० क०

1. श० ब्रा० (२।४।३।१)
2. का० श्रौ० (५।३।१), आ० श्रौ० (८।२।५।१)
3. का० श्रौ० (५।३।१), आ० श्रौ० (८।२।५।२-३)
4. का० श्रौ० (५।४।३३)
5. आ० श्रौ० (८।२।५।२५)
6. का० श्रौ० (४।३।६)
7. मानवश्रौतसूत्रे (का० श्रौ० कर्कभाष्ये ४४५)

आहवनीयस्य पूर्वदिशि एका वेदिः, अपरा च वेदिर्ह्युत्तरतः भवति ।[1] तथा चोक्तं मानवश्रौतसूत्रे—'अग्रेणाहवनीयं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पृष्ठ्याशङ्कुं निहत्य वज्रादानप्रभृति वेदिं विदधाति, षट्शयां प्राचीं चतुश्शयां पश्चात्त्रिशयां पुरस्तात्, पूर्वार्धे वेद्यां विस्तृतीयमात्रेऽरत्निमात्रीं चतुर्दिशमुत्तरवेदिं विधायाग्रेणात्करं प्रक्रममात्रे वेदेरुद्धृत्यावोक्ष्य चात्वालं शम्यया परिमिमीत' इति ।[2] आ० क० त्वग्रेण गार्हपत्ये द्वे वेदी भवतः, उत्तरां वेदिमध्वर्युः करोति दक्षिणां वेदिं प्रतिप्रस्थाता च करोति । तन्मते चोत्तरवेद्यामेव पाशुकं कर्म भवति । दक्षिणवेद्यां तु हिंसामयं कर्म न भवति । उत्तरशब्देनापि चात्र प्रतीयते यत्पुराकाले यज्ञेषूत्तरवेदिनिर्माणस्य विधानं नासीत्, एतत्तूत्तरेषु युगेषु प्रकल्पितम् । यर्हि हिंसामयानां यज्ञानां प्रचलनमभवत् । यद्यपि वरुणप्रघासे पर्वणि पशुहिंसा न भवति, तथापि अत्र पशुप्रतीके पिष्टमये मेषमेष्यौ क्रियेते ।

का० क० उभयोर्वेद्योरन्तरालः प्रादेशमात्रो भवति[3], आ० क० त्वन्तरालो द्व्यङ्गुलः, त्र्यङ्गुलः, चतुरङ्गुलः, पृथुमात्रः, रथवर्त्ममात्रः, सीतामात्रः, प्रादेशमात्रो वा भवति ।[4] उ० क० दक्षिणवेदिस्तु दर्शपौर्णमासवद् भवति । उत्तरा वेदिस्तु रथप्रमाणा[5] प्रकल्पिता, तथा चोभयोः कल्पयोर्यथाविधानमुत्करस्त्वेक एव उभयोर्वेद्योर्भवति ।[6] का० क० अध्वर्युर्द्वात्रिंशदङ्गुलप्रमाणां वारणीं शम्यामादाय चात्वालनामधेयं स्थण्डिलं अवटं (मिमीते) । आपस्तम्बेन तु निरूढपशुबन्धे वेदिनिर्माणविधिर्विस्तरेण प्रोक्तः । तत्र हि तेन चात्वालादीनां निर्माणविधिरपि विधीयते । तन्मते उत्तरवेदिवत् चात्वालोऽपि शम्यामात्रो भवति ।[7]

---

1. का० श्रौ० (५।३।१०-११)
2. मानव श्रौतसूत्रे (का० श्रौ० कर्क भाष्ये, पृ० ४४५)
3. का० श्रौ० (५।३।११)
4. आ० श्रौ० (८।२।५।१०)
5. का० श्रौ० (५।३।१२)—आ० क० तु समे वेदी भवतः (८।२।५।४)—रथप्रमाणं त्वापस्तम्बशुल्वरूपे—अष्टाशीति शतमीषा (१८८ अङ्गुलयः), चतुःशतमक्षः षडशीतिर्युगम्, चत्वारोऽष्टका शम्येति ।
6. का० श्रौ० ५।३।१७), आ० श्रौ० (८।२।५।१४)
7. आ० श्रौ० (७।१।१।१३, २।४।१)

का० क० अध्वर्युर्मन्त्रपूर्वकमुत्तरवेदेर्निवपनव्यूहनप्रकिरणानि करोति ।[1] आ० क० पशुबन्धवदुत्तरवेदेर्निवपनादि भवति ।[2]

**अग्निप्रणापनादि**—का० क० श्वोभूते प्रातरध्वर्युर्जुह्वापञ्चगृहीतमाज्यं गृहीत्वा गार्हपत्यादग्नी प्रणयति[3], आ० क० तु स पशुबन्धवद् गार्हपत्यादेवाग्नी प्रणयति ।[4] उ० क० होत्रा प्रथमायामृचि त्रिसक्तायामुपयमनीभिरुपयम्य उभावेवाध्वर्यू स्वां स्वां वेदिं प्रति अग्निं हरतः । उ० क० उभावपि उत्तरवेदेरुत्तरदक्षिणांसौ प्रणीताशेषेण प्रतिषिच्य, सुवर्णमन्तर्धायाध्वर्युर्जुह्वा जुहोति ।[5] ततो अध्वर्युः परिधीन् परिदधाति । का० क० 'अग्ने पुरीषमिति' मन्त्रेण सम्भारान्निवपत्यध्वर्युः ।[6] आ० क० 'अग्नेर्यस्यासीति' मन्त्रेण निवपति । उ० क० गुग्गुलुः, सुगन्धितेजनम् ये त्वस्य (वृष्णेः) शिरो रोमाणि च सम्भारेषु भवन्ति ।[7]

**मेषमेषीकरणम्**–उ० क० आमयवपिष्टानां करम्भपात्राणि यावन्तो यजमानस्य गृह्याः पुत्रपौत्रास्तावद्भ्य एकाधिकानि च क्रियन्ते । त्रीणि वा नित्यत्वात् क्रियन्ते, आपस्तम्बस्त्वत्र गृह्यस्थाने आमात्यपदं प्रयुनक्ति ।[8] दध्ना संयुक्ताः सक्तवः करम्भा उच्यते । दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि करम्भपात्राणि भवन्ति । तानि पत्नी करोति । एवं च तेषामेव तप्तयवानां मेषमेष्योः प्रतिकृती भवतः, मेषमध्वर्युः करोति मेषीं च प्रतिप्रस्थाता करोति, अत्रापस्तम्बेन वाजसनेयकं मतमुदाहृतम्, तदनुसारेण अत्र हि मेषमेष्यौ भवतः ।[9] अत्र कल्पे हि ऐन्द्राग्नं पुरोडाशमधिश्रित्यैकादशकपालेषु मेषीमधिश्रयति, अष्टासु च मेषम् ।[10] तन्मते च केचित् स्थाली (कुम्भी) पाकधर्मेणाधि-

1. का० श्रौ० (५।३।२८-३६), आ० श्रौ० (८।२।५।२१)
2. का० श्रौ० (५।४।२)
3. का० श्रौ० (५।४।२)
4. आ० श्रौ० (८।२।५।२२)
5. का० श्रौ० (५।४।१४), आ० श्रौ० (७।२।५।३)
6. का० श्रौ० (५।४।१७)
7. आ० श्रौ० (७।२।६।१)
8. का० श्रौ० (५।३।३), आ० श्रौ० (८।२।५।४०)
9. 'अत्रापि मेषं मेषीं च करोति वाजनेयकम्' (आ० श्रौ० ८।२।६।४)
10. आ० श्रौ० (८।२।६।५)

श्रयन्ति ।[1] उभयोराचार्ययोर्मताभ्यामनैडकीभिरूर्णाभिर्मेषमेष्योर्लोमशकरणं भवति, तत उ०क० स्वां स्वां प्रतिकृतिमन्योऽन्यस्यामिक्षयोरेकस्मिन्, पात्रेऽन्योऽन्यमवद्यन्तः। तत्तयोः पात्रयोः करीण्यावपति शमीपलाशमिश्राणि च ।[2] उ० क० वारुण्यां पयस्यायां वारुणीं मेषीमारुत्यां पयस्यायां मेषं चासादयति ।[3] ततोऽष्टौ हवींषि उत्तरस्यां वेद्यामासाद्यन्ते ।[4]

**जारकथनम्**--तत उ० क० प्रतिप्रस्थाता पत्नीं पृच्छति—'केन पुंसा सह त्वं चरसि ।[5] प्रतीयते यतो विधानमिदं पत्नीशुद्ध्यर्थमासीत्, न जारप्रख्यापनार्थम्। तथाप्युभयोः कल्पयोः पत्नी संस्तुतान् जारान् कथयति, यदि जारो न भवेत् तदा सा 'नेति' ब्रवीति, तथापि यदि ह्रिया सा संस्तुतान् जारान् कथयति तदा सा प्रतिजारं तृणानि गृह्णाति। अनाख्यातं जारं प्रियं ज्ञातिं ब्रूयात् 'असौ मे जार' इति, प्रतिप्रस्थाता तान्निर्दिश्येवैनं वरुणपाशेन ग्राहयति ।[6]

**करम्भपात्रहोमः**—उ० क० जायापती यजमानो वा करम्भपात्राणि शूर्पे निधाय तन्मूर्धनि धृत्वा दक्षिणाग्नौ जुहोति। तत्सर्वं यथाविहितं अवभृथान्तं यागं क्रियते। का० क० अध्वर्युरनभिधार्यैव इडामवदाय प्रतिप्रस्थात्रे प्रयच्छति ।[7] आ० क० सप्तानां हविषां समवदायाध्वर्युः प्रतिप्रस्थात्रे प्रयच्छति। आपस्तम्बेन पृथगिडाया अवदानं निषिद्धं कृतम् ।[8] ततो वाजिनयागं कृत्वा सर्वे समुपहूयेडां (वाजिनं) भक्षयन्ति।

**अवभृथः**—उ० क० तत उभावेवाध्वर्यू त्रीणि त्रीणि समष्टियजूंषि जुहुतः। ततो जायापती वारुणेन निष्कासेन (पयस्याशेषेण) अवभृथं

1. आ० श्रौ० (८।२।६।६)
2. का० श्रौ० (५।५।१), आ० श्रौ० (८।२।६।१३)
3. का० श्रौ० (५।५।४-४), आ० श्रौ० (८।२।६।१७)
4. का० श्रौ० (५।५।४), आ० श्रौ० (८।२।६।१४)
5. का० श्रौ० (५।५।६), आ० श्रौ०—'कति ते जारा' इति पृच्छति (८।२।६।२०) एवं श्रूयते—श० ब्रा० (२।५।२।२०), तै० ब्रा० (१।६।५)
6. आ० श्रौ० (८।२।६।२१-२२), का० श्रौ० (५।५।७-९)
7. का० श्रौ० (५।५।२२)
8. आ० श्रौ० (८।२।७।३)

कर्तुमपः प्रतिगच्छन्ति । तावन्योऽन्यस्य पृष्ठं धावतः, एवं स्नात्वा समिधमाधाय धेनुमश्वं द्वादश गावो वा दक्षिणायां दद्याताम् ।[1] आ० क० चायं सौमिकोऽवभृथ उक्तः ।[2] आ० क० वरुणप्रघासानां कात्यायनकल्पवत् धेनुदक्षिणा विहिता, तथापि ऋषभः कामदक्षिणां च आचार्यो विदधाति ।[3] तत्र कल्पे पर्वेदं यज्ञसम्मितं संस्तूयते ।[4]

## साकमेधपर्व

उ० क० यजमानश्चतुर्षु मासेषु पूर्वस्मिन् पर्वण्युपक्रम्य द्व्यहं कार्तिक्यां पौर्णमास्यां साकमेधैर्यजते ।[5] अस्मिन् पर्वणि एता इष्टयो भवन्ति—अनीकवतीष्टिः, सान्तपनेष्टिः, गृहमेधीयेष्टिः, दर्विहोमः, क्रीडनीयेष्टिः, अदितीष्टिः, महाहविःसंज्ञकप्रधानेष्टिः, पितृयज्ञः त्रैयम्बकेष्टिश्च ।

**अनीकवतीष्टिः**—का० क० पूर्वेद्युः पूर्वाह्णे पञ्चदश्यां कार्त्तिक्यां पौर्णमास्यां अग्नयेऽनीकवते अष्टाकपालं पुरोडाशं यजमानो निर्वपति ।[6] आ० क० त्वयं साकं सूर्येणोद्यता प्रातरेव निरुप्यते ।[7]

**सान्तपनीयेष्टिः**—उ० क० यजमानो मध्यदिने मरुद्भ्यः सान्तपनेभ्यश्चरुं निर्वपति, तथा चात्र का० क० बर्हिरनुप्रहरणवर्जं ब्राह्मणतर्पणान्तं समापनीयम् ।[8] आ० क० चास्यामेष्टौ नेध्मा बर्हिर्न सामिधेनीः, न प्रयाजा नानूयाजा भवन्तीति ।[9]

---

1. का० श्रौ० (५।५।२८-४०), आ० श्रौ० (८।२।७।१४)
2. 'पूर्णपात्रस्य स्थाने सौमिकोऽवभृथः (आ० श्रौ० ८।२।७।१२)
3. आ० श्रौ० (८।२।७।५,६,७)
4. आ० श्रौ० (८।२।८।२३)
5. का० श्रौ० (५।६।१), आ० श्रौ० (८।३।१।१), 'साकं सहेत्यर्थः, सहवर्धनं यस्मात् सोमस्य छन्दसां चास्मिन् कर्मणि अतः साकमेधाः (धूर्तस्वामी, भाष्ये, पृ० ४४४), 'साकं वा रश्मिभिः, प्रचरन्ति' इत्यापस्तम्बः (८।३।१।३) ।
6. का० श्रौ० (५।६।२)
7. आ० श्रौ० (८।३।१।२-३)
8. का० श्रौ० (५।६।३-४)
9. आ० श्रौ० (८।३।१।५,१०)

**गृह्यमेधीयेष्टिः**—सान्तपनीयेष्टिः गृहमेधीयेष्टिः सायं पयसि चरौ भवति। उ० क० अत्र पयसि सान्नायवत्सधर्मा भवन्ति—आवत्साय-करणात् श्रपणपर्यन्तम्। अत्र गृहमेधीयशेषस्य पायसस्य उपनीतैर्यज-मानगृह्यैस्सह अन्यैर्ब्राह्मणैश्च भक्षणं कर्तुं शक्यते। अध्वर्युस्तं चरुं श्रपयित्वाभिघार्योद्वास्य द्वयोः शरावयोरुद्धरति। अथवा महत्योर्द्वयोः पात्रयोरुद्धरति।[1] तथा चाह आपस्तम्बः—'द्वयोरुद्धरणं वाजसनेयिनः समामनन्ति।'[2] तदूर्ध्वं सम्मार्जनाद्यनन्तरमध्वर्युराज्यभागाभ्यां चरति, अत्र यागे प्राशित्रादि न भवति तथा चेदं कर्म इडाभक्षणान्तं समाप-नीयम्।[3] अत्र उ० क० दक्षिणाग्नौ पक्वं प्रभूतमोदनं ऋत्विजोऽन्ये ब्राह्मणा गृह्याश्च भक्षयन्ति।[4] आपस्तम्बस्त्वत्र व्यञ्जनार्थं गोघृतमपि विदधाति।[5] कात्यायनश्रौतसूत्रे नैतद् विहितं दृश्यते।

**प्रातर्दर्विहोमः**—का० क० अत्र सायं प्रातरग्निहोत्रहोमो यवाग्वा विहितः।[6] तत उ० क० पूर्णदर्विहोमो विधीयते।[7] उ० क० ऋषभमाहूय तस्य रवते (शब्दे कृते) अध्वर्युर्जुहोति। अयमेव ऋषभो दक्षिणायां विधीयते।[8]

**क्रीडनीयेष्टिः**—तत उ० क० स्वतवद्भ्यः क्रीडिभ्यो मरुद्भ्यो सप्तकपालः पुरोडाश[9]स्ततो अदित्यै चरुस्तु केवलं का० क० विहितः।[10]

**महाहवींषि**—इदं तु पूर्वमेवाभिहितं यन्महाहवींषि प्रधानं साक-मेधानामङ्गमन्या इष्टयः। उ० क० महाहविषां याग उत्तरवेद्यां सम्पा-द्यते, आ० क० वरुणप्रघासवदत्रापि अग्निप्रणयनादिकं भवति।[11] अत्रेष्टौ

1. का० श्रौ० (५।६।१०-११)
2. आ० श्रौ० (८।३।११।२)
3. का० श्रौ० (५।६।२७), आ० श्रौ० (८।३।११।७)
4. का० श्रौ० (५।६।३०), आ० श्रौ० (८।३।११।८)
5. आ० श्रौ० (८।३।११।१२)
6. का० श्रौ० (५।६।३५)
7. का० श्रौ० (५।६।२६), आ० श्रौ० (८।३।११।१८)
8. का० श्रौ० ५।६।३८,३९,४०), आ० श्रौ० (८।३।११।२१)
9. का० श्रौ० (५।७१), आ० श्रौ० (८।३।११।२२)
10. का० श्रौ० (५।७।१)
11. का० श्रौ० (८।०।१२।२)

अष्टौ हवींषि[1]—आग्नेयोऽष्टाकपाल: पुरोडाश:, सौम्यश्चरु:, सावित्रोऽष्टाकपालो द्वादशकपालो वा पुरोडाश:, सारस्वतश्चरु:, पौष्ण: पैष्टश्चरु:, ऐन्द्राग्नो द्वादशकपाल: पुरोडाश:, माहेन्द्रश्चरु:, वैश्वकर्मण एककपाल: पुरोडाशश्च आ० क० त्वध्वर्यु: 'सह सहस्येति' चतुर्भिर्मासनामभिरेककपालमभिजुहोति ।[2] अत्र कल्पे धेनुर्ऋषभो वा दक्षिणा, का० ऋषभ एव उक्त: ।[3]

**पितृयज्ञ**:—अयं साकमेधस्याङ्गं न प्रधानम् । अस्य दर्शपूर्णमासयो: समान: कल्प:, किन्त्वत्र होतृवरणमार्षेयवरणं च न भवत: । उ० क० पितृयज्ञस्य उपांशुचरणं विहितम् ।[4] का० क० वेदेरुदग्द्वारं परिवृतं समचतुरश्रं च भवति ।[5] आ० क० यजमानमात्री चतुरश्रा वेदिर्भवति ।[6] वेदिरियं दक्षिणाग्नेरग्रे क्रियते । अत्र यज्ञे दक्षिणा विधानं नास्ति । अत्र उभये देवा: पितरश्चेज्यन्ते । पितृयज्ञोऽपत्नीकश्च भवति, दक्षिणाग्नौ हि सर्वाणि होमादय: क्रियन्ते, किन्त्वग्निहोत्रहोमस्त्वाहवनीय एव भवति । का० क० पितर: सोमवन्त:, सोम: पितृनान्वा, पितरो बर्हिषद:, पितरोऽग्निष्वात्ता इति देवता: । षट्कपाल:, पुरोडाश:, धाना:, मन्थ इति यथाक्रमं हवींषि, भर्जिता यवा धाना इत्युच्यन्ते । अत्र यजमान: प्राचीनावीती भूत्वैव हवींषि निर्वपति ।[7] आ० क० यज्ञोपवीती सोमाय पितृमते हवींषि निर्वपति ।[8] तन्मते सोमाय पितृमते आज्यम्, पितृभ्यो बर्हिषद्भ्य: षट्कपालं पुरोडाशम् पितृभ्योऽग्निष्वात्तेभ्यो धाना:, अग्नये कव्यवाहनाय यमाय वा मन्थम्, यमायाङ्गिरस्वते पितृमते वा ।[9] किन्तु का० क० पितृभ्य: सोमवषद्भ्य: षट्कपाल: पुरोडाश:, पितृभ्यो बर्हिषद्भ्यो धाना:, पितृभ्योऽग्निष्वात्तेभ्यो मन्थो

1. का० श्रौ० (५।७।६-१०), आ० श्रौ० (८।३।१२।४)
2. आ० श्रौ० (८।३।१२।५)
3. आ० श्रौ० (८।३।११।५), का० श्रौ० (५।७।१७)
4. का० श्रौ० (५।८।१), आ० श्रौ० (८।४।१५।१८)
5. का० श्रौ० (५।८।२१)
6. आ० श्रौ० (८।४।१३।२)
7. का० श्रौ० (५।९।१०)
8. आ० श्रौ० (८।४।१३।१५)
9. आ० श्रौ० (८।४।१३।१६)

विहितः। अत्र कल्पे निवान्याया दुग्धे सक्तुदुपमथित एकशलाकया मन्थो भवति।[1] आ० क० चैवं मन्थं कृत्वेक्षुसलाकयेक्षुकाण्डेन वोपमन्थति।[2] ततः प्रणीताप्रणयनाज्यग्रहणप्रोक्षणस्तरणादीनि कृत्वा होता सामिधेनीभ्यः प्रतिपद्यते। स एतत्कृत्वा प्रयाजानुयाजांश्च यजन्ति। तत उ० क० यज्ञोपवीतिनः नीविं विस्रंस्य प्राचीनावीतिनो भवन्ति।[3] तत उ० क० अवदानानि कृत्वा सोमाय पितृमते, पितृभ्यो बर्हिषद्भ्यो, अग्निष्वात्तेभ्यः कव्यवाहनाय च मन्थपुरोडाशधानानां स्वधा नम इति वषट्कृद्यागो भवति।[4] अत्रापस्तम्बस्य मते स्वधाकारं तु प्रतिषिध्यते, बहृचवाजसेनेयिनामाश्रुतप्रत्याश्रुतान्येव भवन्ति।[5] तत उ० क० होताऽध्वर्युब्रह्माग्नीध्राः मन्थमुपहूय अवघ्राय प्राशित्रमिडां वा प्राश्नन्ति, आ० क० विकल्पेन यजमानो नावजिघ्रति।[6] तत उ० क० अध्वर्युर्यजमानो वा त्रिः प्रसव्यं वेदिं परिषिच्य उदकुम्भं निधाय, त्रीन् पिण्डान् त्रिषु दिक्षु निदधाति, ततो यथावनिवतं पिण्डान् ददाति, ततः सर्वे यज्ञोपवीतिनो भूत्वा 'अक्षन्नमीमदन्त' इति आहवनीयमुपतिष्ठन्ते। आ० क० त्वैन्द्रया ऋचा आहवनीयम्, 'अक्षन्नमीमदन्त' इति पङ्क्त्या गार्हपत्यमुपतिष्ठन्ते। का० क० 'मनो त्वागमहे' इति (शु० ३।५३–५५) तिसृभिर्गार्ह्यपत्यमुपतिष्ठन्ते।[7] ततः का० क० सर्वे नीविं विस्रंस्य षण्णमस्कारान् कुर्वन्ति, 'गृहान्न पितरो दत्तेति च' जपन्ति, ततो बर्हिपरिधिं हवींषि च अप्सु प्रास्यन्ति, अथवा हविशेषं सर्वे भक्षयन्ति।[8] आ० क० चात्र पितृयज्ञे पत्नीसंयाजाः समिष्टयजुर्होमश्च न भवन्ति, अन्यत् सर्वं क्रियते।[9]

**त्र्यम्बकहोमः**—अम्बा, अम्बिका, अम्बालिका चैतास्तिस्रो रुद्रस्य अम्बा उच्यन्ते, आसां सम्बन्धेन च रुद्रस्त्र्यम्बक उच्यते। अस्य रुद्रस्य

---

1. का० श्रौ० (५।८।६-१२)
2. आ० श्रौ० (८।४।१४।१४)
3. का० श्रौ० (५।६।१), आ० श्रौ० (८।४।१५।१)
4. का० श्रौ० (५।६।६-१०), आ० श्रौ० (८।४।१५।१७-२०)
5. आ० श्रौ० (८।४।१५।१२)
6. का० श्रौ० (५।६।१३:१५), आ० श्रौ० (८।४।१६।२३-२५,१६।१-२)
7. का० श्रौ० (५।६।१६।१६,२१,२२), आ० श्रौ० (८।१६।७-६)
8. का० श्रौ० (५।६।३३-३६)
9. आ० श्रौ० (८।४।१६।१६-२१)

होम एव त्रैयम्बकहोम: ॥[1] तत: उ० क० यावन्तो यजमानगृह्यास्तावत एकाधिकान् चतुरो वा एककपाले संस्कृतान् पुरोडाशान् यजमानो निर्वपति।[2] अत्र चोभयो: कल्पयोर्दक्षिणाग्न्युल्मुकमादाय चतुष्पथे गत्वा पञ्चभूसंस्कारान् च कृत्वा तं संस्थाप्य तत्र पलाशपत्रेण जुहुस्थानीयेन पुरोडाशत्रयतोऽवदाय होम: कार्य:, चतुर्थस्य तु आखूत्करे प्रक्षेप:। तत्र होमे उ० क० समानो मन्त्र:—'एष ते रुद्र भागस्सह स्वस्राऽम्बिकया तं जुषस्वेति।' त्र्यैम्बकं यजामहे सुगन्धि पतिवेदनमित्यादि च।' तत उ० क० तान् रौद्रान् पुरोडाशान् मूतयोर्वेणुयष्ट्यां कूपे स्थाणौ वल्मीकवपायामासजति—'अवततधन्वा पिनाकहस्त:' (आ० क० ८।५।१८।२१), 'एतत्ते रुद्र भाग' (शु० य० ३।६१) इति मन्त्रेण। उ० क० कुमार्य: पतिकामा भागकामा वा–'त्र्यैम्बकं यजामहे' इति मन्त्रेण होमाग्निं त्रि: परियन्ति।[3] तत: उ० क० यजमानादय: स्नात्वा गृह्या गच्छन्ति।[4]

**शुनासीरीयपर्व**—उ० क० पूर्वैस्त्रिभि: पर्वभिरेवं संवत्सर: समाप्यते, अत: साकमेधानन्तरं द्व्यहे त्र्यहे चतुरहेऽर्धमासे मासे चतुर्षु मासेषु वा शुनासीरीयेण यजमानो यजते।[5] उभयोराचार्ययोर्मतादस्य पर्वणो' वैश्वदेववत्कल्पो भवति। तद्वत् आग्नेय्यादिपौष्णान्तानि पञ्चहवींषि, ऐद्राग्नं वैश्वेदेवं चरुं निरुप्येन्द्राय शुनासीरीयाय पुरोडाशं द्वादशकपालं हवि:, सौर्यमेककपालं पुरोडाशं चाष्ट्यं हविर्निर्वपति। उ० क० वायव्यं पयो यवागूर्वा सप्तमं हविर्भवति। आ० क० तु दशोत्तराणि हवींषि भवन्ति।[6] तत्र कल्पे च पञ्चप्रयाजा नवानुयाजाश्च भवन्ति। का० क० अत्र षड्भिरनड्ुद्भिर्युक्तो हलो दक्षिणा[7], आ० क०

1. हरिस्वामी–'त्रैयम्बकानाम पुरोडाशा तानिह प्रस्तुत्य तेषां होमं वक्ष्यति तान् सार्थं जुहोतीति' (श० ब्रा० भाष्ये २।६।२।७)
2. का० श्रौ० (५।१०।२), आ० श्रौ० (८।५।१७।१)
3. का० श्रौ० (५।१०।१७), आ० श्रौ० (८।५।१८।५)
4. का० श्रौ० (५।१०।२३), आ० श्रौ० (८।५।१८।१०)
5. का० श्रौ० (५।११।१-२), आ० श्रौ० (८।६।२०।१)
6. आ० श्रौ० (८।६।२०।३)
7. का० श्रौ० (५।११।१२)

द्वादशगवो षड्गवो वा सीरो (हलो) दक्षिणा, विकल्पे चौष्टारौ (उष्टारौ) बलीवर्दौ च प्रदीयेते ।[1]

**मित्रविन्देष्टिः**—का० क० चातुर्मास्यानन्तरं मित्रविन्देष्टिर्निरूपिता । अत्रेष्टौ कात्यायनेन दशहवींषि विहितानि—आग्नेयोऽष्टाकपालः पुरोडाशः, सौम्यश्चरुः, वारुणो दशकपालः पुरोडाशः, चरुर्वा, मैत्रश्चरुः, ऐन्द्र एकादशकपालः पुरोडाशः, बार्हस्पत्यश्चरुः, सावित्रो द्वादशकपालोऽष्टादशकपालो वा, पौष्णश्चरुः, त्वाष्ट्रो दशकपालः पुरोडाशः । मित्रविन्देष्टिः श्रीकामस्य राष्ट्रकामस्य, आयुष्कामस्य वा कृते भवति ।[2]

## (८) निरूढपशुबन्धः

**पशुबन्धः पशुवधो वा**—सर्वत्र ग्रन्थेषु (ब्राह्मणश्रौतसूत्रादिषु) अस्य यागस्य 'पशुबन्ध' इति संज्ञोपलभ्यते । तत्र संशीयते किं यागो अयं पशुवधात्मकः पशुबन्धात्मको वाऽऽसीत् । शतपथस्य वक्ष्यमाणेन प्रामाण्येन चायं भावः स्पष्टीभवति यद्दोहार्थं पशून् जना गृहेषु बध्नन्ति स्म, तत्कर्म एव पशुबन्ध आसीत्—पशुबन्धेन यजते । पशवो वै पशुबन्धः । पशुमानसानीति तेन गृहेषु यजते, गृहेषु पशून् बध्नानि, इति तेन सुयवसे यजते सुयवसे पशून् बध्ना' इति (श० ब्रा० ११।७।१।१) । अस्मिन् प्रवचने पशुवधभावस्य लेशमात्रोऽपि नास्ति । पूर्वेषु युगेषु पशुयज्ञेषु पशवोऽलङ्क्रियन्ते स्म न तेषां वधोऽभवत्, स्वामिसत्यप्रकाशस्य चैतत् मतमस्ति ।[3] श्रौतसूत्रादिषु पशुसंज्ञपने पशुवपाहोमे च ये

---

1. आ० श्रौ० (८।६।२०।६-१२)
2. का० श्रौ० (५।१२। कण्डिकायाम्)—'आश्वलायनश्रौतसूत्रे चापि मित्रविन्देष्टिः निरूपिता दृश्यते' (आश्व० श्रौ० २ ११।१)
3. Pasuyajnas or adoration cf animals, very wrongly interpreted as animal offerings. The Pasumedha or the animal adoration ceremonies are also associated with the New Moon and Full Moon rites ........The practice deteriorated in latter times in sacrificing an animal as a dedication to a certain Diety.

   (Introduction to the Tr. or S. B. p 412)

   'पशुर्बध्यते यज्ञार्थं यस्मिन् कर्मणि स पशुबन्धः'

   (आ० श्रौ० टीकायाम् १५५)

मन्त्रा: पठितास्तेषु अपि हिंसाया: संङ्केतो न दृश्यते। यथा संज्ञपने मन्त्रपाठ:—'स्वर्विदसि स्वर्वित्त्वा स्वरिह स्वर्मह्य स्व: पशुभ्य: ।'[1] एवं वसाहोमे—'अपां त्वोषधीनां रसं गृह्णामीति'[2] अपितु मन्त्रेषु पशु-वधस्य निषेधो हि बाहुल्येन परिदृश्यते।[3] बहुभि: प्रमाणैश्च ज्ञायते यत्पुराकाले सर्वथा यज्ञेषु पशूनां वधो नाभवत्। स्वयं महान् याज्ञिको यास्काचार्यो वक्ति—'अध्वर इति यज्ञनाम ध्वरति हिंसाकर्मा तत्प्रति-षेध:'[4] (निरुक्ते १।३।७), वायुपुराणात् महाभारताच्च ज्ञायते यत्स्वा-यम्भुवेऽन्तरे यामै: देवै: यज्ञसंस्थाया: प्रवर्तनं कृतम्। पण्डितभगवद्दत्त-महोदयानां मतमिदं किञ्चित् संशोधनीयमस्ति यत्पुराकाले सर्वथा अहिंसामया यज्ञा ह्यभूवन्निति।[5] प्रथमे महायज्ञे हि प्रभूता हिंसा

---

1. आ० श्रौ० (७।५।१६।५)
2. आ० श्रौ० (७।८।२५।१)
3. 'पशून् पाहि गां मा हिंसीः।' 'अजां मा हिंसीः', 'अविं मा हिंसीः', 'इमं मा हिंसीर्द्विपादं पशुम्' (यजुर्वेदे) तथा च—'यो पौरुषेयेण क्रविषा समङ्क्ते। यो अश्वेन पशुना यातुधानः। यो अघ्न्याया भरति क्षीर-मग्ने। तेषां शीर्षाणि हरसापि वृश्च' (ऋ० ८।४।१८) आचार्यो विष्णुशर्मा चाह—

   वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम्।
   यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥'

   (पञ्चतन्त्रे, तृतीये अध्याये, पृ० १९१)
4. 'जैमिनीये ब्राह्मणे—ऋषीणां वाऽग्रे मन्त्राश्चैवेमे प्रजा चासीन्न पशवः।' (३।१३०)

   चरकसंहितायाम्—'आदिकाले खलु यज्ञेषु पशवः समालम्भनीया बभूवु-र्नालम्भनाय प्रक्रियन्ते स्म,' (चिकित्सास्थाने १९।४), महाभारते—'श्रूयते पुराकल्पे नृणां व्रीहिमयः पशुः। येनायजन्त यज्वानः पुण्यलोक-परायणाः।' (अनुशासनपर्वणि १७७।५४)।
5. 'ब्राह्मण ग्रन्थों में कभी अग्नि, कभी पृथिवी, कभी चन्द्र और कभी ग्रहादि को पशु कहा है। आकाशस्थ यज्ञों में ये पशु वेदियों के समीप रहते थे, इनका वध नहीं हुआ। यज्ञ करनेवाले देव अपने साथियों की बलि कैसे देते हैं, इसलिए कृतयुग में इस पृथिवी पर जो यज्ञ मनुष्यों द्वारा हुए, उनमें कहीं बलि नहीं दी गई। महाभारत, चरकसंहिता

अभवत्, तथ्यमिदं प्रमाणैरवज्ञायते।[1] इदानीमुपलब्धस्य अध्वरवेदस्य (यजुर्वेदस्य) सर्वासु संहितासु हिंसामयानां पशुयज्ञानामेव वर्णनमुपलभ्यते। यद्यपि पुराकाले गृहेषु पशूनां बन्धनमेव निरूढपशुबन्धः प्रतीयते, तथापि कालान्तरे आहिताग्नेः कृते पशुवधस्यानुष्ठानमावश्यकमभवत् तथा चोक्तं मनुस्मृतौ—'नियुक्तस्तु यथान्यायं यो मांस नात्ति मानवः। स प्रेत्य पशुतां याति संभवानेकविंशतिम्।'[2]

---

और वायुपुराण मे ऐसा लिखा है। उत्तरकाल में पिष्टपशु का विधान हुआ। यज्ञों में पशुवध सर्वथा नवीन कल्पना है।'

(वैदिक वाङ्मय का इतिहास, भाग १, पृ० ३३)

तथा च द्रष्टव्यम्—'अग्निः पशुरासीत् तमालभन्त। तेनाजयन्त।' 'सूर्यः पशुरासीत् तेनायजन्त,' (श० ब्रा० १३।२।७।१३,१४,१५)।

1. 'तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्तयत्तदा। दैवतैः सहितः सर्वैः सर्वसम्भारसंभृतम्॥ महर्षयस्तु तान् दृष्ट्वादीनान् पशुगणान् स्थितान्। पप्रच्छुरिन्द्रं सम्भूय कोऽयं यज्ञविधिस्तव॥ अधर्मो बलवानेष हिंसाधर्मेप्सया तव॥ यज्ञबीजैः सुरश्रेष्ठ येषु हिंसा न विद्यते। त्रिवर्षपरमकालमुषितैरप्ररोहिभिः। (वायुपुराणे अध्याये ३६), तथा च महाभारतस्य नारायणीयाख्ये पर्वणि वसूपाख्याने—'अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान्। स च छागोऽप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः। बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः। अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ।' (शान्तिपर्वणि अध्याये ३३७), एवमहिंसाहिंसयोरुभयोर्मतयोः पक्षौ पुराकालात् स्तः। तथा चाह विष्णुशर्मा-'ये यज्ञकर्मणि पशून् व्यापादयन्ति तेऽपि मुग्धाः परमार्थं श्रुतं न जानन्ति। यच्च केनचिदुक्तम् अजैर्यष्टव्यमिति तत्राजा व्रीहयः सप्तवार्षिका उच्यन्ते, न जायन्ते इत्यन्वयार्थबलात्। (काकोलूकीये ६५ श्लोकस्य पश्चात्)।

2. मनुस्मृति (५।३५), तथा चापस्तम्बेन श्रौतसूत्रे वाजसनेयिब्राह्मणस्य प्रामाण्यमुदाहृतं येनावगम्यते यद् आत्मनिष्क्रयणार्थं पुरुषेण प्रतिसंवत्सरं पशुना यजनीयं—मांसीयन्ति ह वा अग्नयो जुह्वतो यजमानस्य। ते यजमानमेव ध्यायन्ति। यजमानं संकल्पयन्ति। पचति ह वा अन्येष्वग्निषु वृथा मांसम्। अथैतेषां नान्या मांसाशा विद्यते। यस्यो चैते भवन्ति तं ततो नानीजानं पशुना संवत्सरोऽतीयात्। आयुष्यो ह वा अस्यैष आत्मनिष्क्रमण इति वाजसनेयकं भवति।'

(आ० श्रौ० ७।८।२८।८)

**प्रयोगकाल:**—कात्यायनस्य मते यजमानेन प्रतिवर्षं यावज्जीवं प्रावृषि पशिवज्या अनुष्ठेया ।[1] आपस्तम्बस्तु विकल्पते, तन्मते षट्सु षट्सु मासेषु प्रतिसंवत्सरं वा यजेत[2], कात्यायनोऽप्येवं विकल्पते ।[3] स याग: पौर्णमास्यामामावास्यायां वा अनुष्ठेय: ।

**देवता:**—अयं पशुयाग: किंदेवत्य इत्यस्मिन् प्रश्ने उभयोराचार्ययोर्मतं समानमस्ति ।[4] तत्र पशु: ऐन्द्राग्न:, सौर्य:, प्राजापत्यो वा, यदा सूर्यो देवता तदा सूर्यात्मका मन्त्रा: पठ्यन्ते नियोजनादौ, एवमन्येषामपि ज्ञेयम् । अयं याग: सदा गृहेषु कर्त्तव्य: ।[5]

**यूपच्छेदनम्**—उ० क० यक्ष्यमाणो यूपाहुतिं जुहोति चतुर्गृहीतमाहवनीये' उरु विष्णो विक्रमस्वेति[6] तत आज्यशेषमध्वर्युरादाय सतक्षाणो यजमानादयो यूपच्छेदनायारण्ये गच्छन्ति ।[7] उ० क० यूप्या वृक्षा विहिता:—'पलाशखदिरविल्वरौहीतका' इति, ततो यजमानस्तक्षा वा यूपमभिमृश्याभिमन्त्र्य च' 'ओषधे त्रायस्वेनमित्यूर्ध्वाग्रं दर्भमन्तर्धाय' स्वधिते मैनं हिंसीरिति स्वधितिना प्रहरति । प्रथमपतितं शकलं यजमान: संगृह्णाति ।[8] उ० क० आव्रश्चने अध्वर्युर्जुहोति,[9] का० क० स्थाणौ एव होतव्यं न यूपे ।[10] ततस्तक्षा यूपं समीकरणाय परिवासयति (छेदयति) ।

**यूपप्रमाणानि**—का० क० निरूढपशुबन्धस्य यूप: त्र्यरत्निश्चतुररत्निर्वा परिवासनीय:, तन्मतेन केचिद् एकारत्निप्रभृतीन् इच्छन्ति ।[11]

---

1. का० श्रौ० (६।१।१)
2. आ० श्रौ० (७।८।२८।६)
3. का० श्रौ०—आवृत्तिर्मुखयोर्वा (६।१।२)
4. का० श्रौ० (६।३।२६), आ० श्रौ० (७।८।२८।५)
5. का० श्रौ० (६।१।३)
6. का० श्रौ० (६।१।४), आ० श्रौ० (७।१।१।७)
7. का० श्रौ० (६।१।५), आ० श्रौ० (७।१।१।१३-१४)
8. का० श्रौ० (६।१।६,१२,१३), आ० श्रौ० (७।१।१।१५,१६,२।४,५)
9. का० श्रौ० (५।१।२०-२१), आ० श्रौ० (७।१।२।८)
10. का० श्रौ० (६।१।२२)
11. का० श्रौ० (६।१।२४–२६)

आपस्तम्बेन चेदं वाजसनेयकं मतं स्वस्मिन् श्रौतसूत्रे उदाहृतम्।[1] आपस्तम्बस्य स्वमते यूपः पञ्चारत्निश्छेत्तव्यः। अथवा यावान् यजमान ऊर्ध्वबाहुस्तावान् छेत्तव्यः, अथवा यावान् रथे तिष्ठन् ऊर्ध्वबाहुस्तावान् छेत्तव्यः।[2]

उ० क० तक्षा यूपमष्टाश्रिमुपरवर्जितं परिवासयति, यूपस्याग्रिमोऽवयवश्चषालञ्च पृथुमात्रमष्टाश्रि मध्ये संनतं च कर्त्तव्यम्। तच्चषालादूर्ध्वं यूपस्याग्रे द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा तक्षा प्रतिमुञ्चति।[3] आ० क० याग्नेरार्जवेन तिष्ठति साग्निष्ठाश्रिः भवति, तक्षणप्रभवाश्शकलास्तेषां मध्ये कश्चित्स्वरुर्भवति अन्योऽधिमन्थनः।[4]

**वेदिः**—का० क० वरुणप्रघासवद् निरूढपशुबन्धस्य वेदिर्भवति[5], आ० क० रथमात्री निरूढपशुबन्धस्य वेदिरुत्तरवेदिस्तु शम्यामात्री।[6] चात्वालादीनां विवरणं तु वरुणप्रघासप्रकरणे ह्यभिहितं तदलं तदावृत्याऽत्र। आ० क० वेदिमध्ये प्रादेशमात्रीं गोपदमात्रीं अश्वशफमात्रीं वा उत्तरनाभिं चतुस्स्रक्तिं कृत्वा उभे वेदी अध्वर्युरभिमन्त्रयते—'चतुश्शिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये। तयोर्देवा अधिसंवसन्त उत्तमे नाके इह मादयन्ताम्॥'[7] का० क० पशुबन्धे चैकमग्निमिध्मेनाध्वर्युः प्रणयति, तथा चाह आपस्तम्बः—पशुबन्धस्याहवनीय एव गार्हपत्यो भवति।[8] आ० क० त्वध्वर्युरुपयम्याग्निमाहवनीय उद्यतहोमं जुहोति—'यत्तो पावक चकृमा कच्चिदाग' इत्यादि, पूर्ववत् स उपयमनीभिः सिकताभिरुद्यताग्निं हृत्वा मन्त्रपूर्वकं यत्र

---

1. 'त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयकम्' (आ० श्रौ० ७।२।२।१७), तथा च—'एकारत्निप्रभृत्यात्रयस्त्रिंशदरत्नेरव्यवायेनेके समामनन्ति।'
(आ० श्रौ० ७।१।२।१२)
2. आ० श्रौ० (७।१।२।११,१४,१५)
3. का० श्रौ० (६।१।२७-२६), आ० श्रौ० (७।१।३।२,४,६)
4. आ० श्रौ० (७।१।३।३)
5. का० श्रौ० (६।२।१)
6. आ० श्रौ० (७।१।३।७,१३)
7. आ० श्रौ० (७।२।५।१)
8. का० श्रौ० (६।२।३), आ० श्रौ० (७।२।७।३)

संभारेषु प्रतिष्ठाप्य द्वादशगृहीतेन स्रुचं पूरयित्वा सप्तवत्या ऋचा पूर्णाहुतिं चतस्रोऽतिमुक्तीश्च जुहोति।[1] तत्र त्रयोविंशतिदारुरिध्म आश्वावलः प्रस्तरः ऐक्षवी विधृती काष्मर्यमयाः परिधयश्च भवन्ति।[2]

**व्रतोपायनादि**[3]—उ० क० अत्र परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि यथावत् भवन्ति, तत्र पूर्वं व्रतग्रहणम्, ततः प्रणीताप्रणयनं, ततः परिस्तरणादीनि क्रमेण भवन्ति।[4] उ० क० मतयोर्व्रतोपायानादीन् विष्णुक्रमान्तान् पदार्थान् हविर्यागसविधे न कुर्यात्।[5] आपस्तम्बेनात्रेदं मतं (वाजसनेयकम्) उपस्थापितम्।[6] आ० क० चैतानि यज्ञायुधानि गृह्यन्ते स्फ्यमग्निहोत्रहवणीं वसाहोमहवनीं द्वितीयां जुहूं पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ हृदयशूलमसिं कुम्भीं पलाशशाखां शाखापवित्रं काष्मर्यमयौ वपाश्रपण्यौ द्विशूलामेकशूलां चौदुम्बरं मैत्रावरुणदण्डमास्यदघ्नं वा रशने च।[7]

**यूपावटखननम्**—उ० क० सावित्रेण मन्त्रेणाध्वर्युरिभ्रमादाय वेदिं परिलिखित्वा आहवनीयपार्श्वे उपरसम्मितं यूपावटं खनति, अग्रेणावटं प्राज्यं यूपं च निदधाति।[8] का० क० स यूपस्योपरि कुशमुष्टिं प्रथमं शकलं च निधाय समीपे चषालं च निधाय यवानोप्य तं प्रोक्षति[9], प्रोक्षणीशेषं यूपावटे चासिञ्चति।[10] आ० क० प्रथमं शकलं घृतेनावास्य तस्मिन् मन्त्रपूर्वकं हुत्वा तं यूपे प्रक्षिपत्यध्वर्युः[11], का० क० चैवंविधो होमः तूष्णीं क्रियते।[12]

1. आ० श्रौ० (७।२।६।५-७, ७।१-२)
2. आ० श्रौ० (७।२।७।७)
3. व्रतोपायनम्—व्रतग्रहणम्
4. का० श्रौ० (६।२।५), आ० श्रौ० (७।२।८।१)
5. का० श्रौ० (६।२।४)
6. 'इष्टिविधो वा अन्यः पशुबन्धः सोमविधोऽन्य'......इति वाजसनेयकम्' (आ० श्रौ० ७।८।२८।२)
7. आ० श्रौ० (७।२।८।३)
8. 'देवस्य त्वा सवितुरित्यादि (शु० ब० ५।२२)
9. का० श्रौ० (६।२।८-११), आ० श्रौ० (७।२।९।६-९))
10. का० श्रौ० (६।२।११-१७)
11. आ० श्रौ० (७।२।९।१०)
12. का० श्रौ० (६।२।२०)

**यूपाञ्जनम्**—तत उ० क० अध्वर्युर्यजमानो वा यूपमसंस्कृतेनाज्येनानक्ति, चषालं चाक्तं यूपाग्रे प्रतिमुच्याग्निष्ठां यजमानोऽनक्ति ।[1]

**यूपोच्छ्रयणम्**—अथ षड्विंशे ब्राह्मणे पठ्यते—'आप्लावयन्ति, अलङ्कुर्वन्त्यहतेन वाससा छादयन्ति' (१।२९-३०) एवं छादनादि कृत्वा यूपे रशना भन्त्स्यते तत्रापस्तम्बमते अध्वर्युर्यूपं त्रिस्सर्वतः संमृशति, उ० क० आपरिव्ययणाद् यूपोच्छ्रायणपर्यन्तं यूपं नोत्सृजन्ति, रशनाया यूपे परिवेष्टनं परिव्ययणमुच्यते, ततः प्रेषानन्तरं मन्त्रपूर्वकं यजमानादयो यूपमुच्छ्रयन्ति ।[2] ततो यूपावटं मैत्रावरुणदण्डेन समं पूरयित्वा अध्वर्युर्यजमानं वाचयति—'विष्णोः कर्माणि पश्यतेति' ।[3] आ० क० त्वनेन मन्त्रेणाहवनीयं प्रति अध्वर्युरग्निष्ठां संमिनोति ।[4]

**यूपपरिव्ययणम्**—उ० क० यूपपरिव्ययणार्थं त्रिगुणा त्रिव्यामा कौशी रशना, पशुबन्धनार्थं तु द्विगुणा द्विव्यामा कौशी रसना, इति द्वे दर्भमय्यौ रशने भवतः ।[5] तत उ० क० 'परिवीरसीति' मन्त्रेणाध्वर्युर्यूपं रशनया त्रिः प्रदक्षिणं परिव्ययति, तस्यान्तःप्रान्तेषु तां प्रवेशयति ।[6] स्वरुमुत्तरेणाग्निष्ठां मध्यमे रशनागुणे चावगूहति ।

**पशूपाकरणम्**—(शाखादिभिः स्पर्शनम्)—का० क० बल्यर्थं मन्त्राम्नानात् छागं पशुमध्वर्युरुपाकरोति[7], शाखया, तृणाभ्यां वा तमुपस्पर्शन्, 'इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्याह ।[8] का० क० तु तृणेन पशुमुपस्पृश्य 'उपदेवानिति' (शु० य० ६।७) उपाकरोति ।[9] आ० क० पशुः कूटकर्णकाणखण्डवण्डश्लोणसप्तशकवर्जं भवेत्, यदा पशोर्दन्ताः पुनः जायेरन् तदा स मेध्यो भवति ।[10] एवं च कात्यायनोऽप्याह स पशुर्जातदन्तो व्यङ्गश्च भवेत् ।[11]

---

1. का० श्रौ० (६।२।२१,३।२-४), आ० श्रौ० (७।३।१०।२-३)
2. आ० श्रौ० (६।३।७), आ० श्रौ० (७।३।१०।७)
3. का० श्रौ० (६।३।१०-१२)
4. आ० श्रौ० (७।३।१०।६)
5. का० श्रौ० (६।३।१५,२७), आ० श्रौ० (७।३।११।२)
6. का० श्रौ० (६।३।१५,१७), आ० श्रौ० (७।४।११।५,६)
7. का० श्रौ० (६।३।२०)
8. आ० श्रौ० (७।४।१२।८)
9. का० श्रौ० (६।३।१६)
10. आ० श्रौ० (७।४।१२।१,४)
11. का० श्रौ० (६।३।२१-२२)

**अग्निमन्थनम्**—का० क० पशूपाकरणानन्तरं वैश्वदेवपर्ववदग्निमन्थनं भवति।[1] आपस्तम्बेनात्र किञ्चित् विस्तरेणाग्निमन्थनविधिरुक्तः। तत्राध्वर्युरग्ने जनित्रमसीत्यधिमन्थनशकलं, 'वृषणौ स्थ' इति प्राज्यौ दर्भौ निधाय च' उर्वश्यसीत्यधरारणिमादत्ते, 'पुरूरवा' इत्युत्तरारणिं' गृह्णाति, तत 'आयुरसीति', समवधायाग्निं' मन्थति, तन्मते यदि मथ्यमानो न जायते तर्हि राक्षोघ्नीमृचं ब्रूयात्। ततोऽध्वर्युराहवनीये परिधिं प्रहृत्य स्रुवेणाभिजुहोति।[2]

**पशुनियोजनम्**—उ० क० पशुं द्विगुणया रशनया गले नागपाशेन बद्ध्वा यूपे तं शेषरशनया बध्नात्यध्वर्युः।[3] ततः पशुं प्रोक्ष्य तं पाययति—'अपां पेरुरिति' उभयोः कल्पयोः।[4]

**पशुसमञ्जनम्**—तत उ० क० सामिधेन्यर्थं प्रैषं कृत्वा अध्वर्युर्जुह्वा आज्येन पशुं ललाटांशश्रोणिषु समनक्ति।[5]

अत्र निरूढपशुबन्धे षड् ऋत्विजो भवन्ति—होताऽध्वर्युर्ब्रह्मा, आग्नीध्रः अधिग्रुः, मैत्रावरुणश्च षष्ठः, प्रतिप्रस्थाता च सप्तमो विधीयते। तथा च शमिता[6] एभ्य ऋत्विग्भ्यः पृथग्भवति, स एव पशुं घातयति, श्रपयति च।

उ० क० अध्वर्युर्दैवं मानुषं च होतारौ वृत्वा औदुम्बरं दण्डं दत्वा मैत्रावरुणमृत्विजं प्रवृणीते।[7]

**प्रयाजाः**—उ० क० तिष्ठति, पशावेकादशानां प्रयाजानां यजनं भवति।[8] का० क० अध्वर्युर्दश प्रयाजानिष्ट्वा विशसितारमाह—

---

1. का० श्रौ० (६।३।२५)
2. आ० श्रौ० (७।४।१२।१२,१३,१४, १३।४,७)
3. का० श्रौ० (६।३।२७-२८), आ० श्रौ० ७।४।१३।८)
4. का० श्रौ० (६।३।३१-३२), आ० श्रौ० ७।४।१३।१०-११)
5. का० श्रौ० (६।४।२), आ० श्रौ० (७।५।१४।१)
6. वृत्तिकारो रामाग्निचिद् आह—'मीमांसकैः अध्वर्योरिव शमितृत्व उक्तेऽपि विश्वसृजामयने 'मृत्युस्तदभद्धाता शमितोग्रो विशांपतिः' इति अध्वर्योरन्यस्य शमितृदर्शनात्। (आ० श्रौ० भाष्ये, भाग २, पृ० २२८)
7. का० श्रौ० (६।४।३-५), आ० श्रौ० (७।५।१४।५)
8. का० श्रौ० (६।४।८), आ० श्रौ० (७।५।१४।६)

'शासमाहरेति' (असिमानयेति)[1], आ० क० शमिता स्वरूमन्तर्धाय स्वधितिना घृतेन पशुं समनक्ति शिरसि ।[2]

**पर्यग्निकरणम्**—उ० क० आग्नीध्र आहवनीयादुल्मुकमादाय त्रि: समन्तं पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान् पर्यग्निकरोति । तत: स उल्मुकं प्रतिपरास्य पुन: त्रि: प्रतिपर्यति, निवर्तते यथागतम् ।[3] आ० क० पर्यग्नौ क्रियमाणे अध्वर्युरेकं अयाव्यहोमं जुहोति ।[4] तत: का० क० प्रतिप्रस्थाता वपाश्रपणीभ्यां काष्मर्यमयीभ्यां पशुमन्वारभते ।[5] आ० क० तु वपाश्रपणीभ्यां पशुमध्वर्युर्यजमानश्चान्वारभेते ।[6] वपाश्रपणीं द्विशूल्य सकर्णं मेथ्याकारा भवति । तत: शमिता पशुं कण्ठे बद्ध्वा मृत्यवे नयति ।

**संज्ञपनम्**—आ० क० कश्चिदृत्विक् परिकर्मी वा पशो: शकृन्निधानार्थमूवध्यगोहनाम अवटं खनति ।[7] तत उ० क० शामित्रदेशस्य पार्श्वे शमिता बर्हिरुपास्यति, तस्मिन् बर्हिषि (तृणे) पशुं प्रक्षिप्य प्रत्यक्शिरसमुदक्पादं तस्य मुखं संगृह्य ताम्यमानं वेष्केण (गलावेष्टकेन) वा बद्ध्वा संज्ञपयति । संज्ञपने पशु: शब्दं न कुर्यात् तथा मारयति[8], (अमायुं कृण्वन्तं संज्ञपयत' इति अध्वर्युराह, आ० श्रौ० ७।५।१६।५), संज्ञप्ते पशौ अध्वर्यु: समिधं विनाद्वेपरिपशव्याहुती जुहोति ।[9] आ० क० त्वत्र 'स्वर्विदसि इत्यादयो बहुला मन्त्रा: संगृहीता:, ये प्रायेण और्ध्वदेहिके (कर्मणि पितृमेधादिषु) पठनीया: सन्ति, पशुसंज्ञपनात्तेषां अण्वपि सम्बन्धो न प्रतीयते ।[10] का० क० ततोऽध्वर्यु:

---

1. का० श्रौ० (६।४।११)
2. आ० श्रौ० (७।५।१४।११)
3. का० श्रौ० (६।५।२,४), आ० श्रौ० (७।५।१५।२-३)
4. आ० श्रौ० (७।५।१५।४)
5. का० श्रौ० (६।५।७)
6. आ० श्रौ० (७।५।१५।७)
7. आ० श्रौ० (७।५।१६।१)
8. का० श्रौ० (६।५।१५-१९), आ० श्रौ० (७।५।१६।४-६)
9. का० श्रौ० (६।५।२४-२५),'परिपशव्याहुती' (द्रष्टव्यं शु०य० २२।२४), आ० श्रौ० (७।५।१७।३)
10. आ० श्रौ० (७।५।१६, ७।५।१७ कण्डिके)

पशुबन्धनरशनां माहिर्भूरिति (शु० य० ६।१२) मन्त्रेण चात्वाले प्रास्यति[1], आ० क० स रसनां ग्रीवासु संवेष्ट्य एकशूलायां वपाश्रपण्यामुपरि निधाय चात्वाले प्रास्यति।[2] 'अरातीयमन्ताधरं करोमीति' मन्त्रेण।

**पत्न्या आनयनम्**—का० क० तत प्रैषानन्तरं प्रतिप्रस्थाता यजमानपत्नीमानयति, तां पान्नेजनहस्तां च वाचयति–'नमस्ते आतानेति' (शु० य० ६।१२–१३), आ० क० तु पत्नी अनेनैव मन्त्रेण आदित्यमुपतिष्ठते।[3]

**पशुशोधनम्**—का० क० पत्नी पशोः प्राणायतनानि, मुखम्, नासिके, चक्षुषी, कर्णौ नाभिं मेढ्रं पायुं पादाश्च मन्त्रपूर्वकमद्भिः शोधयति, पान्नेजनशेषेण जलेनाध्वर्युर्यजमानश्च शिरःप्रभृतिजघनप्रदेशं चानुषिञ्चतः।[4] आ० क० सर्वाण्यङ्गान्यध्वर्युरभिषिञ्चति, पत्नी त्वाप्याययति, अथवा विपरीतकल्पोऽपि वा भवति।[5]

**वपायागः**—तत उ० क० अध्वर्युः पशुमुत्तानं कृत्वा नाभेरग्रतोऽङ्गुलचतुष्टयं त्यक्त्वा ओषधे त्रायस्वैनमिति बर्हिर्निधाय स्वधितिना नाभेः पार्श्वतश्छिनत्ति, पशोरुदरात् वपामुत्खिद्य तया वपया वपाश्रपण्यौ छादयति—'घृतेन द्यावापृथिवीं' इति मन्त्रेण।[6] तत का० क० अध्वर्युर्वपां चात्वाले परिषिच्य प्रोक्षति, तां प्रतिप्रस्थाता शामित्रे च प्रतपति।[7] आ० क० तु शमिता वपोद्धरणविवरं स्थगयित्वा शामित्रे वपां परितप्य, आदित्यमुपस्थायाभिप्रव्रजति।[8] ततः प्रतिप्रस्थाता

---

1. का० श्रौ० (६।५।२६)
2. आ० श्रौ० (७।५।१७।६)
3. का० श्रौ० (६।६।१), आ० श्रौ० (७।६।१८।२)
4. का० श्रौ० (६।६।२-७)
5. आ० श्रौ० (७।६।१८।७)
6. का० श्रौ० (६।६।८,११), आ० श्रौ० (७।६।१६।१)
   अत्रापि मन्त्रलिङ्गे घृतपदमुल्लिखितमनेन प्रतीयते पुराकल्पे (ऋग्वेदकाले वपायागस्य पशुबन्धस्य) प्रचारो न आसीत्, इयं तु नवीना कल्पनेति मन्तव्यम् (लेखकः)।
7. का० श्रौ० (६।६।१३)
8. आ० श्रौ० (७।६।१६।४)

वपामाहवनीये श्रपयति, ततः शृतया वपया अध्वर्युर्यागं करोति। अत्र उ० क० आज्यभागौ अपि विकल्पेन क्रियेते। उ० क० अध्वर्युः 'स्वाहा देवेभ्य' इति पूर्वं परिवप्यं हुत्वा जुह्वामुपस्तीर्य हिरण्यशकलमवधाय कृत्स्नां वपामादाय अभिघारयति।[1] ततोऽध्वर्युश्छागस्य वपाया इन्द्राग्निभ्यां जुहोति, आहवनीये च वपाश्रपणीं प्रक्षिपति। ततः सर्वे ऋत्विग्यजमानाश्चात्वाले स्नानं कुर्वन्ति।[2] आ० क० अध्वर्युर्वपाश्रपणीं प्रहृत्य संस्रावेणाभिजुहोति, यजमानश्च वरं ददाति अनड्वाहं, तिस्रो वा धेनूरिति।[3]

**पशोरङ्गश्रपणम्**—उ० क० पशोर्हृदयं जिह्वा, क्रोडः (वक्षः) यकृत्, वृक्यौ, सकबाहुः, पार्श्वं षडविंशत्या बंक्रिभिः सह, श्रोणिः, गुदकाण्डं—एतानि अङ्गानि देवताभ्यो, जुह्वां होतव्यानि भवन्ति। दक्षिणबाहुम्, आन्त्रस्याणिष्ठं तृतीयभागं सव्यां श्रौणिं चेतानि अङ्गानि स्विष्टकृदर्थं उपभृता हूयन्ते। अतिस्थूलं गुदमुपयडभ्यो यजति, पशोरन्यानि भागानि—वनिष्ठुं (स्थूलान्त्रम्), जाघनीं[4] क्लोमानं, अध्यूध्नीं (शतपुरं), पुरीततम् (पारि–मांसम्), मेदः, चन्दुकं (वृक्ये हृदये मध्ये च यद्भवति) चावपति। अध्वर्युः शमिता वा पशोरुवध्यं (पुरीषं) श्वभ्रे (उवध्यागोहे) प्रक्षिप्य, लोहितं च तस्मिन्नेव श्वभ्रे प्रतिक्षिपति 'रक्षसां भागोऽसीति।[5] का० क० पशोरवदानानि उखायां शामित्रे श्रपयति, हृदयं तु शूले प्रोतयित्वा शामित्रे श्रपयति।[6] आपस्तम्बस्त्वत्र उखास्थाने कुम्भीशब्दं प्रयुक्तवान्।[7]

**पशुपुरोडाशयागः**—का० क० त्वत्र पशुदेवतायै एकादशकपालं पुरोडाशं विदधाति।[8] आ० क० तु यजमानो व्रीहिमयमेकादशकपालं द्वादशकपालं पुरोडाशं निर्वपति। स च पुरोडाशः यद्दैवत पशुस्तद्दैवतो

1. आ० श्रौ० (७।६।२०।६), का० श्रौ० (६।६।२४)
2. का० श्रौ० (६।६।२६-२८), आ० श्रौ० (७।६।२१।१,३,६)
3. आ० श्रौ० (७।६।२१।४,५)
4. जाघनी पशोः पुच्छमिति हरिस्वामिनः, जाघनी बालदण्ड इति माधवाचार्यः, जाघनी पशोः पुच्छमिति च जैमिनिः (मी० सू० ३।३।१८)
5. का० श्रौ० (६।७।६-१३), आ० श्रौ० (७।७।२२।६)
6. का० श्रौ० (६।७।१४)
7. आ० श्रौ० (७।७।२२।६)
8. का० श्रौ० (६।७।१६)

भवति।[1] अत्र उ० क० अवहननार्थं हविष्कृदाह्वानं च भवति।[2] आ० क० अध्वर्युर्वपाचारानन्तरं पुरोडाशं निरुप्यासाद्य शृते पशौ तेन पुरोडाशेन च चरति, यद्वा पशुमालभ्य पुरोडाशं निर्वपति।[3] ततः इडाभक्षणान्तं कर्म भवति।[4]

**पशुयागः**—उ० क० इडान्ते अध्वर्युः शमितारं पशुहविःश्रपणाय शास्ति, अध्वर्युस्त्रिवारं पृच्छति, शमिता च पशुं त्रिः प्रच्यावयति। हविषिऽकृते अध्वर्युरुपविश्य जुह्वां पूर्वं हृदयमभिघार्य ततस्तूष्णीं सर्वाणि पश्ववदानानि अभिघारयति, ततो वपावद् हृदयमङ्गानि च हृत्वा वेदेर्दक्षिणभागे बर्हिष्यासादयति। उ० क अध्वर्युर्वसां वसाहोमहवन्यां करोति, ततः प्रतिप्रस्थाता वसाहोमं जुहोति। ततो वनस्पतियागं कृत्वा हविश्शेषं वषट्कृते जुहोति। अत्र दिशां व्याघारणं (होमः) च भवति।[5]

**अवान्तरेडाभक्षणम्**—का० क० अध्वर्युः पशोरवशिष्टानि अवदानानि च आलभते।[6] आ० क० पशोः शिरप्रादीन्यङ्गानि नावद्यति। सकलान्येतानि अशृतानि भवन्ति। पश्ववदानहोमानन्तरमध्वर्युः पश्विडां होत्रे प्रयच्छति, वनिष्ठुमग्नीध्रे ददाति, अध्यूध्नीं होत्रे प्रदीयते, तत उपहूता मैत्रावरुणषष्ठाः सर्वे ऋत्विज इडां भक्षयन्ति।[7]

**उपयजनम्**—उ० क० इडाभक्षणानन्तरं मार्जने कृते अनुयाजेषु हूयमानेषु च आग्नीध्रः शामित्रादग्निमाहरति, ततः प्रतिप्रस्थाता होत्रीये उपयजति, स गुदकाण्डमेकादशधा छित्वा वषट्कृते वषट्कृते एकैकं गुदकाण्डं हस्तेन जुहोति 'समुद्रं गच्छ स्वाहा' इति प्रतिमन्त्रम्। अनुयाजान्ते अध्वर्युर्जुह्वामवधाय स्वरुं च जुहोति।[8]

---

1. आ० श्रौ० (७।७।२२।३-४)
2. का० श्रौ० (६।७।१८), आ० श्रौ० (७।७।२२।१०)
3. आ० श्रौ० (७।७।२२।११)
4. का० श्रौ० (६।७।२५), आ० श्रौ० (७।७।२३।२)
5. का० श्रौ० (६।८।८-२१), आ० श्रौ० (७।७।२३-२५)
6. का० श्रौ० (६।९।१), आ० श्रौ० (७।८।२५।६)
7. का० श्रौ० (६।९।२।६), आ० श्रौ० (७।८।२६।२-७)
8. का० श्रौ० (६।९।७-१२), आ० श्रौ० (७।८।२३।८-११)

**पत्नीसंयाजाः**—तत उ० क० प्रतिप्रस्थाता पशुजाघन्या पत्नीसंयाजान् यजति। उ० क० स उत्तानाया जाघन्या देवपत्नीभ्यो यजति, जाघन्या उपरिभागादग्नये गृहपतये यजति, आज्येन च सोमत्वष्टारौ यजति, अथवा चत्वारोऽपि[1] पत्नीसंयाजा जाघन्या इज्यन्ते।

**हृदयशूलप्रासनादि**—ततः समष्टियजूंषि हुत्वा सर्वे ऋत्विग्यजमानाः तडागादिस्थमुदकं गच्छन्ति, का० क० विकल्पेन आहवनीयमुपस्थाय ते हृदयशूलेनावभृथं यन्ति अथवा अवभृथानन्तरमाहवनीयमुपतिष्ठन्ते।[2] आ० क० तु ते अवभृथानन्तरमाहवनीयमुपतिष्ठन्ते।[3] उ० क० अध्वर्युः शुष्कार्द्रसन्धौ शूलमवगूहति, द्वेष्यं मनसा ध्यायन् च जपति—'शुगसीति'। ततः 'सुमित्रा न आप' इति जपित्वा सर्वे सहपत्नीका मार्जयन्ते, आहवनीये समिध आधाय तमुपतिष्ठन्ते।[4] का० क० ततो यजमानो यूपमुपस्थाय व्रतं विसृज्य चतुर्गृहीतं यूपाहुतिवत् जुहोति, यथोत्साहं चाध्वर्यवे हिरण्यादिकं दद्यात्।[5] आ० क० तु यजमानो यूपमुपस्थाय 'यज्ञ शं च म' इति जपति।[6]



1. पत्नीसंयाजानां सोमादयः चतस्रो देवता भवन्ति (द्रष्टव्यं दर्शपूर्णमासप्रकरणे), तथा च श्रुतिः—'जाघन्या पत्नीः संयाजयन्ति।'
(श० ब्रा० ३।८।५।६)
2. का० श्रौ० (६।१० १-२)
3. आ० श्रौ० (७।८।२७।१६)
4. का० श्रौ० (६।१०।५), आ० श्रौ० (७।८।२७।१५-१६)
5. का० श्रौ० (६।१०।१०-१३)
6. आ० श्रौ० (७।८।२८।३)

# षष्ठोऽध्यायः

# सोमयागाः

## (१) अग्निष्टोमः

**सोमक्रतुः**—'यज्ञं व्याख्यास्यामः' 'स त्रिभिर्वेदैः'[1] इति वेदत्रयसाध्यत्वं यदुक्तमापस्तम्बाचार्येण तदस्यैव सोमक्रतोरेव, न ततः पूर्वमनुष्ठेयानामग्निहोत्रनिरूढपशुबन्धदर्शपूर्णमासादीनाम्। सोमयागात्प्रभृत्येव च वेदत्रयसम्बन्धः। अत एव वेदत्रयसम्बन्धाद् ऋत्विजोऽत्र व्रियन्ते तत्तद्वेदसम्बन्धिकर्मकरणार्थम्। त्रयीविद्या[2] सोमक्रतुभिस्सह विशेषेण सम्बध्यते। सोमयागेषु सोमपातारः सोमपा उच्यन्ते। सोमो नाम लताविशेष इति केचिदभिप्रयन्ति।[3] सोमयागानामेव क्रतुसंज्ञा नान्येषाम्।

---

1.

2. त्रैविद्या मां सोमपाः पूतपापाः, यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। (गीतायाम् ९।२०) तथा च ऋग्वेदे—'अपाम सोममममृता अभूम ······।' इति (८।४८।३)।

3. 'दिवि वै सोम आसीत्······गन्धर्वो विश्वावसुः पर्यमुष्णात्ते देवा विदुः' (श० ब्रा० ३।२।३।२), ततः कोऽयं सोमः, नेदानीं निश्चेतुं पारयामः, तत्र आयुर्वेदशास्त्रे सर्वासां बलकरीणामौषधीनां सामूहिकी संज्ञा सोम इति उपलभ्यते, वेदे च श्रूयते—'सोमस्येव मौजवतस्य भक्षो बिभीदको जागृविर्मह्यमक्षान्' (ऋ० १०।३४।१)। अयं मौजवतः सोमो मूजवान्नामपर्वतोत्पन्नस्य औषधिविशेषस्य 'भक्ष' आसीदिति गम्यते। श्रीसत्यव्रतसामाश्रमीमहोदयानां मते 'मूजवान्नाम पर्वतस्तु कैलाशगिरेः पश्चिमस्थोऽद्यापि विद्यते' (द्र० ऐतरेयालोचने पृ० ३५) तथा च वाजसनेयिसमाम्नाये 'एतत्ते रुद्रावसम्, तेन परो मूजवन्तोऽतीहि' (वा० सं० ३।६१), इति मन्त्रेणापि रुद्रनिवासो मूजवानिति कैलाशपर्वतस्यापरनामधेयं प्रतिभाति मे। सुश्रुतसंहितायां च सोमभेदाः—

अंशुमान् मुञ्जवांश्चैव चन्द्रमा रजतप्रभः।
दूर्वासोमः कनीयांश्च श्वेताक्षः कनकप्रभः॥

**अग्निष्टोमो ज्योतिष्टोमश्च पदार्थौ**—अयं सोमयागोऽग्निष्टोम-संस्थाकत्वादग्निष्टोम इत्युच्यते । अग्निष्टोम इति साम्नः संज्ञा, संस्थाशब्दस्तु समाप्तिवाची । सामवेदे 'यज्ञायज्ञा वो अग्नये' इत्यादि-गेयत्वेन विहितं साम अग्निष्टोम उच्यते, अतोऽग्निष्टोमसाम्ना समाप्य-मानत्वात् अस्य अग्निष्टोम इति युक्ता संज्ञा । एवं त्रिवृत् पञ्चदश सप्तदश एकविंश इति चत्वारः स्तोमा ज्योतिःपदेनाभिधीयन्ते,

---

प्रतावांस्तालवृन्तः करवीरोऽंशवानपि ।
स्वयंप्रभो महासोमो यश्चापि गरुणडाहृतः ॥
गायत्रस्त्रैष्टुभः पाङ्क्तो जागतः शाक्वरस्तथा ।
अग्निष्टोमो रैवतश्च यथोक्त इति संज्ञितः ॥ (२६।२–७)

तस्योत्पत्तिस्थानानि च—

हिमवत्यर्बुदे सह्ये महेन्द्रे मलये तथा ।
श्रीपर्वते देवगिरौ देवसह्ये तथा ।
पारियात्रे च विन्ध्ये च देवसुन्दे ह्रदे तथा ।
उत्तरेण वितस्तायाः प्रवृद्धा ये महीधराः ।
पञ्च तेषामधो मध्ये सिन्धुनामा महानदः ।
हठवत् प्लवते यत्र चन्द्रमाः सोमसत्तमः ।
तस्योद्देशेषु चाप्यस्ति मुञ्जवानंशुमानपि ।
कश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् ॥ (सु० सं० २६।२७।३०)

ऋग्वेदे च सोम ओषधिरुच्यते–(१०।८५।३)—

'सोमं मन्यते पपिवान् यत् सम्पिषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥

तथा च धर्मयुगनाम्नि प्रसिद्धायां साप्ताहिकपत्रिकायां (६–२–७५) स्वर्ग से पृथ्वी पर सोम लानेवाला पक्षी : श्येन' इति नाम्नि लेखे', मारुती चितमपल्ली लिलेख–'अमरीकी शोधकर्ता आर० गार्डन वासन ने सिद्ध किया है कि सोम 'फ्लाइड अगरिक' (अमानिता मस्कारिया) नाम से जाननेवाला कवक है । उन्होंने अपनी पुस्तक 'सोम, दि डिवा-इन मशरूम आफ इम्पार्टलिटी' में ऋग्वेद में वर्णित सोम के 'फलाइड अगरिक' से साम्य को अनेक रंगीन चित्रों द्वारा समझाया है···उनके अनुसार यह वनस्पति साइबेरिया और नार्वे से ईशान्य रूस तक के भागों के गीले पर्वतशिखरों पर मिलती है (पृ० २०) तथा च 'ऋग्वेद

ज्योतींषि स्तोमा यस्य स ज्योतिष्टोमः। तथा चोक्तं ब्राह्मणे—'त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः', (तै० ब्रा० १।५।११)। अस्य ज्योतिष्टोमस्य चतस्रः संस्थाः-अग्निष्टोमः उक्थ्यः, षोडशी, अतिरात्रश्च। एतासामेव चतसृणां संस्थानां क्वचिदावापोद्वापादिना अपरास्तिस्रः संस्थाः सम्पाद्यन्ते—अत्यग्निष्टोमः, वाजपेयः, अप्तोर्यामश्च। एवं सप्तसंस्थाको ज्योतिष्टोमक्रतुः।

**अग्निष्टोमस्य प्रथमत्वम्**—अत्र एषां सोमक्रतूनां कः प्रथम इत्यस्मिन् प्रश्ने पुराकाले यज्ञविदां मतभेदाः प्रस्फुटिता अभवन्। पतञ्जलिना निदानसूत्राख्ये ग्रन्थे अस्य प्रश्नस्य भूयसी मीमांसा कृता। तत्राचार्यः पतञ्जलिरनेकेषामाचार्याणां मतान्युदाजहार—'अथ का प्रथमा संस्थेति, आग्निष्टोमीं प्रथमां मन्ये इति शाण्डिल्यः। प्रथमं ह्येवं स्नानं भवति। अथापि प्रथममधीमहे।···'तां प्रथमां मन्ये इति गौतम।'··· 'अतिरात्रीं प्रथमां मन्ये इति धानञ्जयः।' 'अथापि शश्वद्बह्वृचा अतिरात्रीमेव प्रथमामधीयते।'[1] भारद्वाजस्त्वाह—'अतिरात्रमेके प्रथमं यज्ञं समामनन्ति।'[2] आपस्तम्बश्चाह—'अग्निष्टोमः प्रथमयज्ञः[3], कात्या-

---

में श्येन पक्षी का कई स्थानों पर उल्लेख है। ६।४६।१३)···सोम के खेतों की रक्षा और पर्वतों से सोम चुनकर लाने का अद्भुत काम इन श्येनों से कराया जाता था।

(पृ० तदैव) अत्र प्रामाण्ये उदाहर्त्तव्या मन्त्राः—

'आदाय श्येनो अभरत् सोमं सहस्रं सवां अयुतं च साकम्।'
(ऋ० ४।२६।७)

'नव च यन्नवतिं च स्रुवन्तीः श्येनो न भीतो अतरो रजांसि।'
(ऋ० १।३२।१४)

'यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः।'
(ऋ० ७।६३।५)

'असमने अध्वनि वृजिने पथि श्येना इव श्रवस्यवः।'
(ऋ० ६।४६।१३)

1. निदानसूत्रे (प्रपा० ३ पृ० ४३-४५)
2. भार० श्रौ० (१०।२।१३)
3. आ० श्रौ० (१०।१।२।१७)

यनोऽपि प्रथममग्निष्टोमं वर्णयति ।[1]

**प्रयोगकाल:**—सर्वेषां मते दर्शपूर्णमासाभ्यामिष्ट्वा यजमान: सोमेन यजेत । कात्यायनापस्तम्बयोरुभयोर्मते यजमानो वसन्तर्तौ ज्योतिष्टोमेन यजेत ।

**ऋत्विग्वरणम्**—सर्वेषु सोमक्रतुषु सर्वप्रथमं ऋत्विग्वरणं भवति । तदुभयो: कल्पयो:[2] यक्ष्यमाण: षोडशर्त्विजो वृणीते, ते च भवन्ति—ब्रह्मा, उद्गाता, होता, अध्वर्यु: ब्राह्मणाच्छंसी, प्रस्तोता, मैत्रावरुण:, प्रतिप्रस्थाता, पोता, प्रतिहर्ता, अच्छावाक:, नेष्टा, अग्नीत् (आग्नीध्र:), सुब्रह्मण्य:, ग्रावस्तुत्, उन्नेता च ।[3] आ० क० चैते ब्राह्मणा ऋत्विज आर्षेया यून: स्थविरा अनूचाना ऊर्ध्ववाचो अङ्गहीनाश्च भवन्ति ।[4] उ० का० च यजमाना: चतुरो वा आद्यान्—होत्रध्वर्युब्रह्मोद्गातॄन् वृणीते ।[5] एते चत्वारो महर्त्विज उच्यन्ते । एभ्योऽतिरिक्ता द्वादश ऋत्विजो होत्राशंसिन: चमसाध्वर्यवो वोच्यते । यजमान: सोमप्रवाकाख्येन कर्मकारेण द्वारा तान् सर्वान् वृणीते । आपस्तम्बमते सप्तदशमृत्विजं सदस्यं कौषीतकिनस्सामामनन्ति । स च कर्मणामुपद्रष्टा भवति ।[6] ब्रह्मादीनां चतुर्णामितरे द्वादशर्त्विजोऽनुचरा अनुयायिनो वा भवन्ति । यथा, अध्वर्योरनुचरा:—प्रतिप्रस्थातृनेष्ट्रोन्नेतार:, ब्रह्मणोऽनुचरा:—ब्राह्मणाच्छंस्याग्नीध्रपोतार:, होतुरनुचरा:—मैत्रावरुणाच्छावाकग्रावस्तुत:, उद्गातुरनुचरा:—प्रस्तोतृप्रतिहर्तृ सुब्रह्मण्या: । उ० क० मन्त्रोच्चारणपूर्वकमृत्विग्वरणं भवति किन्तु कात्यायनेन स्वस्मिन् ग्रन्थे वरणमन्त्रा न संग्रहीता:, आपस्तम्बेनैव ते मन्त्रा:

---

1. का० श्रौ० (सप्तमेऽध्याये)
2. सूत्रकाराणां मते सोमपानविच्छेदी न सोमं पातुमर्हति—
   'यस्य वेदश्च वेदी च विच्छिद्यते त्रिपूरुषम् ।
   स वैदुर्ब्राह्मणो नाम न सोमं पातुमर्हति ।।'
3. का० श्रौ० (७।१।६), आ० श्रौ० (१०।१।१।६)
4. आ० श्रौ० (१०।१।१।१)
5. का० श्रौ० (७।१।७), आ० श्रौ० (१०।१।१।१२)
6. आ० श्रौ० (१०।१।१।१०-११)

स्वस्मिन् श्रौतसूत्र उदाहृताः।[1] वृतानामृत्विजां प्रत्येकं मधुपर्कोणार्हणं भवति।[2]

**देवयजने शालानिर्माणादि**—देवा इज्यन्तेऽस्मिन्निति 'देवयजनः' सकलप्रयोगाङ्गभूतो भूमिप्रदेशः। का० क० ऋत्विग्वरणानन्तरं सयजमाना ऋत्विजो देवयजनमागत्य शालादिनिर्माणार्थमध्यवसायं कुर्वन्ति।[3] आपस्तम्बेन तु विस्तरेण देवयजनयाजनमभिहितम्, तदनुसारेण यजमानो राजानमागत्य तं देवयजनं याचते—'देव वरुण! देवयजनं मे देहि।' यदि स राजा यजमानाय (ब्राह्मणाय वैश्याय वा) देवयजनं ददाति तर्हि ऋत्विजस्तस्मै राज्ञे आशीर्वदन्ति 'देवयजनवान् भूया' इति, यदि स राजा भूदानं न करोति तर्हि यजमानस्य ऋत्विजोऽस्मै शपन्ति 'मा न उपावधीर्यतस्त्वा ह्रास्यतीति'। तमेवं शप्त्वा ते ततोऽन्यं याचन्ते, अत्र कल्पे चाचार्यो विकल्पते, न देवयजनयाच्ञा, देवता एवोपष्ठिन्ते, ततो ते देवयजनमध्यवस्यन्ति।[4]

तत उ० क० यजमानादयः पुरस्ताद्दुन्नतं पश्चान्निनतं सर्वतः परिश्रुतं प्राचीनवंशं कुर्वन्ति। सा दीर्घचतुरश्रशाला चतुरश्रसु दिक्षु द्विहस्तद्वारद्वती भवति, सैव प्राग्वंशशालोच्यते। तत्रैवं प्रमाणो दीक्षितविमितो (मण्डपः) भवति—द्वादश षोडशो वा प्रक्रमा आयामः, अष्टौ प्रक्रमास्तिर्यग् देवयजनस्य पश्चिमे भागे। चतुरश्रो मण्डपो विमितमित्युच्यते, सैव प्राग्वंशः प्राचीनवंश, शाला वा उच्यते।[5] का० क० प्राग्वंशे 'समन्तात्कटादिना वृतं परिवृतमिति' इति द्वे परिवृते भवतः।[6] आ० क० प्राग्वंशे कोणेषु वातायनानि च भवन्ति।[7]

---

1. 'वरणमन्त्राः—'अग्निर्मे होताऽऽदित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताऽऽकाशो मे सदस्य आपो मे होत्राशंसिनो रश्मयो मे चमसाध्वर्यव इत्युपांशु देवतादेशनम्। असौ मानुष इत्युच्चैः (आ० श्रौ० १०।१।१।१४), यथा–'देवदत्तो मानुष' इत्युच्चैर्जपति यजमानः।
2. पारस्करगृह्यसूत्रे (१।३)
3. का० श्रौ० (७।१।१०)
4. आ० श्रौ० (१०।१।२।२३-२५)
5. का० श्रौ० (७।१।१९-२४), आ० श्रौ० (१०।२।५।१-१०)
6. का० श्रौ० (७।१।२५), आ० श्रौ० (१०।२।५।३)
7. का० श्रौ० (७।१।२६)

**दीक्षा (दीक्षणीयेष्टि:)**—का० क० पूर्वं दीक्षा उक्ता ततो वरणम्, आ० क० त्वस्य विपरीतक्रमोऽस्ति। का० क० शुक्लपक्षे दीक्षा भवति, तदनन्तरं सप्तमे पञ्चमे दिने वा सोमं सुन्वन्ति। आ० क० अमावस्यायां पौर्णमास्यां वा दीक्षा, पौर्णमायां यजनीये अहनि या सुत्या एतद्वा विपरीवर्णितं सर्वं च विकल्प्यन्ते।[1] उ० क० चत्वारो दीक्षापक्षा:—एका, तिस्र: द्वादश, अपरिमिता वा दीक्षा भवन्ति। का० क० अध्वर्युर्दीक्षासु यूपच्छेदने यूपाहुतिं प्राग्धुत्वा यूपान्ते वाग्निं मथित्वा होमं करोति।[2] आ० क० अध्वर्युर्दीक्षासु यूपं कारयति, अथवा क्रीते सोमे उपसत्सु वा यूपं कारयति। तथा हि शतपथे—'यूपं व्रक्ष्यन्वैष्णव्यर्चा जुहोतीति'[3] दीक्षास्वेव वा होमच्छेदने कार्यं।

कात्यायन: केशवपनात् वासस: परिधानाच्च प्राग्भोजनं विदधाति।[4] उ० क० यजमान इष्टभोजनमश्नाति।[5] आ० क० सो अन्नमश्नाति सर्पिमिश्रं दधिमधुसिद्धं वाश्नाति[6]। का० क० नापितो यजमानस्य केशान् वपति, आ० क० त्वध्वर्यु रिदं कर्म करोति। का० क० नापित: पूर्वं नखानि कृन्तति, तत: केशान् वपति, आ० क० स पूर्वं केशान् वपते ततो नखानि कृन्तति। का० क० यजमान उदकुम्भोदकेनैव स्नाति।[7] आ० क० यजमान: स्थावराप्सु शैवालवतीषु शङ्खिनीषु (ह्रदेषु), लोमशे तीर्थे (तृणमये तीर्थे) वा स्नाति, तेनाचार्येणात्र वाजसनेयकं मतमुदाहृतम्—'कुण्डे हिरण्यमवधाय तस्मिन् स्नातीति वाजसनेयकम्।'[8] इदं मतं कात्यायनश्रौतसूत्रे नोपलभ्यते। उ० क० यजमान: स्नानान्तरं अहतं क्षौमं वस्त्रं परिधत्ते। का० क० यजमानो

---

1. आ० श्रौ० (१०।१०।१५।३६-३८)
2. का० श्रौ० (७।१।३४)
3. श० ब्रा० (३।६।४।१)
4. का० श्रौ० (७।१।४-८), आ० श्रौ० (१०।२।५।७, तथा च १०।२।६।२४) तथा चाह आचार्य:—'पुरस्तात्केशवपनात् वाससो वा परिधानात् भोजनमेके समामनन्ति'(आ० श्रौ० १०।२।६।२७)
5. का० श्रौ० (७।४।४)
6. आ० श्रौ० (१०।२।६।२३)
7. का० श्रौ० (७।२।१५)
8. आ० श्रौ० (१०।२।५।१५-१६)

अनीविकमेव वासः परिधत्ते[1], आ० क० 'सोमस्य नीविरसि' इति नीविमपि परिवेष्टयति।[2] का० क० अत्र यजमानो मधुभोजनमश्नाति, अथवा यदस्य मनसः प्रियं तदश्नाति। कात्यायनस्त्वत्र अंसलं (मांसलं)–भोजनं विदधाति।[3] तत उ० क० प्रतिप्रस्थाता पत्नीं दीक्षयति।[4]

का० क० भोजनान्तरमध्वर्युर्यजमानं शालायां प्रवेशयति, तत्र तेनाग्नावैष्णव एकादशकपालः पुरोडाशः कर्त्तव्यः, आदित्यचरोर्वा निर्वपणं विहितम्, तत्तु प्राक्समिष्टयजुषः तद्वर्जनीयं वा भवति।[5] तत उ० क० यजमानो नवनीतेन स्वशरीरं अक्षयति दर्भपुञ्जीलाभ्यां—'महीनां पयोऽसीति' मन्त्रेण, ततो यजमानस्त्रैककुदेनाञ्जनेन सतूलया शरेषीकया सकृत्, द्विः, त्रिर्वा चक्षुषी चाङ्क्ते। त्रैककुदाञ्जनाभावे सौवीराञ्जनेनान्येन वा केनचित् सो अनक्ति।[6] तत उ० क० अध्वर्युरेकेन, त्रिभिः, सप्तभिर्वा कुशपवित्रैर्यजमानं पाययति' चित्पतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्रम्।[7] अत्र का० क० अध्वर्युर्यजमानम् 'आ देवास' (शु० य० ४।५) इति वाचयति[8], आ० क० 'मा सविता पुनातु' इत्यादिमन्त्रान् यजमानः स्वयं जपति।[9] ततः का० क० अत्र यजमानो मुष्टी कृत्वा वाचं यच्छति अङ्गुलीश्च संकोचयति।[10] आ० क० तु कृष्णाजिनदीक्षाया अनन्तरं यजमानो अङ्गुलीः संकोचयति, वाचं च यच्छति।[11]

---

1. का० श्रौ० (७।२।२०)
2. आ० श्रौ० (१०।२।६।२२)
3. 'धेन्वनडुहयोर्नाश्नीयात्', 'अंसलं भोजनं वा' (का० श्रौ० ७।२।२३,२५) तथा चाह याज्ञवल्क्यः शतपथे–'स्थूलं चेद्धेन्वनुडुहं भवति ततोऽहमश्नाम्येवेति' (३।१।२।२१)
4. का० श्रौ० (७।२।२१-२२), आ० श्रौ० (७।२।६।१०)
5. का० श्रौ० (७।२।२६-२९)
6. का० श्रौ० (७।२।३४), आ० श्रौ० (१०।२।७।३१-३४)
7. का० श्रौ० (७।३।१), आ० श्रौ० (१०।२।७।४०, परिशिष्टे मन्त्रा द्रष्टव्याः (शु० य० ४।४।७, तै० सं०)
8. का० श्रौ० (७।३।६)
9. आ० श्रौ० (१०।२।७।४२)
10. का० श्रौ० (७।३।७)
11. आ० श्रौ० (१०।३।११।४५)

का० क० अध्वर्युर्वाग्यतं यजमानं शालायां प्रवेशयति, प्रवेशितो यजमान आहवनीयगार्हपत्ययोरन्तरेण गत्वा स्वस्थाने उपविशति।[1] उ० क० च यदा पूतो यजमान उपविशति र्तीहं अध्वर्युरौद्ग्रभणानि च जुहोति, ततः पूर्णाहुतिर्होमः।[2]

**कृष्णाजिनदीक्षा** – तत उ० क० अध्वर्युर्यजमानं कृष्णाजिनेन दीक्षयति। अध्वर्युराह–वनीयाद्दक्षिणस्यां दिशि अदूरे द्वे प्राग्ग्रीवे छिद्रेषु स्यूते द्वे सम्बद्धे कृष्णाजिने स्तृणाति, यद्येकं कृष्णाजिनं स्यात्तदा अस्य पश्चात् पादो द्विगुणो भवेत् (तत्प्रतिषीव्य द्विगुणं कुर्यात्) ततो यजमानः संकुचितजानुः कृष्णाजिनयोरुपविश्य 'ऋक्सामयोश्शिल्पे स्थः' इति तयोः शुक्लकृष्णसन्धिमालभते।[3] ततो यजमानो वेण्याकारां त्रिगुणां शतमुञ्जमिश्रां मेखलां बध्नाति, नीविं च कुरुते, उष्णीषेण शिर आच्छादयति, कण्डूयनार्थं कृष्णविषाणां त्रिवलिं पञ्चवलिं वा वस्त्रे बध्नाति, अध्वर्युस्तं मुखसंमितमौदुम्बरं दण्डं च प्रयच्छति।[4] का० क० प्रतिप्रस्थाता तूष्णीं यजमानेन सह पत्न्या मेखलाबन्धादिं कर्म करोति, अथवा तां योक्त्रेण दीक्षयति, तस्याः शिरसि त्रिर्वेष्टितं जालं धारयति, आपस्तम्बानुसारेण वाजसनेयके मते पत्न्याः शिरसि जीवोर्णानां कुम्बकुरीराख्यं कृष्णजालमध्वर्युः क्षिपति।[5] दीक्षान्ते अध्वर्युर्वैश्यराज्यन्ययोरपि 'ब्राह्मण' इत्यावेदयति।[6] कात्यायनस्तु दीक्षाविषये एतावन्तमुक्तवान्, किन्त्वापस्तम्बस्त्वत्र विस्तरेण कृष्णाजिनदीक्षाविधिं विदधाति। सोऽत्र अग्निवायुचन्द्रप्रजापतिप्रभृतिनामुल्लेखपूर्वकं बहुभिर्मन्त्रैर्दीक्षाविधिं विस्तारयति, (यथा—अग्निर्दीक्षितः पृथिवी दीक्षा सा या दीक्षा दीक्षयतु तया दीक्षया दीक्षे' इत्यादि)। अत्रैव तेन मुष्टिकरणं वाग्यमनं, अङ्गुलिसंकोचनञ्च विहितानि।[7]

---

1. का० श्रौ० (७।३।११-१२)
2. का० श्रौ० (७।३।१६-१९), आ० श्रौ (१०।३।८।५-६)
3. का० श्रौ० (७।३।२१-२४), आ० श्रौ० (१०।३।८।१२-१६)
4. का० श्रौ० (७।३।२६-३२,४।१), आ० श्रौ० (१०।३।९।२०-३५,१०।३९)
5. आ० श्रौ० (१०।३।९।२१-२३), का० श्रौ० (७।४।५-७)
6. 'ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः' (का० श्रौ० ७।४।१२), 'ब्राह्मणो वा एष जायते यो दीक्षते तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्यावेदयति' (आ० श्रौ० १०।३।११।४८)
7. आ० श्रौ० (१०।३।१०,११ कण्डिके द्रष्टव्ये)।

**यजमानव्रतानि**–उ० क० यजमान आनक्षत्रोदयात् वाग्यतस्तपस्तप्यमान आस्ते, वाचं च यच्छति, अस्तमिते सूर्ये दीक्षितो वाचं विसृजति। तावुभौ पत्नीयजमानो क्षीरव्रतौ भवतः, यजमानो मृन्मये, पत्नी च ताम्रमये पात्रे पयो भक्षयतः। अत्र एके शाखिनः सर्वौषधं सर्वसुरभिमयं भोजनादिकं समामनन्ति, गार्हपत्ये दीक्षितस्य भोजनं पच्यते। यवागू राजन्यस्य आमीक्षा वैश्यस्य च भोजनं भवति। यत्र यजमानो मूत्रपुरीषादिकं करोति तत्र लोष्टं निदधाति, स च निम्नभूमौ प्राक्शिराः, उदङ्मुखो दक्षिणदिशि शेते, विकल्पे रात्रौ जागर्ति वा, विचक्षणवतीं चनसितवतीं वाचं वदति, न शूद्रेण न च स्त्रिया सह सम्भाषते। आपस्तम्बेनात्र (आ० श्रौ० सू० १०।४।१२–१४) वाजसनेयशाट्यायनके मते चोदाहृते, तदनुसारेण 'इत्थं ब्रूहीत्युक्त्वा शूद्रेण सम्भाषेत निष्पापेन शूद्रेण सह वा सम्भाषणे अदोष' इत्युक्तः सर्वत्र परिणयवतीं च वाचं वदेत्।[1] आ० क० यजमानो मधुमांसं स्त्रियमनृतमुपरिशयनं ष्ठीवनं विकाले निष्क्रमणं प्रवासं च वर्जयेत्। स सूर्यप्रकाशे मूत्रपुरीषे न कुर्यात्, छायायामेव तत्कुर्यात्, अज्ञानाद्रेतस्कन्दने जपति—'यन्मेऽत्र पयसः परीतोषात्तदर्पिथ। अग्निहोत्रमिह सोमेन तदहं पुनराददे' इति, 'एवं च स्वप्ने, अन्नं भुक्त्वा, छर्दित्वा, ष्ठुत्वा, रुधिरं दृष्ट्वा च मन्त्रं जपति। तस्य होमदानयाचनादयोऽपि निषिद्धा आचार्येणापस्तम्बेन।[2] एवामादीनि बहूनि विधानानि विदधाति सः, तदलं बहुविस्तरेण।

**आपस्तम्बकल्पे सनीहारादि**—आचार्यमते दीक्षितो द्वादशाहं यज्ञसम्भरणार्थं भृतिं याचेत्, इयमेव भृतिर्याच्ञा वा सनीहारपदेन[3] उच्यते। पुराकाले सर्वे ब्राह्मणादयः सोमक्रतुकरणे समर्था नासन्, ते यियक्षवः सन्तः समर्थपुरुषेभ्यो द्रव्याणि याचन्ति स्म, तस्मादेतद् विधानमापस्तम्बश्रौतसूत्र उपलभ्यते, कात्यायनेन तु नैतद् विहितम्। तत्र दीक्षितो भिक्षया गोहिरण्यवस्त्रादीनि मन्त्रोच्चारणपूर्वकं गृह्णाति स्म।

1. का० श्रौ० (७।४।२०-४०, ५।१-७), आ० श्रौ० (१०।४।१२,१३, १६, कण्डिका द्रष्टव्याः)
2. आ० श्रौ० (१०।४।१३, १४ कण्डिके)
3. 'सनीन् हरतीति सनिहारा इति व्युत्पत्तिः, हरणं चात्रानयनमेव न तु चौर्यतः अपहरणमिति।

इतोऽग्रे आपस्तम्बेन सनिलब्धानां द्रव्याणां नष्टानामनुदेश: कृत:। अत्रैवाचार्येण देवयजनदीक्षायामपि तत्र योगक्षेमक्लृप्तौ आपन्निवारणार्थं देवयजनान्तराध्यवसायार्थं च प्रयाणमनुमतम्। तत्र दीक्षितो रथे, नावि, रथाङ्गे वा पृथगरणीष्वग्नीन् समारोप्य प्रयाति।[1] एतद्विधानमपि कात्यायनकल्पे नास्ति। तत आपस्तम्बो नित्यानि काम्यानि च देवयजनानि आह, ततोऽग्रे स सोमविक्रयस्यापि किञ्चिद् विधानं विदधाति।[2]

**प्रायणीयेष्टि:**[3]—तत उ० क० दीक्षान्ते प्रायणीयाख्यं कर्म प्रारभ्यते, यजमानो अदित्यै चरुं निर्वपति, तत: स आज्यभागाच्चतस्रो देवता यजति—पथ्यास्वस्तिम् अग्निं सोमं सवितारञ्च। अत्र पथ्यास्वस्ति: इति द्वे पृथक् पृथक् देवते न स्त:।[4] आ० क० अध्वर्यु: अदितिमिष्ट्वा मारुतीमृचमनूच्याज्येन चरुं पूरयित्वा सर्वा देवता ध्रौवादाज्यात् यजति।[5]

**सोमक्रयण्यभिमन्त्रणम्**—उ० क० अध्वर्यु: वेद्यां तृणं निधाय हिरण्यं सूत्रेण बद्ध्वा चतुर्गृहीतेनाज्येनान्वारभते, उद्घाटितद्वारे विमिते अध्वर्युयजमानौ निष्क्रामत:, तत्र शालाया: पूर्वद्वारे सोमक्रयणी गौरवस्थिता भवति। का० क० तस्या विशेषणानि सन्ति—अलक्षिता (चिह्नादिहीना), अव्यङ्गा, अप्रजाता, अरज्जुबद्धा, बभ्रु: (कपिला), पिङ्गला, पिङ्गलाभावे अरुणा, अरुणाभावे रोहिणी (रक्तभासुरा), अश्वेताक्षी (अरक्ताक्षी) च।[6] आ० क० चैतानि विशेषणानि विद्यन्ते (सा एकहायनी, द्विहायनी, बर्षीयसी[7], वा भवेत्)—रोहिणी बभ्रुलोम्नी पृश्निवाला, पृश्निशफा[8], शुच्यक्षी, श्वित्र्योपकाशा[9], शुष्ठी[10],

1. आ० श्रौ० (१०।६।१८,१९ कण्डिके)
2. आ० श्रौ० (१०।७.२० कण्डिका)
3. 'प्रयन्ति अनया यज्ञमिति प्रायणीया' सा न सोमक्रयाङ्गं न प्रयाणाङ्गमिति मन्तव्यम्।
4. का० श्रौ० (७।५।१५), आ० श्रौ० (१०।७।२१।२४)
5. आ० श्रौ० (१०।७।२१।२५)
6. का० श्रौ० (७।६।१७)
7. एकहायनी—एकवर्षा, द्विहायनी—द्विवर्षा, बर्षीयसी—बहुवर्षा।
8. पृश्नि:—श्वेता
9. श्वित्रसमानवर्णा
10. अल्पकाया,

अधिलोधकर्णी च ।[1] अनया एवंविधया गवा यजमानः सोमं क्रीणाति। पूर्वगृहीतेनाज्येनाध्वर्युः शालाद्वारे सोमक्रयणीमीक्षमाणो जुहोति। 'चिदसीत्यादिभिः' मन्त्रैस्तामभिमन्यते। उ० क० नीयमानां सोमक्रयणीमध्वर्युयजमानावनुगच्छतः, सोमक्रयण्याः षट्पदानि अतिक्रम्य सर्वे ऋत्विग्यजमानाः तस्याः सप्तमं पदं[2] परितः पर्युपविशन्ति, अध्वर्युः सप्तमपदपांसूनञ्जलिनाभिगृह्य पदस्थाने हिरण्यं निधाय तत्र हुत्वा, पदपांसून् यजमानाय प्रयच्छति। स यजमानः स्फ्येन पदं त्रिः परिलिख्य, पांसून् समुद्धृत्य तान् स्थाल्यामावपति, उद्धृतस्य पदस्य स्थाने भूमौ उदकं निषिच्य पदपांसून् यजमानाय प्रयच्छति।[3] आ० क० यजमानः स्फ्यस्थाने कृष्णविषाणं प्रयुनक्ति, पदस्य स्थाने सहिरण्यौ पाणी प्रक्षालयति। पदपांसून् त्रेधा विभज्य एकांशं गार्हपत्यस्य भस्मनि, द्वितीयांशमाहवनीयस्य भस्मनि चोपवपति, तृतीयाशं च पत्न्यै प्रयच्छति। तत्सा गृहेषु निदधाति।[4] का० क० तु अध्वर्युः प्रक्षाल्य हस्तौ अनामिकायां हिरण्यं बध्नाति। तन्मते सोमाप्यायनाभिषवांश्वदाम्येषु चाध्वर्युरेवं हिरण्यं बध्नाति।[5]

**सोमनिवपनादि**—का० क० यजमानस्य कश्चित् कर्मकारः सोमोपहननं (आच्छादनं) सोमपर्यायिणं सोमोष्णीषं चानयति, एषां त्रयाणां वाससां मध्ये सोमोपहननं वस्त्रं शोभनं भवति।[6] तत उ० क० सोमपानार्थं सर्वे वासांस्यादाय सोमं प्रति गच्छति। उ० क० ते उद्धृतफलकेनानसा परिश्रितेन हविष्मता च सोमानयनार्थं गच्छन्ति, आ० कल्पात् ज्ञायते यत्ते सर्वे सोममानेतुं पर्वतं प्रति गच्छन्ति स्म।[7] अस्माभिः सोमोद्भवानि स्थानानि (पर्वतादयः) पूर्वमभिहितानि।

---

1. आ० श्रौ० (१०।८।२२।२-५)
2. प्रतीयते साप्तपदी सख्यमनेन विधानेन प्रसिद्धिमगमत् तथा च आ० श्रौ० मन्त्रजपः—'सखायस्सप्तपदा अभूम सख्यं ते गमेयं सख्यात्ते मायोषं सख्यान्मे मा योष्ठाः' (१०।८।२३।१२)
3. का० श्रौ० (७।६।१६-२१)
4. आ० श्रौ० (१०।८।२२,२३ कण्डिके)
5. का० श्रौ० (७।६।२७,२८)
6. का० श्रौ० (७।७।१,३)
7. 'शीर्ष्णा गिरौ क्रीतं हरन्ति' (आ० श्रौ० १०।८।२४।२३)

तत्र गत्वा ऋत्विग्यजमानादयः सोमोपहननं परिस्तीर्य अङ्गुल्यङ्गुष्ठादिभिः सोमं पिबते स्म। अत्रोभयोः कल्पयोरध्वर्युणा सह सोमविक्रयिणः संवादो भृशं रोचको वर्तते, तत्तुलनात्मकदृष्ट्याऽत्र यथावत् समुद्धृयते—

**का० श्रौ०**

(अध्वर्युः) आह–सोमविक्रयिन् क्रय्यस्ते सोमो राजा इति।'

'क्रय्य' इत्याह सोमविक्रयी

'तं वै क्रीणानि इत्याह (अध्वर्युः)

'क्रीणीहि' इत्याह सोमविक्रयी

'कलया ते क्रीणानि' (अध्वर्युराह)

'भूयो वातः सोमो राजार्हतीति सोमविक्रयी

भूयो स्वातः सोमो राजार्हति,

मांस्त्वेन

गोर्महिमेत्यध्वर्युः ···।

(इममध्वर्युश्चतुर्वारं पठति), यथा–

शफेन ते क्रीणानि, पदा ते क्रीणानि,

अर्धेन ते क्रीणानि, गवा ते क्रीणामि।

(अध्वर्युः)—'क्रीतः सोमो राजा'

(सोमविक्रयी)—'वपांसि (छागादीन्) प्रब्रूहि'

(अध्वर्युः)–चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ ते, तिस्रस्ते अन्याः'

(अध्वर्युर्यजमानं वाचयति)–'शुक्रं ते' (इति हिरण्यमालभ्य)।[2]

**आ० श्रौ०**

(अध्वर्युः) सोमविक्रयिन् क्रय्यस्ते सोमा ३ इति, (सोमविक्रयी)—'क्रय्यः'

(अध्वर्युः) कलया क्रीणानि'

(सोमविक्रमी)—'भूयो वा अतस्सोमो राजार्हति'

(अध्वर्युः)—कलया क्रीणानि', शफेन ते क्रीणानि', 'पदा ते क्रीणानि' (चतुर्थवारम्)

अन्ततः—'गवा ते क्रीणानि', शुक्रं ते शुक्रेण क्रीणामि' (इति)–(हिरण्येन क्रीणाति)[1]

1. आ० श्रौ० (१०।६।२५।२-६)
2. का० श्रौ० (७।८।२-१५)

का० क० अयं संवादो विस्तृततरो विद्यते। तथा आपस्तम्बो विकल्पेन गोस्थाने अजवृषभादीन् चाह, यैर्यजमानः सोमं क्रेतुमर्हति, अतो भूयांसो विदधाति, यथा द्वादशशतदक्षिणस्य सोमक्रतोः सोमो दशभिर्गोभिः क्रेतव्यः, एवं सहस्रदक्षिणस्य चतुर्विंशत्या गोभिः, शतेन गोभिः वाजपेयस्य, द्वाभ्यां शताभ्यां राजसूयस्य, सहस्रेण गोभिरश्वमेधस्य च सोमः क्रेतव्यः।[1]

आ० क० सोमक्रयणानन्तरमध्वर्युः शुक्लामूर्णास्तुकां (अविलोमपुञ्जीलम्) यजमानाय प्रयच्छति, स तया दशापवित्रस्य नाभिं करोति, ततो यजमानः कृष्णामूर्णास्तुकामद्भिः क्लेदयित्वा 'इदमहं सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामि' इति उपग्रथ्य तथा सोमविक्रयिणं विध्यति, ततो बलात् तस्मात् सोमं गृह्णाति, यदि सोमाविक्रयी प्रतिविवदेत तदा तं यजमानादयः पृषता वरत्राकाण्डेन मारयन्तो अदर्शनं नयेयुः। एकेषां मते तं दण्डैर्घातयन्ति, अन्ये तस्य वधमिच्छन्ति।[2] का० क० सोमविक्रयिणमकारणं हन्ति, आ० क० तु विवादे हि हन्ति।[3] सोमविक्रयिणो हननप्रथा कथं प्रचलिता अभवत्, इति ज्ञातुं न शक्यते। तदानीं सोमस्य विक्रय उपपातकोऽभवत्, तं लुब्ध एव करोति स्म। तं सोमं कुत्सगोत्रीयो ब्राह्मणः शूद्रो वा विक्रीणाति स्म।[4] प्रतीयते, अतिपुराकाले यदा श्येनाः (पक्षिणः) सोममानयन्ति स्म, तदेयं हननप्रथा नासीत्।

**सोमानयनम्**—उ० क० यजमानः शीर्ष्णि सोमं धृत्वा शकटं प्रत्यागच्छति, तर्हि अध्वर्युः शकटनीडे कृष्णाजिनमास्तीर्य तस्मिन् सोमं राजानमासाद्य, वाससा तं पर्यानह्य, अनड्वाहौ युक्त्वा प्रत्यागन्तुमारभते, सुब्रह्मण्यः (ऋत्विक्) पलाशशाखया शमीशाखया वा अनड्वाहौ प्रेरयति, अध्वनि चाध्वर्युरेव सुब्रह्मण्यामाह्वयति। 'इन्दो गच्छ' इत्यादि। उ० क० प्रतिप्रस्थाता अग्नीषोमीयं पशुमादाय यजमानं प्रतीक्षते, शालाद्वारे तिष्ठन्, ततः सर्वे शालां प्रत्यागच्छन्ति।[5]

1. आ० श्रौ० (१०।६।२६ कण्डिका द्रष्टव्या)
2. आ० श्रौ० (१०।६।२६।१६-१६, २७।२७-२८), 'सोमक्रयणीमन्यया गवा निष्क्रीय तां गोष्ठे सृजति।'
3. का० श्रौ० (७।८।२७), आ० श्रौ० (१०।७।२१।१२)
4. आ० श्रौ० (१०।२०।१२)
5. का० श्रौ० (७।६।४-३१), आ० श्रौ० (१०।६।२७,२८ कण्डिका)

**आतिथ्येष्टिः**—उ० क० विकल्पेन शकटे युक्तयोरेकस्मिननडुहि विमुक्ते यजमानो वैष्णवं नवकपालं पुरोडाशं निर्वपति, अत्र सोमो अथितिवत् पूज्यते, तथापि पुरोडाशनिपर्वणं तु अग्न्यादिभ्यो देवेभ्यो भवति।[1] का० क० अत्रेष्टौ सावित्रमन्त्रस्य निवृत्तिर्भवति।[2] आ० क० पञ्चसु देवतासु यजमानः सावित्रमपि हविर्निर्वपति।[3] अत्र कल्पे निर्वापस्तु पत्न्या हस्तेन भवति।[4] उ० क० आतिथ्येष्टौ काष्मर्यमया परिधयः (आ० क० द्वाविंशतिपरिधयः), आश्ववालप्रस्तरः ऐक्षव्यौ विधृती, बर्हिश्च भवन्ति, वेदं कृत्वा परिस्तरणादिकं कर्म च भवति। का० क० तु सोमासदनादि, आतिथ्येष्टेः प्राग्वर्णितं किन्त्वापस्तम्बेन पुरोडाशनिर्वापानन्तरं सोमासदनादि कथितम्। का० क० चत्वार ऋत्विजो नाभिदघ्नीमौदुम्बरीमासन्दीमरत्निमात्रीमाहरन्ति।[5] आ० क० तु प्रतिप्रस्थाता पूर्वमासन्दीमादाय प्राग्वंशमभिप्रव्रजति, तत्राध्वर्यू राजानमामन्त्र्य, तं वाससा पर्यानह्य, आसद्यां कृष्णाजिनमास्तीर्य तस्मिन् सोममासादयति।[6] तत इडान्ता इष्टिर्भवति।

**तानूनप्त्रम्**—एददाज्यं तानूनप्त्रसंज्ञकायै देवतायै (अग्नये) निरुप्यते, तेनास्य एषा संज्ञा भवति। आज्यमिदमध्वर्यु ध्रौवादाज्यात् शुचिचमसे वा चतुरवत्तं पञ्चावत्तं प्रतिगृह्य अपराह्णे व्रतदुग्धं मिश्रयित्वा दीक्षिताय प्रयच्छति। का० क० प्रतिपुरुषं सर्वैर्ब्रह्मादिभिस्तानूनप्त्रं कांस्ये चमसे ग्रहणीयं भवति। शतपथे (३।४।२।६) चैवं श्रूयते। उ० क० यजमानसप्तदशा ऋत्विजस्तानूनप्त्रं मन्त्रपूर्वकं दक्षिणस्यां वेदिश्रोणौ निधाय समवमृशन्ति, ततो अपराह्णे दीक्षितसहिता व्रतकाले गृह्णन्ति।[7]

---

1. का० श्रौ० (८।१।१-४), आ० श्रौ० (१०।३०।३०।२६)
2. का० श्रौ० (८।१।५)
3. आ० श्रौ० (१०।१।३०।२७)—तथा च 'निर्वपेदग्नेस्तनूरिति (शु० य० ५।१) पञ्चकृत्वः प्रतिमन्त्रम्' (का० श्रौ० ८।१।४) आव्यः, 'अग्नेरातिथ्यमसि इत्येतैः प्रतिमन्त्रम्' (१०।१०।३०)
4. आ० श्रौ० (१०।१०।३०।२२)
5. का० श्रौ० (७।६।२७)
6. आ० श्रौ० (१०।१०।३१।३३-३८)
7. का० श्रौ० (८।१।२३-२५, २।१-३), आ० श्रौ० (११।१।१।३)

**अवान्तरदीक्षा**—उ० क० यजमानो अवान्तरदीक्षामुपैति 'अग्नये व्रतपतये' इत्यादिभिर्मन्त्रैराहवनीये समिधमाधाय मदन्तीरुपस्पृश्य गाढ़तरं मुष्टिमेखलं कुरुते, पत्नी च तूष्णीं गार्हपत्ये मुष्टिमेखलं गाढ़तरं करोति ।[1] आ० क० अत्र वाजसनेयकं मतमुपस्थापितम् ।[2] इदं मतं कात्यायनमतेनानुवदति ।

**सोमाप्यायनम्**—का० क० यजमानषष्ठा सर्वे ऋत्विजो मदन्तीभिरद्भिर्हस्तान् प्रक्षाल्य सोममाप्यायन्ति 'अंशुरंशुरिति'[3] (शु० य० ५।७), आ० क० चैवं ते मदन्तीरुपस्पृश्य विस्रंस्य हिरण्यं राजानं सहिरण्यैः पाणिभिराप्यायन्ति—'अंशुरंशुरिति' पूर्ववत् ।[4]

**निह्नवः**—सोमाप्यायनानन्तरं सर्वे ऋत्विज उत्तानहस्ताः प्रस्तरस्योपरि पाणी कुर्वते, एतदेव कर्म 'निह्नव' इत्युच्यते ।[5]

**सुब्रह्मण्याह्वानम्**—तदनन्तरमुभयोः कल्पयोः सुब्रह्मण्याह्वानं विहितम् ।[6] लाट्यायनश्रौतसूत्रे (१।३।१), भारद्वाजश्रौतसूत्रे[7] चाध्वर्युरेवं सर्वासु सुब्रह्मण्यासु यजमानं वाचयति ।

**उपसदिष्टिः**—यज्ञभूमौ वृत्ताकारा दुर्गवत् परिधयो निर्मीयन्ते ता उपसद उच्यन्ते । उपसदिष्टौ द्वन्द्वपात्राणि, दशेध्मदारु, स्तम्बयजुर्हरणादिकं च सर्वं कर्म भवति । प्रधानयागार्थं ध्रौवादाज्यादष्टौ जुह्वां चतुरुपभृति चाध्वर्युर्गृह्णाति, अत्र सोऽर्धेन हविषा अग्निमर्धेन सोममिष्ट्वा जुह्वां च विष्णुं यजति, तत उपसत्संज्ञकं होमं करोति । श्रुतिषु तिस्र उपसदः प्रसिद्धाः—अयःशया, रजःशया, हराशया च । अध्वर्युस्तत्र सुपूर्वाह्णे अयःशयाम्, अपराह्णे च तामेव जुहोति, अतः परं द्वितीयदिने रजःशयां, तृतीयदिने हराशयां चेति । का० क० प्रथमायामुपसदि एकाया गोस्त्रिस्तनं दुग्धं व्रतार्थं दुह्यते, उत्तरयोरु-

---

1. का० श्रौ० (८।२।४-५), आ० श्रौ० (११।१।१४-१५) –'एतेनैवास्मिन् समिधमादधातीति वाजसनेयकमिति ।'
2. का० श्रौ० (८।२।६)
3. आ० श्रौ० (११।११।११)
4. आ० श्रौ० (११।११।११)
5. का० श्रौ० (८।२।६), आ० श्रौ० (११।३।१३)
6. का० श्रौ० (८।२।१४), आ० श्रौ० (११।३।१४)
7. भा० श्रौ० (११।१।१४)

पसदो: एकापचयेन दुह्यते।[1] आ० क० यस्मिन्नहनि सोमं क्रीणन्ति तस्मिन्नेव दिने चतुर: स्तनान्, प्रातस्त्रीन् सायं द्वौ, द्वितीयदिने एकं स्तनं सायं च सर्वान् स्तनान् दुह्यात्।[2]

**महावेदिनिर्माणम्**—तत उ० क० समाप्तायामुपसदिष्टौ महावेदिनिर्माणस्य कर्म प्रारभ्यते। उभयोर्मते शालाया: पूर्वार्धात् स्तम्भात् पुरस्तात् पूर्वस्यां दिशि त्रिषु प्रक्रमेषु शङ्कुर्निहन्तव्य: तत्स्थानमन्त:-पात्यश्चोच्यते, अन्त:पात्यात् प्राच्यां षट्त्रिंशत्प्रक्रमेषु पुन: शङ्कुर्निहन्तव्य:। ततो दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु प्रक्रमेषु उत्तरदक्षिणश्रोणिप्रख्यापनार्थं शङ्कुं निखनति। एवं सति त्रयस्त्रिंशत्प्रक्रमा: पश्चाद्वेदि: स्यात्, ततो द्वादशसु द्वादशसु प्रक्रमेषु पूर्वार्धाच्च वेद्यंससंनिष्पत्त्यर्थं शङ्कुं निहन्ति, ततो अन्त:पात्यादारभ्य यूपावटपर्यन्तं पृष्ठ्यासंज्ञकं वरण्डकं भवति। वेदेयं उत्तरोंऽस: तत: पश्चात् प्रक्रमत्रयपरिमिते स्थाने चात्वालं भवति, चात्वालाद्द्वादशसु प्रक्रमेषु पश्चिमायां दिशि उत्करो भवति। आ० क० अध्वर्युर्वेदिं स्पन्दीसंज्ञया रज्ज्वा परिमिमीते।[3]

**हविर्धानस्थापनम्**—उ० क० प्राग्वंशशालामभितो वेदिमध्ये अरत्निद्वयान्तराले द्वे हविर्धाने (शकटे) स्थाप्येते। अनयोर्दक्षिणहविर्धानं किञ्चिद् दीर्घतरमुत्तरहविर्धानं कनीयश्च भवति, तयोरुपरि छदींषि भित्तयो वा क्षिप्यन्ते, पुरस्ताद्भागे चैषीकीं रराट्यामासजति। उ० क० अत्र शालाद्वारहोमाक्षधुराञ्जनाभिमन्त्रणमेथीनिहननहविर्धानस्तम्भनानि च भवन्ति, तदनन्तरं होत्रा त्रिरुक्तायां प्रथमायामृचि हविर्धानप्रवर्तनं भवति।[4]

**उपखाः**—उ० क० अध्वर्युर्दक्षिणस्य हविर्धानशकटस्य प्रउगस्य अधस्तात् प्रादेशमात्रान् अरत्निमात्रान्तरालान् चतुर उपखान् अभ्र्या (खनित्रेण वा) खनति। ततोऽध्वर्युरुपखान् प्रोक्ष्य तेषामुपरि कुशान् कृत्वा तेषु अरत्निमात्रे अधिषवणफलके च निदधाति। आ० क० चैते

1. का० श्रौ० (८।३।१-४)
2. आ० श्रौ० (१२।४।१०)
3. का० श्रौ० (८।३।६-१४), आ० श्रौ० (१२।४,५ कण्डिके)
4. का० श्रौ० (८।३।२१-३६, ८।४।१-२४), आ० श्रौ० (११।६)

अधिषवणफलके औदुम्बरे, काष्मर्यमये पालाशे वा शुल्के तष्टे (समीकृते) च भवतः। तयोरुपरि चाधिषवणचर्म निधाय पञ्च ग्रावाणः (पाषाणान्) चाध्वर्युरेव निदधाति।[1]

**खरः**—तदनन्तरमुभयोः कल्पयोरुपरवाणां पुरस्तात् सिकतोपकीर्णं चतुरश्रं खरं विधीयते।[2]

**औदुम्बरी**—तत उ० क० अन्तःपात्यात् सप्तमे पदे दक्षिणस्यां दिशि यजमानप्रमाणामौदुम्बरीं स्थूणां मध्ये सदसो प्रक्षिपति, का० क० तस्या यूपवत् पर्यूहणपरिदृहणपरिवेषेचनानि भवन्ति। तत्र हिरण्यहोमश्च विधीयते।[3]

**सदोनिर्माणम्**-का० क० अष्टादशारत्निः, एकविंशतिश्चतुर्विंशतिर्वा दैर्घ्यप्रमाणं सदसो भवति, तन्नाभिदघ्नमुच्चम्, नवारत्निर्तिर्यक्प्रमाणं भवति।[4] आ० क० नवारत्निविस्तारं सप्तविंशतिरुदगायतमपरिमितं वा भवति।[5] ततो नवच्छदींषि क्रियन्ते।[6]

**धिष्ण्यानिवपनम्**—उ० क० पृथक् पृथग् ऋत्विजां शरणानि भवन्ति—आग्नीध्रमैत्रावरुणहोतृब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकानाम्, आग्नीध्राद्दक्षिणं वेद्यन्ते मार्जालीयधिष्ण्यो भवति, एतानि शरणानि तुल्यान्तराणि धिष्ण्यवन्ति च भवति। धिष्ण्यस्य प्रमाणम् अष्टादशाङ्गुलान्येव, सर्वेषु पुरीषं सिकताश्चोपरि निवपति। निपवनान्तरम् उ० क० बर्हिषि परिस्तीर्याध्वर्युः व्रतभोजनं यजमानाय प्रयच्छति, सोऽर्धव्रते प्रत्ते शालां प्रविश्य प्रणयनीयाधानं करोति।[7]

---

1. का० श्रौ० (८।४।२८, ८।५।१-२८), आ० श्रौ० ११।११-१३ कण्डिका)
2. का० श्रौ० (८।५।२९), आ० श्रौ० (११।१३।८)
3. का० श्रौ० (८।५।३१ ३६), आ० श्रौ० (११।९।९), (१०।२)
4. का० श्रौ० (८।६।४-६)
5. आ० श्रौ० (११।९।७)
6. का० श्रौ० (८।६।८), आ० श्रौ० (११।१०।९-१५)
7. 'अर्धव्रतं च वाजसनेयिनः समामनन्ति' (आ० श्रौ० ११।१५।६-७)
   तुलनीयं—'अर्धव्रते प्रत्ते प्रविश्य प्रणयनीयाधानम्।'
   (का० श्रौ० ८।६।३०)

**अग्नीषोमीयपशुः**—का० क० ततोऽध्वर्युः चाधिश्रयणादिकं कृत्वा यजमानस्योत्सङ्गे सोमं धृत्वा सोमक्रयणीपदं परिकिरति, तस्याः पदपांसून् चतुर्धा कृत्वा त्रीन् भागान् आहवनीयोपयमन्याग्नीध्रेषु प्रक्षिप्य चतुर्थेन भागेनाक्षधुरावनक्ति। अत्राध्वर्यु राज्यमुत्पूय पशुसम्बन्ध्याज्यं गृह्णाति, सः सयजमानान् वाससा छादयति च।[1]

आ० क० तु ब्रह्मा स्वोत्सङ्गे सोमं धारयति, अत्रापि सोऽध्वर्युः बन्धुवर्गसहितं यजमानं वाससा आच्छादयति, अत्र कल्पे सर्वं प्रोक्षणादि निरूढपशुबन्धवत् कर्म भवति। ततोऽध्वर्युः प्रचरण्या स्रुचा आग्नीध्रीयेऽग्नौ जुहोति। ततः पत्नीयजमानौ अग्नी उपस्थाय, मदन्तीरुपस्पृश्य मुष्टी विस्रस्य हविःशेषं भक्षयतः।[2] का० क० त्वत्र यूपैकादशिनी विहिता विकल्पेन, तत्र यूपैकादशिन्यां स्तोमायनसंज्ञका एकादश पशवो भवन्ति—आग्नेयप्रभृतिसारस्वतवारुणपर्यन्ताः। एकादशयूपेषु रथमात्रमन्तरालं भवति, ततो यूपाहुतिमारभ्य अग्नीषोमीयस्य वपामार्जनान्तं कर्म भवति।[3]

**वसतीवरीग्रहणम्**—का० क० सूर्यास्ते वसतीवरीरपो गृह्णात्यध्वर्युः।[4] आ० क० सूर्यप्रकाश एवापराह्णे अध्वर्युर्वसतीवरीरपो गृह्णाति, तत्र कल्पे अध्वर्युः कुम्भेन गिरिनदीनां वहन्तीनां वान्यासामपां प्रतीपं तिष्ठन् गृह्णाति, सूर्यो निम्रोचेत्तदा स सुवर्णमवध्राय पञ्चाहुतीर्जुहोति।[5] उ० क० अध्वर्युर्दक्षिणस्यामुत्तरवेदिश्रोण्यां ता अपो निदधाति।[6] उ० क० च वसतीवरीणामासादनान्तरं सुब्रह्मण्याह्वानं भवति। ततो जागरणादिकर्म विहितम्।

## प्रातःसवनम्

**सुत्योपक्रमः**—यस्या क्रियायां सोमोऽभिषूयते सा सुत्या। उ० क० ज्योतिष्टोमस्य पञ्चमे दिवसे सोमो निष्पाद्यते, अयमेव 'सुत्यादिवस' इत्युच्यते। अस्मिन् दिवसे प्रातः सोमो अभिषूयते तदेव प्रातःसवनम्।

1. का० श्रौ० (८।६।३१-२७), आ० श्रौ० (११।१६।१-१४)
2. आ० श्रौ० (११।१७।१८ कण्डिके), का० श्रौ० (८।७)
3. का० श्रौ० (८।८।४१)
4. का० श्रौ० (८।९।७)
5. आ० श्रौ० (११।१९-२० कण्डिके)
6. का० श्रौ० (८।९।११)

इदमेव प्रधानं दिनं ज्योतिष्टोमस्य । उ० क० यजमानपुरुषाश्चतुर्थ-दिनस्यापरराात्र एव सौत्यकर्म करणार्थं ऋत्विजः प्रबोधयन्ति । आप-स्तम्बेनात्र 'महारात्रिसंज्ञा' प्रयुक्ता । प्रबुद्धाश्च ऋत्विजः स्नात्वा शालाद्वारे परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्सम्मा-र्जनानि कुर्वन्ति । उ० क० सपृषदाज्यहोमो विहितः । आ० क० त्वस्य होमस्य 'यज्ञतनुहोम' इति संज्ञोपलभ्यते ।[1]

**पात्रयोजनम्**–उ० क० उन्नेता प्रातःसवनस्य त्रयोदश ग्रहपात्राणि योजयति । तानि पात्राणि भवन्ति—उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्त्री, आग्रयणः, उक्थ्यः, ध्रुवः (वैश्वा-नरो वा), ऋतुग्रहौ, ऐन्द्राग्नः, वैश्वेदेवश्चेति । तत्र आ० क० प्रादेश-मात्राण्यूर्ध्वसानून्युपरिष्टादासेनवन्ति, मध्ये संनतानि वायव्यपात्राणि, परिस्रुगैन्द्रवायवग्रहपात्रम्, आजगवं मैत्रावरुणग्रहस्य पात्रम्, द्विस्रक्ति आश्विनग्रहपात्रम्, वैल्वं शुक्रस्य, वैकङ्कतं मन्थिनः, आश्वत्थे अश्व-शफबुध्ने उभयतोमुखे ऋतुपात्रे, तत्र दक्षिणमध्वर्योरुत्तरमृतुपात्रं प्रति-प्रस्थातुश्च, दधिपात्रमौदुम्बरं चतुस्रक्ति च एवंविधे पात्रे अश्वदाभ्य-योर्ग्रहयोर्भवतः । चमसाध्वर्यूणां कृते दश नैयग्रोधा रौहीतका वा चमसा प्रयुज्यन्ते । हविर्धानस्य पार्श्वे सदशापवित्रं द्रोणकलशं, पूत-भृतम्, आधवनीय च स्थाप्यन्ते, अपरपार्श्वे त्रीन्, पञ्च सप्त, नव, एकदशान् वा एकधनाघटान् चाध्वर्युः स्थापयति ।[2] एवंविधं विधानं प्रायेण का० क० च अस्ति ।[3]

तत उ० क० होता प्रातरनुवाकस्य शस्त्रं पठति । आ० क० चात्र विकल्पेन सुब्रह्मण्याह्वानम् ।[4] का० क० होत्रा शस्यमाने प्रातरनुवाके अध्वर्युर्जगर्ति, स्वप्याद्वा ।[5] आ० क० यत्र होता प्रातरनुवाकं पठति, तत्रैवाध्वर्युर्वहन्तीनामपो गृह्णाति, शस्त्रं च शृणोति ।[6] अत्र का० क०

1. आ० श्रौ० (१२।१।१-४)
2. आ० श्रौ० (१३।१-२ कण्डिके)
3. आ० श्रौ० (८।२।१-२३)
4. आ० श्रौ० (१२।३।१८)
5. का० श्रौ० (६।१।१३-१३)
6. आ० श्रौ० (१२।५।६)

अग्नीदेकादशकपालं पुरोडाशमिन्द्राय निर्वपति, तत्रैतानि पञ्च हवींषि पञ्च देवताश्च ऐन्द्र एकादशकपालपुरोडाशः, इन्द्राय हरिवते धानाः, इन्द्राय पूषण्वते करम्भः, इन्द्राय सरस्वतिमते दधि, इन्द्राय मित्रवरुणवते पयस्येति। अस्मिन् काले उन्नेता खरे पात्राणि योजयति, योजितेषु पात्रेषु चत्वार ऋत्विजः सोमाभिषवार्थमधिषवणफलकयोः पार्श्वे सर्वत उपविशन्ति तत्रोत्तरतोऽध्वर्यु यजमानौ, दक्षिणतो ब्रह्मा प्रतिप्रस्थातृन्नेतृनेष्टारश्च।

**प्रचारः**—उ० क० 'अभूदूषा रुशत्पशुरिति' मन्त्रे शस्यमाने अध्वर्युश्चतुर्गृहीतमाज्यं प्रचरण्या जुहोति। ततो नेष्टा पत्नीमुदानयति, पत्नी च पान्नेजनीं स्थालीं धारयति। ततो अप्सु होमो भवति। मैत्रावरुणश्चमसे अपो गृहीत्वा, एकधनान् घटान् चोन्नयति, ततोऽध्वर्युः होतृचमसे निग्राभसंज्ञका अपो गृह्णाति, ततः प्रचरण्या होमः। एकधनानां तृतीयभागमाधवनीये निनीय शेषं यथास्थानं निधाय सर्वे ऋत्विजः सोमाभिषवार्थं यथासनमुपविशन्ति।

अत्रैवाध्वर्युर्वाग्यमनं कृत्वा पाषाणमादत्ते।[1]

**दधिग्रहः**—ततोऽध्वर्युरौदुम्बरपात्रे दधि गृह्णाति—उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीति, ततोऽनुवाकशेषेण (प्राणाय त्वेति) जुहोति।[2]

**क्षुल्लकाभिषवः (उपांशुसवनम्)**—का० क० अध्वर्यु रधिषवणचर्मणः समीपे उपविश्य पञ्चकृत्वः मितं सोमं गृहीत्वा निग्राभसंज्ञाभिरद्भिरासिञ्चति, ततः सोमं ग्राव्णा प्रहरति, एवं प्रहृत्य प्रहृत्य, आसिच्य आसिच्य च वारत्रयमभिषवं करोति, तत्र अष्टकृत्वः, एकादशकृत्वः, द्वादशकृत्वो वा प्रहरणं विहितम्। अत्र प्रहरणं निग्राभवाचनपूर्वकं तूष्णीं वा भवति, ततो अध्वर्युरुपांशुसंज्ञकं ग्रहं गृह्णाति—'वाचस्पतये देवो देवेभ्यो मधुमतीरिति' (शु० य० ७।१–२) प्रतिप्रस्थाता उपांशुपात्रं धारयति, एवं स 'उद्यानमिति' अन्तर्यामिग्रहं गृह्णाति। ग्रहग्रहणान्तरं यजमानो वरं दानं वा ददाति। होमानन्तरं चाग्रयाणस्थाल्यां शेषैकदेशमासिच्य अंशुपात्रमासाद्य स तत्समीपे उपांशुसवनपात्रं

1. का० श्रौ० (९।३, ९।४।१-५)
2. आ० श्रौ० (१२।६।१-७)

च निदधाति। एष एव क्षुल्लकाभिषवो यत्राध्वर्युरेव एकः कर्त्ता।[1] आ० क० चाध्वर्युः पूर्वकल्पवत् सोमं शिलाखण्डे न्युप्य अभिमन्त्र्य च ग्राव्णा अभिषुणोति, यदा सोमरसः स्कन्दति तदा सोऽध्वर्युर्हिरण्यपाणिर्भूत्वा जुहोति। सोमाहुतीर्हुत्वा शेषमध्वर्युः भक्षयति, ततोऽदाभ्यग्रहं (अन्तर्यामग्रहं) गृह्णाति, ततः स वारत्रयं प्रहृत्य निषिच्य चाभिषुणोति, हुत्वा शेषं सोमरसं च भक्षयति, अत्र द्वादश गा दक्षिणायां यजमानो ददाति। ततोऽध्वर्युरुपांशुग्रहग्रहणाय अभिषुणोति, तं गृहीत्वा वाचं यच्छति। पूर्ववत् प्रतिप्रस्थाता उपांशुपात्रं धारयति, अञ्जलिना सोममादायाध्वर्युरुपांशुपात्रं नमति, एवं तृतीयपर्याये अभिषुत्याध्वर्युऋजुस्तिष्ठन् सततं जुहोति, शेषभक्षणानन्तरं पात्रासादनादि कर्म भवति।[2] कात्यायनकल्पवदत्रापि अष्टकृत्वोऽभिषुत्य अध्वर्युः पुनरेव निग्राभं सेचनार्थं गृह्णाति, एकादशकृत्वो वा द्वितीयाभिषवणम्, द्वादशकृत्वस्तृतीयपर्याये अभिषवणम्। उ० क० मन्त्रपूर्वकं सोमाप्यायनादि कर्म च भवति।

**महाभिषवः**—अस्मिन् महाषवे अध्वर्युप्रतिप्रस्थातृनेष्टृनेतारश्चत्वार ऋत्विजो अधिषवणफलकस्य पार्श्वे आसीनाः सोमभिषुण्वन्ति, अत्रापि क्षुल्लकाभिषववत् मितं सोमं चतुर्द्धा विभज्य चत्वारोऽपि तत्र प्रहरन्ति, अत्र प्रहारश्चामितकृत्वो भवति। तथा च पूर्ववत् त्रिवारम् आप्यायनान्तः सोमाभिषवो भवति यावद् रसप्रच्युतिः, स त्रिषु पर्यायेषु निग्राभ्यासेचनादि सर्वं कर्म पूर्ववद् भवति।[3]

**अन्तर्यामग्रहप्रचारः**—उ० क० अध्वर्युर्होतृचमसेन सततं सोमरसस्य धारां स्रावयन् 'उपयामगृहीतोऽसी'त्यनेन मन्त्रेण अन्तर्यामग्रहं गृह्णाति, अत्रापि उपांशुग्रहवत् होमभक्षणमार्जनपात्रसंसादनादि कर्म सर्वं भवति।[4] आ० क० अध्वर्युर्नानुदिते सूर्ये उपांश्वन्तर्यामो जुहुयात् यदि त्वरामिच्छेत्तदा अनुदिते उपांशु होमः, उदिते अन्तर्यामिहोमः, परमते चोभौ ग्रहौ अनुदिते होतव्यौ।

---

1. का० श्रौ० (९।४)
2. आ० श्रौ० (१२।७-१०)
3. का० श्रौ० (९।५), आ० श्रौ० (१२।१२)
4. का० श्रौ० (९।६।१-५), आ० श्रौ० (१२।१३)

**ग्रहग्रहणम्**—उ० क० उदिते सूर्ये अन्तर्यामिग्रहणपात्रासादनान्ते अध्वर्युस्तदानीमेव संततधारायाः सकाशादैन्द्रवायवं द्विदेवत्यग्रहं गृह्णाति, ततो मैत्रावरुणग्रहदुग्धेन श्रीत्वा गृह्णाति ततः शुक्रग्रहस्य वैकंकतेन वा उलूखलेन ग्रहणम्, ततः सक्तुभिः श्रीत्वा मन्थिग्रहग्रहणम्, तदनन्तरं धाराद्वयं सम्पाद्य आग्रयणग्रहग्रहणम्, ततः क्रमेण मन्त्रपूर्वकं स उक्थ्यग्रहं ध्रुवग्रहं च गृह्णाति। ततो वैश्वानरग्रहणं विकल्पेन। एवं ग्रहेषु गृहीत्वा स्वस्वस्थाने आसादितेषु सत्सु अध्वर्वादयः परस्परं कटिप्रदेशे समन्वारब्धाः प्रह्वीभूता हविर्धानान्निष्क्रामन्ति। ततस्ते सर्वे विप्रुड्होमं कृत्वा बहिष्पवमानार्थं चात्वालदेशं प्रति गत्वा तत्रोपविशन्ति।[1]

**उपवेशनविधिः**—उदङ्मुखः प्रस्तोता, दक्षिणमुखः प्रतिहर्त्ता, प्रत्यङ्मुखावध्वर्यु प्रतिप्रस्थातारौ। एवमुपविश्य ते बहिष्पवमानस्तोत्रपठनार्थं यतन्ते।

**बहिष्पवमानम्**—तत्राध्वर्युः प्रस्तोतृसंज्ञकाय ऋत्विजे तृणं कुशमुष्टिं वा प्रयच्छति। ततस्सर्वे स्तोत्रं पठन्ति। तच्च स्तोत्रम्, 'उपास्मै गायता नर' इत्यादिभिर्नवभिर्ऋग्भिर्भवति। प्रस्तोत्रुद्गातृप्रतिहर्तार एव स्तोत्रं गायन्ति। ततो अध्वर्युः सवनीयपश्वर्थम् अग्नीत्प्रतिप्रस्थातारौ प्रेषयति।[2]

आ० क० ऋत्विग्यजमानाः छद्मना व्याधा इव मृगान् जिघृक्षवः सर्पन्ति, मृग इव हि यज्ञो भवति, तं गृहीतुं ते सर्पन्ति। अत्रापस्तम्बेन भारद्वाजमतमुपस्थापितम्। तदनुसारेण 'हो' इत्यृत्विज उपगायन्ति' 'ओमिति' यजमानो गायति। छान्दोगास्तु विपरीतमाहुः। ततः कात्यायनकल्पवदत्रापि प्रैषादिः।[3]

**सवनीयपशुः**—का० क० पक्षद्वयमस्ति—स्तोमायनं पश्वेकादशिनी च। एते उभे पूर्वं व्याख्याते। तत्र अग्निष्टोमसंस्थायामाग्नेयः सवनीय एक एव पशुः। उक्थ्यादिषु संस्थासु पशुसंख्या तु वर्धते। का० क० सवनीयपशोः पूर्वम् आश्विनग्रहग्रहणं भवति। ततः पशोर्वंगामार्ज-

1. का० श्रौ० (९।६।७-३०), आ० श्रौ० (१२।१४)
2. का० श्रौ० (९।७।१-५)
3. आ० श्रौ० (१२।१७।१-२०)

नान्ते कृते धिष्ण्यामुपस्थानम् । एतदेव सर्पणमित्युच्यते ।[1] आ० क० प्रायेण चैवं विधीयते ।[2] परन्त्वत्र कल्पे धिष्ण्याद्युपस्थानाद्यनन्तरम् आश्विनग्रहग्रहणम् ।[3]

**द्विदेवत्यग्रहाणां प्रचारः**—उ० क० आश्विनग्रहग्रहणानन्तरं यजमानो अन्यान् ग्रहान् प्रेक्षते । ततः पूर्वं अपितानां पुरोडाशादीनां प्रातःसवनीयहविषां प्रचारः । ततस्त्रयाणामैन्द्रवायवमैत्रावरुणाश्विनानां द्विदेवत्यग्रहाणां प्रचारः । अत्र कल्पे पूर्वं होतृनामग्रहणान्ते अध्वर्युराश्रव्य आश्रव्य मन्त्रलिङ्गेन ऋत्विजो प्रवृणीते । वरणान्ते होमो भवति ।[4] त्रिषु ग्रहेषु हुतेषु उन्नेता नव चमसानुन्नयति । ते नवचमसा होतृपोतृनेष्टृब्रह्मब्राह्मणाच्छंसिमैत्रावरुणाग्नीध्राच्छावाकयजमानानां भवन्ति । उद्गातृप्रतिहर्तृप्रस्तोतृणामेक इति दश चमसाः ।[5]

**शुक्रामन्थिग्रहौ** उ० क० शुक्रग्रहमध्वर्युः, मन्थिग्रहं च प्रतिप्रस्थाता जुहोति, शुक्रामन्थिग्रहयोश्चमसानां च युगपद्धोमो भवति । तत्र ब्रह्महोत्रुद्गातृयजमानचमसानां वषट्कारेऽनुवषट्कारे च होमः, प्रशास्त्रादीनां पञ्चचमसान् अध्वर्युरेव जुहोति ।[6]

**द्विदेवत्यभक्षः**—का० क० होमाभिषवकर्तृत्वात् अध्वर्युप्रतिप्रस्थात्रोः प्रथमो भक्षो ततो होतृभक्षः । तथा चाह वाजसनेयो याज्ञवल्क्यः—'अग्नौ हुत्वाप भक्षयतीति' (श० ब्रा० ६।५।१।११)' अनेनाध्वर्युः प्रथमं भक्षयेदिति श्रुत्याशयः ।[7] ऐन्द्रवायवं होत्रा दत्तमध्वर्युर्गृहीत्वा सकृत्सशेषं स्वल्पं भक्षयित्वा होतृचमसे ग्रहशेषैकदेशमवनीय

1. का० श्रौ० (६।७।८-११, ८।१-७)
2. आ० श्रौ० (१२।१८)
3. आ० श्रौ० (१२।१६।११)
4. का० श्रौ० (६।८।८)
5. का० श्रौ० (६।६।१३-२५), आ० श्रौ० (१२।२०)
6. का० श्रौ० (६।१०), आ० श्रौ० (१२।२२।२३)
7. 'होतुश्चित्पूर्वो हविरपमाशत' (ऋ० १०।१४।२) इति मन्त्रवर्णैर्होतुः प्रथमः भक्षो भवेदिति प्रतीतिः, तन्न, कात्यायनमते मन्त्रा विधायका न भवन्ति, अयं तु अर्थवादमात्रः प्रतीयते ।

ग्रहं होत्रे ददाति। होता च तं ग्रहं गृहीत्वाऽध्वर्युमुपहूय[1] स्वसूत्रोक्त-विधिना भक्षयति, ततः स्वचमसे शेषैकदेशे तेनासिक्ते पुनरध्वर्योः सकृद्भक्षणम्, अनेनैव क्रमेण मैत्रावरुणाश्विनग्रहावपि अध्वर्युणा होत्रा च भक्षणीयौ। अत्रैव पुरोडाशादिहविःशेषभक्षणम्।[2]

**चमसभक्षः**—अध्वर्युर्होतृचमसे प्रथमं भक्षयति, ततः प्रतिप्रस्थाता भक्षयति, ततो होता तमेव द्विर्भक्षयति, ततो होता ब्रह्मचमसे ब्रह्माणम् स्पृष्ट्वा द्विर्भक्षयति, ब्रह्मा च तमेव द्विर्भक्षयति एवं यजमान-प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृग्नीच्चमसान् तत्तच्चमसिन उपहूय सभक्षयन्ति, तत्र यजमानचमसे द्विर्भक्षणमितरस्य तु सकृत्सकृत्। चमसिनश्च स्वं स्वं चमसं सकृत्सकृद् भक्षयन्ति, अन्ते च पुनर्होता समाख्यानिमित्तं सकृद् भक्षयति। अयमेव महाभक्ष इत्युच्यते। ततो-ऽध्वर्युः पञ्चसु चमसेषु होतारं तं तं चमसिनं चोपहूय सकृद् भक्षयति। चमसिनोऽपि होत्रध्वर्यू उपहूय वषट्कारद्वयनिमित्तं भक्षणद्वयं कुर्वन्ति। तत ऋत्विजः सशेषान् चमसान् हविर्धानस्य दक्षिणस्य पश्चादधो निदधति तेषां नाराशंस इति संज्ञा। ततोऽच्छावाकचमसस्य विधिवत् भक्षणादि भवति।[3]

**ऋतुग्रहाः**—वसन्तादयः षडृतवः प्रसिद्धाः, तत्तदृत्वन्तर्गता मधु-माधवादयो मासाश्च देवता भवन्ति। यद्यपि ऋतुग्रहप्रचारे द्वे पात्रे प्रयुज्येते, तयोरेकमध्वर्युहस्ते, द्वितीयं च प्रतिप्रस्थातुर्हस्ते भवति। तथापि तौ ताभ्यां पात्राभ्यां वारषट्कं वारषट्कं ग्रहं गृह्णीतः, एवं द्वादशग्रहा भवन्ति, का० क० त्रयोदशो ग्रहोऽपि विहितः, आपस्तम्बस्तु चतुर्दशमपि ऋतुग्रहं समाम्नाति।[4] तत्र प्रथमौ ग्रहौ युगपद् गृह्णीतः एवमन्तिमौ च। मध्ये येऽष्टौ ग्रहास्ते व्यत्यासेन उभाभ्यां गृह्यन्ते। अत्र द्वादश ग्रहा निरवशेषं हुत्वा हुत्वा भक्ष्यन्ते।[5]

**ऐन्द्राग्नग्रहप्रचारः**—तत उ० क० प्रैषादि कृत्वा होमो क्रियते, ततो होमान्ते नाराशंसानां चमसानां कम्पनम्, ततो विधानपूर्वकं पूर्ववत् शेषभक्षणं भवति।

1. 'नानुपहूतेन सोमः पातव्यः' इति नियमः।
2. का० श्रौ० (९।११।१३-२३)
3. का० श्रौ० (९।१२), आ० श्रौ० (१२।२५-२६)
4. का० श्रौ० (९।१३।१८), आ० श्रौ० (१२।२६।१)
5. का० श्रौ० (९।१२।१-२४), आ० श्रौ० (१२।२७।१-७)

**वैश्वदेवग्रहप्रचार:**—एवं पूर्ववद् हविर्धानादध्वर्यु: शुक्रपात्रे वैश्वदेवग्रहं गृह्णाति, तत: स वैश्वेदेवशस्त्रमुपाकृत्य प्रस्तोत्रे तृणं दत्वा ग्रहं च हुत्वा शेषभक्षणं करोति। दशचमसेषु च चमसाध्वर्यवो भक्षयन्ति, प्रक्षाल्य तान् यथास्थानं सादयन्ति।

**उक्थ्यग्रहप्रचार:**—उ० क० उक्थ्यस्थालीस्थं सोमं त्रेधा विभज्य प्रशास्तृब्राह्मणाच्छंस्यच्छावाकाश्च गृह्णन्ति। ग्रहशेषं होमान्ते चमसे चासिच्य भक्षणादि।[1]

## माध्यंदिनसवनम्

**अभिषव:**—का० क० लोकद्वारि साम्नो गाने कृते सर्वे ऋत्विग्यजमाना: प्रात:सवनवत् सर्पणं कुर्वन्ति, प्रात:सवनवदेव सोमोऽभिषूयते अध्वर्युणा च ग्रहाणां ग्रहणं भवति। तत्र प्रथमपर्याये प्लुतस्वरेण अभिषव:, द्वितीयपर्याये दीर्घस्वरेण, तृतीयपर्यायस्तु एकमात्रकसत्वरमन्त्रको भवति।[2] आ० कल्पे च पूर्वविधानवद् अभिषवो भवति, अत्र वैकल्पिक: पशुपुरोडाशोऽपि विधीयते।[3]

**ग्रहग्रहणम्**—उ० क० रसप्रच्युतौ शुक्रामन्थाग्रयणमरुत्वतीयोक्थ्यानां पञ्चानां ग्रहाणां प्रथमं ग्रहणं भवति। अध्वर्युराग्रयणग्रहं तृतीयाभ्यो धाराभ्यो गृह्णाति तत्रैका धारा यजमानस्य, द्वितीया उन्नेतु:, तृतीया प्रतिप्रस्थातुर्भवति। तत्राध्वर्यु राग्रयणग्रहग्रहणानन्तरमृतुग्रहपात्रेण मरुत्वतीयग्रहं गृह्णाति, शाखान्तरे तूक्थ्यग्रहग्रहणादन्तरं मरुत्वतीग्रहग्रहणमाख्यायते। आ० क० च उक्थ्यग्रहणानन्तरं मरुत्वतीयग्रहणम्, अथवा मध्य उक्थ्यग्रह:, अभितो मरुत्वतीयग्रहौ गृहीतव्यौ।[4] तत उ० क० वहिष्पवमानं प्रतिसर्पणम्, दधिग्रहभक्षश्च।[5] अत्र कात्यायन: पशुपुरोडाशप्रचारमाह[5], आपस्तम्बेन तु तत्पूर्वमुक्तम्।

**शुक्रामन्थिनोर्ग्रहयो: प्रचार:**—उ० क० शुक्रामन्थिग्रहयोर्होमादिभक्षणान्त: प्रचार: सचमस: क्रियते। अत्रैडाभक्षणम्, दक्षिणाविधानं

---

1. का० श्रौ० (९।१४), आ० श्रौ० (१२।२७-२९ कण्डिका:)
2. का० श्रौ० (१०।१।१-१०)
3. आ० श्रौ० (१३।१)
4. का० श्रौ० (१०।१।१२-१६), आ० श्रौ० (१३।२)
5. का० श्रौ० (१०।१।२०-२४), आ० श्रौ० (१३।३)

च स्तः। दक्षिणाहोमोऽपि तत्र कल्पयोर्विहितः।[1] का० क० दक्षिणा– वासांसि, हिरण्यम्, द्वादशशतं वा गावो मन्थौदनतिलमाषाश्च।[2] आ० क० स्थापितेषु चमसेषु यजमानो दक्षिणां सप्तैकविंशतिं गाः, षष्टि शतं, द्वादश शतं, सहस्रं, सर्वस्वं वा अश्वतरं वा साहस्रे सर्ववेदसे ददाति। अन्यत्र अश्वतरदानं निषिद्धं विद्यते।[3] ततो दक्षिणहोमो विधीयते। ततो हिरण्यादिदानं स्वाङ्गनिष्क्रयणं च विधीयेते।[4]

**मरुत्वतीयग्रहप्रचारः**—उ० क० ततोऽध्वर्युर्मरुत्वतीयग्रहमृतुपात्रेण गृह्णाति, तं गृहीत्वा, आसाद्य, हुत्वा चाध्वर्युर्होता च तं ग्रहं भक्षयतः। ततो होता मरुत्वतीयं शस्त्रं शंसति, अध्वर्युः प्रतिगृह्णाति, ततो ग्रह-होमस्ततो भक्षणादि भवति।[5]

**माहेन्द्रग्रहप्रचारः**—उ० क० शुक्रपात्रेण माहेन्द्रं ग्रहमध्वर्युर्गृह्णाति वैश्वदेवग्रहवत्। आ० क० हुते माहेन्द्रे ग्रहे त्रयोऽतिग्राह्या गृह्यन्ते—अध्वर्युप्रतिप्रस्थातारौ आग्नेयं ग्रहं गृह्णीतः, ऐन्द्रं ग्रहं नेष्टा गृह्णाति, सौर्यञ्चोन्नेता गृह्णाति। तेषामपि होमशेषभक्षणादि।[6] का० क० तृतीयसवनीयानां हविषां निर्वापोऽग्नीत्कर्तृको विहितः, अत्र वारुण एककपालः सौम्यश्चरुश्चाधिकौ, अन्यत्सर्वं प्रातःसवनवत्।[7]

## तृतीयसवनम्

**आदित्यग्रहप्रचारः**—उ० क० आदित्यस्थाल्या गृहीत्वा अध्वर्युरा-दित्यग्रहं दध्ना श्रीत्वा च सशेषं हुत्वा, प्रतिप्रस्थात्रे च शेषं ददाति। तत आदित्यग्रहार्थं सर्पणं भवति। प्रथमादित्यग्रहस्तृतीयसवनात्प्राक् श्रूयते।[8]

---

1. का० श्रौ० (१०।१।२७)
2. का० श्रौ० (१०।२।५-१२)
3. आ० श्रौ० (१३।४।१४-१६, १३।५।१-३)
4. आ० श्रौ० (१३।६)
5. का० श्रौ० (१०।३।३-९), आ० श्रौ० (१३।८।१-३)
6. का० श्रौ० (१०।३।१०), आ० श्रौ० (१३।८।४-१०)
7. का० श्रौ० (१०।३।१८।१९)
8. का० श्रौ० (१०।४।१५), आ० श्रौ० (१३।९,१०)

**आग्रयणग्रहप्रचारः**—पूतभृतश्चतस्रो धारा प्रवहन्ति, ताभ्योऽध्वर्युराग्रयणं ग्रहं गृह्णाति, अत्राध्वर्युः पूतभृति आशिरं (मथितं दधि) निनयति, ततः सर्वे सदसो बहिः आर्भवपवमानोपाकरणार्थं निष्क्रामन्ति। आर्भवपवमाने शस्त्रे कृते सवनीयहविषां प्रचारो भवति। ततश्चमसानुन्नीय भक्षणादि। अत्रैव उक्थ्यग्रहग्रहणं च भवति। माध्यंदिनसवनवत् चेडाप्राशनादि।[1] तत उ० क० प्रागिडाभक्षणात् त्रींस्त्रीन् पुरोडाशशकलान् चमसेषु वपन्ति पिण्डपितृयज्ञवद्दानार्थम्, ततो यजमानः पितृभ्यो नमस्करोति।[2]

**सावित्रग्रहप्रचारः**—ततोऽध्वर्युरुपांश्वन्तर्यामिपात्रयोरन्यतरेण च सावित्रग्रहं गृह्णाति।[3]

**अन्या ग्रहाः**—तत उ० क० महावैश्वदेवग्रहग्रहणम्, ततः सौम्यश्चरुप्रचारः, पात्नीवतग्रहप्रचारः, अग्निष्टोमस्तोत्रोपाकरणम्, ध्रुवग्रहप्रचारः हारियोजनग्रहप्रचारश्च विहितः। तत्र पात्नीवतग्रहस्य प्रचारः प्रतिप्रस्थातृकर्तृकः। यज्ञायज्ञियस्तोत्रस्याग्निष्टोम इति आख्या। अस्य स्तोत्रस्यानन्तरमाग्निमारुते शस्त्रे होत्राकृते ध्रुवं ग्रहं होतृचमसेऽवनीय तं च हुत्वा तस्य भक्षणम्। ततः सर्वे प्रशास्त्राऽनुज्ञाता निष्क्रमणरूपसवनान्तर्भूतं सर्पणं कुर्वन्ति, ततोऽनुयाजादि भवति। ततो द्रोणकलशे हारियोजनं ग्रहं निरवशेषं गृहीत्वा तत्र च धानान् निक्षिप्य तमुन्नेता स्वमूर्धनि धृत्वा तेनैव सर्वं होमं करोति। अत्र विकल्पेन भक्षणम्, सर्वहोमो वा विधीयते। तथा हि शतपथे च श्रूयते (४।४।३।१०), अथवा सर्वे प्राणभक्षं कुर्वन्ति (घ्राणेन जिघ्रन्ति)। तत उ० क० चमसिनश्चमसान् उदपूर्णान् कृत्वा एकधनाघटेषु हरिताः दूर्वाः प्रास्यन्ति।[4]

## १. सोमावभृथः

**अवभृथः**—यज्ञान्ते यावन्ति सोमलिप्तानि पात्राणि ग्रहचमसस्थालीपूतमृदाधवनीयादीनि तानि यजमानः चादाय यज्ञावभृथेष्टि

1. का० श्रौ० (१०।५।१-७), आ० श्रौ० (१३।१०।१०-१३, १३।११)
2. का० श्रौ० (१०।५।११), आ० श्रौ० (१३।१२।६-१०)
3. का० श्रौ० (१०।५।१३), आ० श्रौ० (१३।१३।१)
4. का० श्रौ० (१०।६,७,८ काण्डिकाः), आ० श्रौ० (१३।१३,१४,१५, १६,१७,१८ कण्डिकाः)

चिकीर्षति तत्र ह्रदादिं गत्वा तत्र जले पात्राणि प्रक्षिपति। ततः सामगानम्, ततो वरुणप्रघासवद् अवभृथेष्टिं कृत्वा सर्वे ऋत्विग्यजमानाः स्नात्वा यज्ञभूमिं पुनरागत्य उदयनीयेष्टिं कुर्वन्ति।[1]

**अन्ये सोमयागाः**—उ० क० ब्राह्मणयजमानके[2] सोमयागे एव सोमो विधीयते, वैश्यराजन्ययोः सोमक्रतौ तु न्यग्रोधवृक्षस्याङ्कुराणि फलानि वाऽऽहृत्य तानि सम्यक् पेषयित्वा लौकिकेन दध्ना साकं मिश्रयित्वा तदेव च द्रव्यं सोमस्थाने प्रयोक्तव्यम्, यजमानेन चास्यैव भक्षणं क्रियते। यत्र यत्र मन्त्रादिषु सोमशब्दः प्रयुज्येत तत्तत्स्थले सोमपदस्यैवानूहेनैव प्रयोगः कर्त्तव्यः।[3]

कात्यायनेन त्वेकस्मिन् सूत्रे षट् सोमयागाः संकेतिताः।[4] आपस्तम्बेन तु सप्तसु कण्डिकासु चैते षड् यागाः प्रोच्यन्ते। तन्मते उक्थ्यादयः सोमक्रतवो ज्योतिष्टोमस्य गुणविकाराः सन्ति, तथा च तन्मते उक्थ्येन पशुकामः, षोडशिना वीर्यकामः, अतिरात्रेण प्रजाकामः, अप्तोर्यामिण सर्वकामश्च यजेत।[5] अप्तोर्यामे त्रयस्त्रिंशत् स्तोत्राणि पठ्यन्ते।

**उक्थ्यः**—अस्मिन् सोमयागे सर्वाः क्रिया अग्निष्टोमवत् भवन्ति।[6] केवलं त्रीण्यधिकानि उक्थ्यस्तोत्राणि सोमाभिषवे गीयन्ते। सम्पूर्णानि पञ्चदशशस्त्राणि भवन्ति। अग्निष्टोमे द्वादश शस्त्राणि भवन्ति।

**षोडशी**—आ० क० प्रातःसवन उत्तमे पर्याये धाराया ग्रहग्रहणं भवति, अत्राचार्यो रात्रिपर्यायप्रचरणमपि आह।[7] तैत्तिरीयसंहितायां

---

1. का० श्रौ० (१०।६), आ० श्रौ० (१३।१६-२५)
2. 'सोमोऽस्माकं ब्राह्मणानां राजा'
3. का० श्रौ० (१०।६।३०-३२)
4. 'अत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः।'
(का० श्रौ० १०।६।२८)
5. आ० श्रौ० (१४।१।१-२)—'अग्निसोमवत्तेषां कल्पः'
(आ० श्रौ० १४।१।३)
6. आ० श्रौ० (१४।२।१, १४।३।१०)
7.

स्पष्टमुक्तं—'न वै षोडशी नाम यज्ञोऽस्ति यद्वा षोडशं शस्त्रं षोडशं स्तोत्रं तेन षोडशी ।[1] एवं चैतरेयेणोक्तम् ।[2]

**अत्यग्निष्टोमः**—अग्निष्टोमस्तोत्रानन्तरमुक्थ्यमकृत्वा यत्र षोडशी क्रियते सोऽत्यग्निष्टोमक्रतुः ।

**अतिरात्रः**—षोडशिस्तोत्रानन्तरं यत्र अतिरात्रसंज्ञानि सामानि गीयन्ते सोऽतिरात्रसंज्ञकः सोमक्रतुः । अयमपि ज्योतिष्टोमतुल्यधर्मा प्रसिद्धश्च । अहीनेषु सोमक्रतुषु स प्रथमः प्रयुज्यते । काठकसंहितायां तूक्तम्—'अतिरात्रः परमो यज्ञक्रतूनामित्याहुर्ब्रह्मवादिनः ।[3] तथा च ताण्ड्यब्राह्मणे—'यदेषोऽतिरात्रो भवत्यहोरात्र एव प्रजनयन्त्यहोत्रयोः प्रतिष्ठति ।'[4] एतानि हीन्द्रं रात्रेस्तमसो मृत्योर्बिभ्यतमत्यपारयन् ।'[5] अत्र यागे एकोनत्रिंशत् शस्त्राणि भवन्ति ।' (आ० श्रौ० १४।१०।४) ।

## २. द्वादशाहयज्ञः

उभयोः कल्पयोरयं यज्ञो द्विविधः सत्रात्मको अहीनरूपश्च । सत्रात्मको ब्राह्मणकर्तृक एव भवति स चापि अग्निचित्यात्मको निरग्निचित्यश्च । का० क० समानकल्पा आहिताग्नयोऽनुष्ठिताग्निष्टोमाः सप्तदशप्रभृति चतुर्विंशतिपरमा द्वादशाहयज्ञं यजेरन् ।[6] आ० क० त्रयः षड् द्वादश त्रयोदश पञ्चदश, सप्तदश, एकविंशतिः, त्रिंशत्, त्रयस्त्रिंशत्, चत्वारिंशत्, चतुश्चत्वारिंशत्, अष्टाचत्वारिंशत्, अपरिमिता वा पुरुषा सत्रे दीक्षेरन् ।[7] उ० क० सर्वे ऋत्विग्यजमाना भवन्ति, फलं च सर्वेषाम्, अतो दक्षिणा नास्ति । सत्रात्मके द्वादशाहे गृहपतेर्याजमानमुक्तम् । अहीनात्मको द्वादशाह एकद्विबहुयजमानकः । उभयत्रापि द्वादशदीक्षा, द्वदशोपसदो द्वादश सुत्या इति षट्त्रिंशद्दिनसाध्योऽयं यज्ञः ।[8]

---

1. तै० सं० (६।६।११।१)
2. ऐ० ब्रा० (१६।१)
3. का० सं० (३३।२।२)
4. ताण्ड्य ब्रा० (४।१।५)
5. ऐ० ब्रा० (१६।५)
6. का० श्रौ० भू० (पृ० ५५)
7. आ० श्रौ० (२१।१।११-१५)
8. जै० मी० सू० (१२।१।१५)

उ० क० दीक्षादिवसे सर्वे गृहपत्यादयः स्वान् स्वान् अग्नीनरण्योः समारोप्य देवयजनमागच्छन्ति। तत्र ते गृहपतिं परित उपविश्याग्निं मन्थन्ति, गृहपतिस्तु मध्ये मन्थति। अग्नीन् स्थाप्य तद्दिने प्राजापत्यः पशुरालभ्यते, ततो दीक्षाक्रमः प्रारभ्यते। तत्र शिशिरे चैत्र्यां वा दीक्षा विहिता। उ० क० च दीक्षाक्रमः समानः अस्ति। अध्वर्युः प्रथमतो गृहपतिं दीक्षयित्वा ब्रह्मोद्गातृहोतॄन् दीक्षयति, प्रतिप्रस्थाता अध्वर्युं दीक्षयति, ततोऽध्वर्युः ब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणान् दीक्षयति, ततो नेष्टा प्रतिप्रथास्त्रग्नीत्प्रतिहर्त्रच्छावाकान् दीक्षयति, तत उन्नेता नेष्टृपोतृसुब्रह्मण्यग्रावस्तुतो दीक्षयति। यो य ऋत्विग् यं यं दीक्षयति स स तं तदनु तत्पत्नीरपि दीक्षयति। ब्रह्मचारी उन्नेतृपत्नीरपि दीक्षयति।[1] समारब्धेषु सर्वेषु गार्हपत्यादिषु अध्वर्युः जुहोति।[2] साग्निचित्ये द्वादशाहे तु उखासंभरणमिष्टकोपधानादिकं च सर्वं चयनवत् क्रियते।

का० क० दीक्षाकाले संवादप्रभृति, ऐन्द्रः पुरोडाशः, पञ्चशरावोदनं च भवन्ति।[3] उ० क० द्वादशदीक्षानन्तरमुपसद्दिवसेषु यस्मिन् कस्मिंश्चिद्दिवसे सोमक्रयः। सुत्यायामहःक्लृप्तिः—तत्र प्रायणीयं प्रथमहः (प्रथमत आरम्भो येन इति प्रायणीयम्), ततः पृष्ठ्यः षडहः (षण्णामह्नां पृष्ठ्य इतीयं वैदिकी संज्ञा), ततस्त्रयश्छन्दोमा (त्रिभिर्गायत्रीत्रिष्टुब्जगतीरूपैश्छन्दोभिर्मीयन्ते इति यानि त्रीण्यहानि छन्दोमा इत्युच्यन्ते), तत उदयनीयोऽतिरात्रश्चेति। अहीने द्वादशाहे त्वन्वहं द्वादशशतानि गवां दक्षिणादानं विहितम्।[4] तत्र प्रथमदिनमतिरात्रसंस्थम् द्वितीयप्रभृतिसप्तमदिनपर्यन्तं षडहः पार्ष्ठिकः। रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानि सामानि षट्स्वप्यहःसु क्रमेण पृष्ठाख्यस्तोत्रसाधनीभूतानि गीयन्ते, ततः पृष्ठ्यः षडह इति संज्ञा व्यवह्रियते। तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वे, उत्तरेऽहनि उभयोस्त्र्यहयोर्वा ततो माहेन्द्रहोमः तदनन्तरं भक्षणं यजमानैः।[5]

1. का० श्रौ० (१२।२।१५), आ० श्रौ० (२१।२।१६-२०)
2. आ० श्रौ० (२१।३।११-१३, ४।१-२)
3. का० श्रौ० (१२।२।१०-१२)
4. आ० श्रौ० (२१।५।१-११)
5. का० श्रौ० (१२।३।२-६)

उ० क० षडहान्ते यजमानो न बहुवदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयात्, संस्थिते च घृतस्य मधोर्वा प्राशनम्।[1] षडहान्ते उक्थ्याश्च छन्दोमा भवन्ति, दशमेऽहनि अत्यग्निष्टोमोऽविवाक्यं विहितम्। एकैकमप्यहः पत्नीसंयाजान्तमवतिष्ठतेऽन्त्यं दिनं वर्जयित्वा। षडहे द्वितीयतृतीयाहनी उक्थ्यसंस्थाके, चतुर्थमहः षोडशिसंस्थम्, पञ्चमषष्ठे उक्थ्यसंस्थे, ततस्त्रिषु दिनेषु छन्दोमा उक्थ्यसंस्थाका एव। प्रथमदिने चतुर्विंशस्तोमः, द्वितीये चतुश्चत्वारिंशस्तोमः, तृतीयोऽष्टाचत्वारिंश-स्तोमः। तदनन्तरं सर्वे वाग्यताः सोमं रक्षन्ति। अस्तमिते सूर्ये सर्वेष्वहस्सु यजमानः समिधमादधाति। आ० क० यजमाना औदुम्बरीः समिध आहरन्ति, गार्हपत्ये चाध्वर्युर्जुहोति।[2] तत उ० क० ऋत्विग्यज-माना सत्रस्यार्द्धं गायन्ति, ततः प्राजापत्यग्रहग्रहणाय सर्वे प्रसर्पन्ति।[3] का० क० तु ग्रहं पात्रेण गृह्णन्ति, उ० क० तु मनसा ग्रहग्रहणं स्तोत्रो-पाकरणं प्रस्तावः उद्गीथः प्रतिहारश्च भवन्ति।[4] ततो दशहोतुः प्रतिगरान्ते उ० क० ब्रह्मोद्यं वदन्ति, अत्र सर्वे प्रजापतिं परिवदन्ति निन्दन्ति च, का० क० त्वत्र विकल्पेन आश्वमेधिकं ब्रह्मोद्यं भवति।[5] आ० क० प्रजापतेरगुणाख्याने परिवदन्ति 'अकुशलो वा अयं प्रजापतिर्यो दंशमसकान् ससृजे यः स्तेनानिति'—अथवा मन्त्रानधीयते—

यदरण्यानि प्रजापतिः पुरश्च ससृजे गिरीन्। कर्त्तानि च न तद्भद्रं यद्भद्रं तन्न आसुव। यत्स्तेनान्यद् वृकान् दंशान् मशकान् यदघायवः। तदु ते वृजिनं त्वेतद् भद्रमेतन्न मे मतम्। प्रजापतिं दशमहर्भजध्वं मतिं कवीनामृषभं जनानाम्। स सुष्टुतिं सुद्रविणं दधानः पूतो विपाप्मा विजहाति लोकः।[6]

तत उ० क० एकादशमहोऽत्यग्निष्टोमसंस्थम्, द्वादशमह उदयनी-यमतिरात्रसंस्थम्। तत्र द्वादशाहेऽतिग्राह्याणां त्रयाणां षोडशिनः अंश्वदाभ्ययोश्च ग्रहणं भवति। अयं च द्वादशाहो व्यूढसमूढात्मना

---

1. का० श्रौ० (१२।३।१७-१८), आ० श्रौ० (२१।८।६)
2. आ० श्रौ० (२१।६।१०)
3. का० श्रौ० (१३।४।१५), आ० श्रौ० (२१।१०।१)
4. आ० श्रौ० (२१।११।१-५), का० श्रौ० (१२।४।१६)
5. का० श्रौ० (१२।४।२०-२३)
6. आ० श्रौ० (२१।१२।१-३)

द्विविधः प्रकीर्तितः। व्यूहनं चाग्रतापां भवति।[1] तथा चाह आचार्य आपस्तम्बः—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथ नवानामह्नां मध्ये ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमथाग्रयणम्, अथैन्द्रवायवमग्रमथ शुक्राग्रमथाग्रयणम् अथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणमिति।'[2] 'अयमेव ऐन्द्रवायवादीनां क्रमशोऽत्र समूहनात्सैषा अनीका साम्येनोढा यत्र स समूढ इत्युच्यते। वैषम्येनोढः सव्यूढः। व्यूढप्रकारस्तु—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथैतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे, आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शकाग्रे अथाग्रयणम्, अथ द्वे ऐन्द्रवायवाग्रे।'[3] आपस्तम्बेनात्र वाजसनेयकं मतमुदाहृतम्।[4] उ० क० आदौ अन्ते चाग्नेयः पशुरालभ्यते।

## ३. गवामयनम्[5]

वक्ष्यमाणैर्बहुभिर्लक्षणैः सत्रमिदं ग्राम्यं लौकिकं च कृत्यं प्रतीयते, अत्र सत्रे यज्ञभूमौ मैथुनग्राम्यगानदीनि विहितानि, तेनेदमस्माकं मतं पुष्यति, काणेमहोदयस्याप्येतन्मतम्।[6] अस्य द्वादशाहसत्रतुल्यः कल्पो भवति। गवामयनस्य संवत्सरसाध्यत्वात्तु संवत्सरसत्रमिति चापि संज्ञा।

उ० क० अस्य सत्रस्य माघकृष्णाष्टम्यां माघशुक्लैकादश्यां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रारम्भः। कात्यायनेनात्र एकाष्टका संज्ञा प्रयुक्ता।[7] एकाष्टका नाम कृष्णाष्टमी माघस्य प्रसिद्धा। ताण्ड्यब्राह्मणे (५।९) फाल्गुन्यां पौर्णमास्यां गवामयनस्य दीक्षा विहिता।

1. जै० सू० (१०।५।३३-३४)
2. आ० श्रौ० (२१।२४।१-५)
3. तदैव
4. आ० श्रौ० (२१।१३।२०-२१)
5. 'गोभिरनुष्ठित्वादगवामयनमिति व्युत्पत्तिस्तदुपष्टम्भिका आख्यायिका, तै० सं० (७।४।८), ऐ० ब्रा० (४।३।३), ताण्ड्यब्रा० (४।११) चोपलभ्यते।
6. ध० इ० (पृ० ५७३)
7. का० श्रौ० (१३ १।२)

का० क० चैवं विधीयते ।[1] आपस्तम्बेनात्र आश्मरथ्यालेखनयोर्मते चोदाहृते । 'चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन् । माघ्या इत्याश्मरथ्यः । चैत्र्या इत्यालेखनः ।[2] उ० क० अत्र द्वादशदीक्षा द्वादशोपसदश्च भवन्ति । आ० क० परमतेन सप्तदश दीक्षाः समाम्नाताः ।[3] प्रथमदिन एवेष्टकोपधानमुखासम्भरणं च भवतः । ततोऽन्तिमोपसद्दिने अग्नीषोमीयपशुमनुष्ठाय तद्दिवस एव सुत्यारम्भः । सुत्यास्त्वत्र एकषष्ट्यधिकशतत्रयात्मिकाः । (तां० ब्रा० १२।३।३।११) का० क० गवामयनस्य अहानि षडहोऽभिप्लवः, द्वे अहनी अग्निष्टोमस्य, इतरेषु चोक्थ्या भवन्ति, तत्र प्रथमे मासि चत्वारो अभिप्लवाः पृष्ठ्यः षडहश्च भवन्ति । एवमेव द्वितीयतृतीयचतुर्थपञ्चममासेषु भवन्ति । षष्ठे मासि त्रयोऽभिप्लवास्त्रयश्च पृष्ठ्याः षडहा भवन्ति ततोऽभिजित्संज्ञकोऽग्निष्टोमोऽनुष्ठीयेत ततस्त्रयः स्वरसामानो भवन्ति, उक्थसंस्थाका अग्निष्टोमसंस्थाका वा ।'[4] एवं चापस्तम्बकल्पे विहितम् ।[5] ऐतरेयब्राह्मणानुसारेण (१।२।३।१–२) । उत्तरपूर्वपक्षयोरशीतिरशीतिः सुत्या भवन्ति । वर्षस्य द्वयोः पक्षयोर्मध्ये विषुवान्नाम अहः । एवं च दीक्षोपसद्दिनानां चतुर्विंशत्या सह पञ्चाशीत्यधिकशतत्रयदिनानुष्ठेयमिदं सत्रम् । तत्र प्रतिदिनं सवनत्रयाधिकं ग्रहचमसाधिकं स्तोत्रशस्त्रादिकं च यथाप्रकृति भवति । आपस्तम्बेनात्र शाट्यायनताण्ड्भाल्लविनां मतान्युदाहृतानि ।[6] पूर्वषण्मासानां पूर्वपक्षः, पूर्वपक्षस्य वैपरीत्येन उत्तरपक्षस्याह्नां क्लृप्तिः । प्रथमं तावत् प्रतिलोमास्त्रयः स्वरसामानः ततो विश्वजिन्नाम अग्निष्टोमः, ततः प्रतिलोमस्त्रयस्त्रिंशदारम्भणः पृष्ठ्यः षडहः, ततस्त्रयोऽभिप्लवाः षडहाः मिलित्वा अष्टाविंशतिरहानि । एवं पञ्चसु मासेषु क्रिया । षष्ठे मासे त्रयोऽधिका अभिप्लवा गोआयुषी दशरात्रो महाव्रतमग्निष्टोमश्च । अत्र वाजसनेयिनां मते (श० ब्रा० ४।६।३।३, का० श्रौ० १३।२।१६) प्राजापत्यः पशुरालभ्यते महाव्रताख्ये

1. का० श्रौ० (१३।१।३)
2. आ० श्रौ० २१।१५।५-६)
3. आ० श्रौ० (२१।१५।३)
4. का० श्रौ० (१३।२।१-७)
5. आ० श्रौ० (२१।१५।१५)
6. आ० श्रौ० (२१।१६)

यज्ञस्यान्तिमे दिवसे।[1] उ० क० अस्मिन् महाव्रते अध्वर्युणा विकल्पेन सामगानम्, शततन्तुवाणेनोपाकरणम्, उद्गाता वैतसेन दण्डेन कटशलाक्या, इक्षुकाण्डेन वाणदण्डेन वा वीणावादनं करोति, तमुद्गाता प्रस्तोत्रे प्रयच्छति, अध्वर्युरन्यस्मै च प्रयच्छति। आ० क० च वीरणादण्डमौदुम्बरं भवति। उ० क० सर्वे ऋत्विजो दर्भासनेषु बृसीषु चोपविशन्ति, होता तु प्रेङ्ख उपविशति, फलके चाध्वर्युः प्रतिगृह्णाति, प्रादेशपाद्यामासन्द्यामुद्गाता साम गायति। तत उ० क० पुंश्चली ब्रह्मचारी चान्योऽन्यं परस्परमुद्वेगकरं वाक्यमुक्त्वा मैथुनार्थमालिङ्गतः। तत्रैव वेदिपार्श्वे शूद्रार्यौ परिमण्डलं चर्म आकर्षतः, अस्मिन् संघर्षे आर्यस्त्रैवर्णिको जयति, तदनन्तरं मार्जालीयस्य दक्षिणे परिवृत्ते स्त्रीपुमांसौ प्रजननप्रतीकं मैथुनं कुरुतः। अन्यत्र क्षत्रियः कवचादिना संन्नाहयति, एवमन्ये क्षत्रियास्तूष्णीं कवचानि च धारयन्ति, ततः क्षत्रियाश्चात्वालं गत्वा अनिष्पत्रान् बाणान् कटादिषु विध्यन्ति। त्रिवारं विद्ध्वा स वितानं विमुञ्चति। ततोऽन्यत्र केचन पुरुषा दुन्दुभीनाघ्नन्ति, तथा चोपगायन्ति, उपगाने चैतानि वाद्यानि प्रयुज्यन्ते—गोधावीणा, काण्डवीणाश्च।[2] पत्न्योऽपि वादयन्त्युपगायन्ति च। अष्टौ दास्यौ दासकुमार्यो वा उदकुम्भान् शिरस्सु धृत्वा मार्जालीयं प्रति गच्छन्ति।[3] उ० क० दासकुमार्यो गाथा[4] गायन्त्यो नृत्यन्ति। ता दासकुमार्यस्तत्राप्रदक्षिणं सकृत् प्रतिगच्छन्ति, ततः प्रदक्षिणं सकृत्परियन्ति, महाव्रतस्य स्तोत्रपाठसमाप्तिपर्यन्तं ततः त्रिवारं गच्छन्ति। मार्जालीये उदकं निषिच्य पूर्णकुम्भान् तत्र निदधति। तत्रापस्तम्बकल्पे द्वे दासकुमार्यौ हिल्लुकां गाथां, द्वे दासकुमार्यौ हिम्बिनीं गाथां, द्वे दासकुमार्यौ हस्तवारां गाथां, द्वे दासकुमार्यौ संवत्सरगाथां चेति अष्टौ कुमार्यो गायन्ति। आसु गाथासु अयोध्यापतिः ऋतुपर्णः स्मर्यते, तेनैतत्सिध्यति यत् इमा गाथा ऋतुपर्णका-

---

2. 'महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम्।' (तै० ब्रा० १।२।६)

3. का० श्रौ० (१३।३।६-१६), आ० श्रौ० (२१।१८।१-७)

1. आपस्तम्बसूत्रे चैतानि वाद्यानि कथ्यन्ते—अपाघाटलिकाः, तम्बलवीणाः विच्छोलाः, शङ्खाः, नाली, तूणवाणश्च। शांखायनसूत्रे (१७।५।१२) अपाघाटलिका अवघटरिका उच्यते।

2. उभयोश्श्रौतसूत्रयोर्गाथानां पाठः किञ्चित् भिद्यते, तदुभयोः पाठः अन्यत्र द्रष्टव्यः।

लिका: सन्ति । ततो माहेन्द्रस्तोत्रान्ते सर्वे घोषा: शाम्यन्ति । तत उ० क० उदयनीयातिरात्र: श्वोभूते प्रारभ्यते । का० क० तत्र तिस्रोऽनुबन्ध्या गावो मैत्रावरुणी, वैश्वदेवी बार्हिष्पत्या चेति आलभ्यन्ते । कात्यायनमते संवत्सरावरेषु सत्रेषु तिस्रोऽनुबन्ध्या विहिता: ।[1] अवभृथानन्तरं पृष्ठशमनीयो नाम ज्योतिष्टोमोऽनुष्ठीयते । दक्षिणादाने च यजमानो दश दश गा: प्रत्यृत्विजं ददाति । आ० क० आग्नेयमुदयनीय आलभन्ते, वाजसनेयिनां मते एकादशिनान् ऐन्द्राग्नं वा सर्वत्रोदयनीय आलभन्ते । काठकानां चैवं मतम् ।[2]

## ४. आपस्तम्बकल्पे

**उत्सर्गिणामयनम्**—कात्यायनेन त्वेकस्मिन्[3] सूत्रे उत्सर्गिणामयनं संकेतितम् । येष्वहस्सु कर्म न क्रियते तान्युत्सृष्टान्युच्यन्ते । तदेव कर्म उत्सर्गिणामयनम् । आ० क० प्रथमं पृष्ठ्यं संस्थाप्य श्वोभूते वसतीवरी: परिहृत्य तासु मृत्पिण्डमवधायैन्द्रं सान्नाय्यं निरुप्य सर्वे तत्रोपविशन्ति । श्वोभूते तदहमुत्सृज्य प्राजापत्य: पशुरालभ्यते । तस्य वपया प्रचर्याग्नये वसुमते पुरोडाशमष्टाकपालं निरुप्यैन्द्रं दधि च निर्वपति । तत इडाभक्षणादि भवति । मध्यंदिनसवने मरुत्वते पुरोडाशैकादशकपाल:, तृतीयसवने च पशुना प्रचर्य वैश्वदेवं द्वादशकपाल: चरुश्च । तत ऊर्ध्वं षडहैर्मासान् सम्पाद्य सप्तममहरुत्सृज्यते, पञ्च ज्योतींषि चाहानि प्राग्विषुवत् उत्सृज्यन्ते, सर्वाणि चतुर्विंशत्यहानि उत्सृज्यन्ते ।[4]

## ५. वाजपेयम्

**वाजपेयपदार्थादि:**—शतपथस्य मते राजसूयक्रतोरपि महत्तरो महनीयो वा वाजपेयक्रतुर्भवति ।[5] वाजपेये ब्राह्मणक्षत्रिययोरधिकार आसीन्न वैश्यस्य । वैदिकशब्दसम्पत्तौ बलान्नशक्त्यादीनां 'वाज' इति संज्ञा, 'एतेनैव बलवानश्वो वाजी इत्युच्यते । तथा हि शतपथे—'अन्नं

---

1. श० ब्रा० (५।५।१।११-१२)
2. आ० श्रौ० (२१।२२,२३)
3. का० श्रौ० (१३।४।२८), का० श्रौ० (१३।४। )
4. आ० श्रौ० (२१।२४-२५)
5. 'अवरं वै राजसूयं परं वाजपेयम्' (श० ब्रा० ५।१।१०।१२)

वै वाजः'[1] तथा तैत्तिरीयसंहितायामपि—'अन्नं वै वाजपेयः'[2] वाजपेयक्रतौ यजमानेन सोमः पीयते, तत्र सोमस्यैव 'वाज' इति संज्ञा। तस्मात् श्रुतौ सोमपानस्यैव 'वाजपेयः' इति संज्ञा प्रथिता अभवत्। ब्राह्मणादिषु वाजपेये बृहस्पतिसवोऽप्युच्यते ।[3] सप्तसोमसंस्थान्तर्गते पाजपेये तु वैश्योऽपि अधिकारी भवति स्म ।

**सर्वः सप्तदशात्मकः**—उ० क० वाजपेयं शरदि अनुष्ठेयम् ।[4] आ० क० वाजपेयस्य षोडशियज्ञवत् कल्पो भवति ।[5] प्राजापत्योऽयं यज्ञः। सप्तदश वै प्रजापतिः तस्मादत्र सर्वः सप्तदशात्मको भवति—सप्तदशदीक्षा, सप्तदश ग्रहाः सप्तदश पशवः, सप्तदश वांसासि, सप्तदश ऋत्विजः, एवमादीनि सर्वाणि सप्तदशानि भवन्ति ।

**दीक्षादि**—उ० क० वाजपेये सप्तदशदीक्षा विहिताः। आ० क० विकल्पेनात्र त्रयोदश दीक्षा वा भवन्ति। का० क० यजमानः केशवात् (दीर्घकेशात्) नपुंसकात् वा पुरुषात् सुराद्रव्याणि सोमं च क्रीणाति। नेष्टा सुरां पचति सोमे पर्युह्यमाणे ।[6] आ० क० सुरायाः कल्पेन प्रतिप्रस्थाता सुरां संदधाति सौत्रामणीकल्पवत् ।[7] उ० क० यूपं सप्तदशवस्त्रैर्वेष्टयन्ति। आ० क० तु खादिरो वैल्वो वा सप्तदशारत्नियूपो विहितः ।[8] अत्र सौत्रामणीवत् द्वौ खरौ भवतः। उ० क० ऋत्विजो यजमानः पत्नी च सुत्येऽहनि हिरण्यमालिनः प्रचरन्ति ।[9] आ० क०

---

1. श० ब्रा० (५।१।४।३)
2. तै० सं० (१।३)
3. :बृहस्पतिसवो वा एष यद् वाजपेयम्' (श० ब्रा० ५।२।१।१९)
   देवानां पुरोहितो बृहस्पतिर्देवासुराणामाजिमजयत्तेनायं बृहस्पतिसव इत्युच्यते—देवाश्च वाऽसुराश्च उभये प्राजापत्याः पस्पृधिरे ते होचुः आजिमेवास्मिन्नजामहे······तथेति······तस्मिन्नाजिमाजन्त···स बृहस्पतिः उपधावत्······उदजयत् ।' (श० ब्रा० ५।१।१)
4. का० श्रौ० (१४।१।१), आ० श्रौ० (१८।१।१)
5. आ० श्रौ० (१८।१।४)
6. का० श्रौ० (१४।१।१४-१६)
7. आ० श्रौ० (१८।१।९)
8. आ० श्रौ० (१८।१।८)
9. का० श्रौ० (१४।१।२३), आ० श्रौ० (१८।२।११)

प्रतिप्रस्थाता पात्राणि संसाद्य ऐन्द्रमतिग्राह्य पात्रं प्रयुज्य तत्पार्श्वे पञ्चैन्द्राण्यतिग्राह्यपात्राणि प्रयुनक्ति, तथा च षोडशिपात्रं प्रयुज्य तत्समीपे सप्तदश प्राजापत्यानि सोमपात्राणि प्रयुनक्ति, अपरस्मिन् खरे च सैव सप्तदश मृण्मयानि सुराग्रहपात्राणि च प्रयुनक्ति।[1] उ० क० चाध्वर्युः प्रातःसवने पञ्चैन्द्राण्यतिग्राह्यान् षोडशिनं च गृहीत्वा सप्तदश प्राजापत्यान् सोमग्रहान् गृह्णाति, प्रतिप्रस्थाता च खरे सप्तदशभिरुपयामैः सुराग्रहान् गृह्णाति, उ० क० व्यत्यासेन च ग्रहाणां ग्रहणं विहितम्।[2] का० क० अध्वर्युर्मधुग्रहं गृहीत्वा खरमध्ये सादयति।[3] तथा च का० क० अध्वर्युः पूर्वं चतुरो अतिरात्रपशूनुपाकृत्य पृश्निवशां मरुद्भ्य उज्जेषेभ्य उपाकरोति। तथा च सप्तदश श्यामतूपरान् बस्तान् चोपाकरोति।[4] आ० क० त्वध्वर्युः पशुकाले त्रीन् क्रतुपशूनुपाकृत्य मारुतीं वशां सारस्वतीं च मेषीमुपाकरोति, तथा सारस्वतं मेषमुपाकृत्य सप्तदश प्राजापत्यान् श्यामतूपरानेकरूपानुपाकरोति।[5] उ० क० च वपया प्रचर्य अध्वर्युः सारस्वतपशुपुरोडाशं निरुप्य सप्तशरावं नैवारं बार्हस्पत्यचरुं निर्वपति, आ० क० पञ्च, द्वादश वा शरावा विकल्पिताः।[6] तदन्ते दक्षिणाग्नौ होमः। तदनन्तरं का० क० पूर्वं दक्षिणा कथिता ततो अश्वानां स्नपनमुच्यते, आ० क० पूर्वं स्नपनमुक्तं ततो दक्षिणा विधीयते। एवं क्रमव्यत्यासः प्रायेण उभयोः कल्पयोरुपलभ्यते। का० क० यजमानः सप्तदश सप्तदश शतानि गोवस्त्राजावीनां प्रत्येकमृत्विजं ददाति, तथा च एकैकस्मै सप्तदश निष्ककण्ठ्यो वृषल्यो दीयन्ते, आ० क० चैवं दक्षिणाविधानम्, तत्र सप्तदशदुन्दुभीनां दानमपि विहितम्, आपस्तम्बस्त्विमं वाजपेयमाप्तमाह।[7] अस्मादन्यः कुरुवाजपेयः। ततो अश्वानां प्रोक्षणादि कृत्वा तान् सप्त-

---

1. आ० श्रौ० (१८।१।१३-१७)
2. का० श्रौ० (१४।१।२८, १४।२।१-५), आ० श्रौ० (१८।२।१-७)
3. का० श्रौ० (१४।२।६)
4. का० श्रौ० (१४।२।११-१३)
5. आ० श्रौ० (१८।२।१२-१३)
6. का० श्रौ० (१४।२।१६-२६), आ० श्रौ० (१८।२।१७-१९)
7. 'एष आप्तो वाजपेयः' आ० श्रौ० (१८।३।६)

दशरथेषु योजयन्ति। उ० क० चात्वाले रथाक्षाकृतिकाष्ठं भूमौ निखाय तस्मिन् औदुम्बरं रथचक्रं सप्तदशारं प्रतिमुञ्चति, उत्तरवेदिश्रोण्यां सप्तदश दुन्दुभीन् प्रबन्धन्ति। ततो ब्रह्मा रथचक्रमारोहति, तत्र स साम गायति।[1] ततोऽध्वर्युरेकं दुन्दुभिमाहन्ति, तूष्णीमितरान् घ्नन्ति, क्षत्रियस्तु सप्तदशप्रव्याधान् दूरे क्षिपति, यत्र क्षिप्तः शरः पतति स 'प्रव्याध' इत्युच्यते। प्रक्षेपान्ते स क्षत्रिय औदुम्बरीं शाखां भूमौ निखनति, तदाजेर्लक्ष्यं भवति। ततः सर्वे रथे आरोहन्ति दुन्दुभीन् वादयन्ति आजिधावनाय, ते स्पृहावन्तोऽहं पूर्वोऽहमहमिति उक्त्वा रथान् धावयन्ति, अत्र ब्रह्मा औदुम्बरे रथचक्रे नाभिमात्रे स्थाणौ स्थितः साम-गायति, यजमानः सर्वेषामग्रे धावति, औदुम्बरं लक्ष्यं चाप्नोति। निवर्तितेषु सर्वेषु नेष्टा तेभ्यः सौरान् ग्रहान् दत्वा मधुग्रहं चादत्ते। मधुग्रहं ब्रह्मणे प्रयच्छति। तत उ० क० दुन्दिभिविमोचनहोमः, वाजसृद्भ्यो दक्षिणादानं च भवतः। ततो जायापती निश्रयण्या यूपे आरोहतः, आरोहणकाले यजमानः सप्तदश पत्रपुटान् ऊर्ध्वं क्षिपति, आ० क० यजमानो यूपादवरुह्य बस्ताजिने दक्षिणपादं प्रतिष्ठापयति, बस्ताजिने हिरण्यं च निधीयते।[2] ततो अध्वर्युणा नैवारचरुप्रचरणादि भवति, अत्राध्वर्युः औदुम्बरे पात्रे पय आसिच्य सप्तदशान्नान्यावपति। तत एषामन्नानां होमः क्रियते।[3] तत का० क० माहेन्द्रस्तोत्रानन्तरं द्वयोर्द्वयोर्ग्रहयोश्चमसेषून्नयनम्, एवं सप्तदश ग्रहान् नवचमसेषून्नीय तत्रैकं ग्रहं नेष्टुश्चमसे निनयति। यजमान उदवसानीयान्ते यूपवेष्टनानि सप्तदशवस्त्राणि अध्वर्यवे ददाति, एवं हिरण्यसृजं च तस्मै ददाति।[4] आ० क० चाध्वर्युर्माहेन्द्रं स्तोत्रमुपाकृत्य सोमक्रतुवत् सारस्वतप्रभृतीन् पशून् आलभते, सोऽध्वर्युः सारस्वतवपया प्रचर्य इतरेषां वपाभिः प्रचरति, ततो नैवारचरुणा प्रचर्य सर्वे आग्नीध्रशरणे हविःशेषं भक्षयन्ति, षोडशिना च प्रचर्य सोमग्रहाणां सुराग्रहाणां च ग्रहणम्। अत्र ऋत्विजः सोमग्रहान् भक्षयन्ति, राजपुत्रो ध्रुवगोपो नैवारगोपो वा सुराग्रहान् भक्षयति। अत्र कल्पे च पूर्वकल्पवद् अनु-

---

1. का० श्रौ० (१४।३।१२), आ० श्रौ० (१८।४।६-११)
2. आ० श्रौ० (१८।६।१२-२१)
3. का० श्रौ० (१४।५।१७-२७), आ० श्रौ० (१८।६।४-५)
4. का० श्रौ० (१४।५।२६-३६)

याजादि कृत्वा वाजपेययज्ञः संतिष्ठते ।[1]

## ६. सौत्रामणी

**अधिकारः**—श्रौतग्रन्थेषु त्रिविधा सौत्रामणी विधीयते—सौत्रामणी (सामान्या) कौकिली सौत्रामणी, चरकसौत्रामणी । वाजसनेयिनां सम्प्रदाये पञ्चपशुका कौकिली सौत्रामणी उक्ता, सा च नित्या, आपस्तम्बकल्पे त्रिपशुका सौत्रामणी नित्या । अयं पशुयाग उ० क० ऋद्धिकामस्य ब्राह्मणार्थं विधीयते । स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः, अङ्गभूतायां[2] क्षत्रियवैश्यावधिकारिणौ । 'सोमेनेष्ट्वा हि सौत्रामण्या यजेत' (श० ब्रा० १२।८।२।२) इति श्रुतिविधानम् । शतपथे चोल्लिखितं 'सुत्रामा' इति इन्द्रस्य नाम, तमापदि सरस्वती अश्विनौ चात्रायन्त, तेनास्य कर्मणो यागस्य 'सौत्रामणीति संज्ञा ।[3] शतपथब्राह्मणस्य प्रामाण्याच्चेदं ज्ञायते यदपरुद्धस्य (पराजितस्य) राज्ञोऽपि सौत्रामण्यामधिकारः ।[4] ब्राह्मणोऽपि अग्निं चिक्यानः सोमयाजी सोमातिपूतः सोमवाम्येव तत्राधिक्रियते । सोमातिपूतः सोमवामी च ब्राह्मण एव न हि क्षत्रियवैश्ययोरेतद्विशेषणं भवति ।[5] तथा च पशुयोग्यः सन् यो नाम पशून्न विन्दते सोऽलभ्यपशुरपशुः वैश्योऽपि सौत्रा-

---

1. आ० श्रौ० (१८।६।६-१७, १८।७।१-१८), 'वाजपेययाजी श्वेतच्छत्री भूत्वा प्रचरतीति विज्ञायते ।' (आ० श्रौ०)
2. 'चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता ।'
3. तावाश्विनौ च सरस्वती च इन्द्रियं वीर्यं नमुचेराहृत्य तदस्मिन् पुनरधुस्तं पाप्मनोऽत्रायन्त 'सुत्रातं बतैनं पाप्मनोऽत्रास्महीति' तद्वाव सौत्रामण्यभवत् ।' (श० ब्रा० १२।७।१।१४)
4. दुष्टरीतुर्ह पौंसायनो दशपुरुषं राज्यादपरुद्ध आस । देवोत्तरसमूहपाटवं चाक्रं स्थपतिं सृञ्जया अपरुरुधुः । स होवाच दुष्टरीतुं पौंसायनं सौत्रामण्या त्वया याजयानि यदिदं सृञ्जयेषु राष्ट्रं तत्त्वयि धास्यामीति तथैवैनमयाजयत् । तदु ह बह्लिकः प्रातिपीयः शुश्राव कौरव्यो राजा यो ह ।' (श० ब्रा० १२।९ ३)
5. 'मुखव्यतिरिक्तेभ्यो नासिकाकर्णगुदादिभ्य इन्द्रियेभ्यो यस्य सोमः स्रवति स सोमातिपूत इत्युच्यते । मुखेन यः सोमं वमति स सोमावामी' इत्युच्यते । (का० श्रौ० भाष्ये, पृ० ९४५)

मण्यामधिकारी आसीत्। पुरा पशुपालनं विशामेव (वैश्यानां) प्रधानं कर्म अभवत्।

**देवताः, पशवः, ऋत्विगादयश्च**—तत्राङ्गभूतायां सौत्रामण्यां त्रयः पशवः—अजो मेष ऋषभश्च देवताश्च क्रमेणाश्विनौ सरस्वती इन्द्रश्च। इमामेव च त्रिपशुकां सौत्रामणीं नित्यामभिदधात्यापस्तम्बः।[1] अन्या च कौकिलसौत्रामणी पञ्चपशुका तत्र प्रथमः पशुरैन्द्रः, अन्तिमश्च वायोधसः पूर्वोक्तास्त्रयश्च पशवः। कात्यायनकल्पे इयं पञ्चपशुका नित्या विहिता। दिनचतुष्टयानुष्ठेयोऽयं क्रतुः। अध्वर्युः, ब्रह्मा, होता, अग्नीत्, प्रतिप्रस्थाता, मैत्रावरुणश्चेति षड्ऋत्विजः। अत्र यागे त्रयः पयोग्रहाः, त्रयः सुराग्रहाश्च भवन्ति। ग्रहाणां देवताः—अश्विनौ, सरस्वती, इन्द्र सुत्रामा चेति। अत्र होमद्रव्यं सुराऽपि भवति। अत्र यागे च द्वे वेदी भवतः—उत्तरवेदिर्दक्षिणवेदिश्च।

का० क० प्रथमदिवसे द्वादश्यां प्रातरग्निहोत्रं हुत्वा अदिति-देवताकश्चरुर्निरुप्यते, अन्ते चादित्यचरुरपि भवति, अस्य चरोर्धेनुर्व-त्सा गौर्वा दक्षिणा।[2] आ० क० निर्वपणकाले यजमानादयो अश्विभ्यां सरस्वत्यै इन्द्राय सुत्राम्णे प्रभूतान् व्रीहीन् निर्वपन्ति।[3]

**सुरानिर्माणविधिः**—आ० क० यजमानो द्वादश्यां सीसेन क्लीबा-च्छष्पाणि क्रीत्वा क्षोमे वासस्युपनह्य उत्तरवेद्यां तानि निदधाति[4], का० क० तानि चर्मणि निधीयन्ते। एकेषां मते शष्पाणि व्रीहयो विरुढा उच्यन्ते, अपरेषां मते तोक्मायवा शष्पपदवाच्या भवन्ति। नग्नहुचूर्णं[5], तोक्मैस्सह संसृज्य मासरसंज्ञकं द्रव्यं निर्मीयते। संसृष्टे द्रव्ये चोदनं

1. आ० श्रौ० (१९ प्रश्ने)
2. का० श्रौ० (१९।५-१७)
3. आ० श्रौ० (१९।१।५)
4. आ० श्रौ० (१९।१।१)
5. नग्नहुचूर्णनिर्माणविधिः—सत्वक्त्रिफला चैव शुण्ठी चैव पुनर्नवा। चतुर्जातकसंयुक्ता पिप्पली गजपिप्पली। वंशोऽवका बृहच्छत्रा चित्रकं चेन्द्रवारुणी। अश्वगन्धां समुत्पाट्य मूलान्येतानि विनिर्दिशेत्॥ धान्यकं च यवानीं च जीरकं कृष्णजीरकम्। द्वे हरिद्रे वचा विरुढा यवाः॥ (का० श्रौ० भाष्ये, पृ० ९४७)

(उष्णं) संस्राव्य ततस्त्रिरात्रं कुम्भ्यां निधेयम्। तदनन्तरं तस्यां रात्रौ एकस्याः गोः पयसाऽपाकृतेनाश्विने परिषिञ्चति तां सुराम्। सुरायां शष्पचूर्णानि चावपति, प्रातः सारस्वतमुद्दिश्य द्वयोः गवोः पयसा सुरां परिषिञ्चति, तोक्मचूर्णानि चावपति, तृतीयेऽहनि तिसृणां गवां दुग्धेन इन्द्रमुद्दिश्य तां सुरां परिषिञ्चति। अत्र लाजपूर्णान्यावपति। एवं सुरा-संधानं भवति।[1]

प्रतिप्रस्थाता द्वे वेदी वरुणप्रघासवत् करोति, तयोर्वेद्योः पश्चाद्-भागे द्वौ खरौ क्रियेते, द्वितीये खरे सुरा पूयते। का० क० श्वभ्रं खात्वा खरपार्श्वे चर्मावधाय परिस्रुतमासिच्य कारोतरमवदधाति, कारोतराद्वा[2] चर्मणि पूतां सुरामादत्ते अध्वर्युः। उ० क० चाध्वर्युः पालाशे महति सताख्ये पात्रे अश्ववालपवित्रेण सुरां पुनाति, उत्तरस्यां वेद्यामजाविलोमपवित्रेण वैतसे पात्रे पयः पुनाति।

**ग्रहग्रहणम्**—तत उ० क० अध्वर्युस्त्रीन् पयोग्रहान् गृह्णाति, आ० क० 'उपयामगृहीत' इति चाध्वर्युग्रहं गृह्णाति, 'सारस्वत' इति प्रति-प्रस्थाता। आग्नीध्रो वा ग्रहं गृह्णाति। तत्र कल्पे सुराग्रहस्थाने 'पयोग्रहा' वा 'स्युः' तथा चाह विद्याधरशर्मा कात्यायनश्रौतसूत्रस्य भूमिकायाम्—'अत्र सौत्रामण्यां पयोग्रहैः साकं सुराग्रहाणां विहितत्वेऽपि स्मृतिपुराणादौ सुराग्रहणमात्रस्य कलौ सर्वथा निषिद्धत्वात् सौत्रामण्या-मपि सुराग्रहणस्य च संग्रहः,—तेषां निषेधकरणात् आसेतुहिमालयं शिष्टैरननुष्ठानाच्च तदनुष्ठानं निन्द्यमिति। 'सौत्रामण्यनुष्ठानं तु पयोग्रहा वा स्युः।' (आ० श्रौ० १९।२।२३), इत्यापस्तम्बेन 'सुराग्रह-विकल्पतया पयोग्रहाणां विधानात्, तदेव कर्त्तुं शक्यत इति।[3]

का० क० पयोग्रहेषु चाश्विने ग्रहे अध्वर्युः गोधूमकुवलचूर्णानि, सारस्वतग्रहे इन्द्रबदरचूर्णानि, ऐन्द्रे ग्रहे नैयग्रोधयवकर्कन्धुचूर्णानि चाव-पति। वृकव्याघ्रसिंहलोमभिश्च यथासंख्यं सुराग्रहान् 'श्रीणाति'[4] ततो ग्रहमुपतिष्ठते युगपत्।[5] का० क० च स्थालीभिश्च ग्रहान् व्यत्या-

1. का० श्रौ० (१९।२२-२७), आ० श्रौ० (१९।१।७)
2. कारोतरं सुरापावनं वंशमयं प्रसिद्धं पात्रं शौण्डिकानाम्।
3. का० श्रौ० भूमिकायाम् (पृ० ४१)
4. का० श्रौ० (१९।२।१६-२७)
5. का० श्रौ० (१९।२।२६)

सेनापि गृह्णन्ति, पयोग्रहं गृहीत्वा ततः सुराग्रहान् पुनरप्येवमेव व्यतिषिक्तान् गृह्णन्तीति श्रुतेः ।[1] आ० क० च बकुलसक्तुभिः सिंहलोमभिश्चाश्विनं ग्रहम्, बदरसक्तुभिः शार्दूललोभिश्च सारस्वतम्, कर्कन्धुसक्तुभिर्वृकलोमभिश्चैन्द्रं ग्रहं श्रीणाति । लोमाभावे सिंहादीन् यजमानादयो मनसा ध्यायन्ति ।[2] उ० क० एको यूपः पशुबन्धनार्थं क्रियते । ग्रहग्रहणानन्तरं पयोग्रहान् सुराग्रहान् चाध्वर्युर्जुहोति, ततो यजमानः सुरायाः पातारं ब्राह्मणं यजमानः परिक्रीणाति, तच्छेषां सुरां स ब्राह्मणः पिबति ।[3] का० क० परिक्रीतो वैश्यराजन्ययोरन्यन्तरः पिबति ।[4] का० क० अध्वर्यु प्रतिप्रस्थात्रग्नीध्रा आश्विनं ग्रहम्, होतृब्रह्ममैत्रावरुणा सारस्वतं ग्रहं भक्षयन्ति, ऐन्द्रं ग्रहं यजमानो भक्षयति । तदनन्तरमृत्विग्यजमानाः पयोग्रहभक्षवत् सौरान् ग्रहान् भक्षयन्ति वितानस्य दक्षिणे पार्श्वे स्थिताः ।[5]

का० क० अध्वर्युस्त्रीन् ग्रहान् पितृभ्यो जुहोति । उ० क० अध्वर्युः शततृष्णां स्थालीं (कुम्भीं) प्रतिष्ठाप्य बालपवित्रं हिरण्यमन्तर्धाय नवर्चं सूक्तं यजमानं वाचयति ।[6] तत्र यजमानः कुम्भ्याः स्रवन्तीं सुरामुपतिष्ठते, तदा यजमानो दक्षिणाग्नौ पयो जुहोति ।[7] शेषं यजमानः पिबति । एवं चापस्तम्बकल्पे विधानम् ।[8] ततः का० क० पशुपुरोडाशमैन्द्रं सावित्रं वारुणं दशकपालमध्वर्युर्निर्वपति । आ० क० बार्हस्पत्यं पशुपुरोडाशं निरुप्यैन्द्रमेकादशकपालं निर्वपति । का० क० यागान्ते यजमानः त्रयस्त्रिशतं दक्षिणा ददाति, तच्चानुशिशुबडवधेनु भवति । आ० क० त्वत्र निष्कमृषभं सात्वरीं बडवां शलमानौ वा दीयन्ते । का० क० दक्षिणान्तरं एकादशिनि पशुगणे यजमानः त्रय-

1. श० ब्रा० (१२।७।३।१५)
2. आ० श्रौ० (१९।२।१०-११)
3. आ० श्रौ० (१९।३।१-४)
4. का० श्रौ० (१९।३।१६)
5. का० श्रौ० (१९।३।१४-१९)
6. का० श्रौ० (१९।३।२०), आ० श्रौ (१९।३।११)
7. का० श्रौ० (१९।३।२१-२६)
8. आ० श्रौ० (१९।३।५-११)

स्त्रिशं वसाग्रहं गृह्णाति, सामगानान्तरं शस्त्रगानं ततो होमादि, ततो मज्जनं विहितम् ।[1]

**कौकिलसौत्रामणी**—श्रा० क० ततः कौकिली सौत्रामणी विहिता (१६।५–१०), इयं च पञ्चपशुका पूर्वं कथिता। अन्या च चरकसौत्रामणी राजसूयाङ्गभूता भवति।



1. का० श्रौ० (१६।४,५)

# सप्तमोऽध्यायः

## १. एकाहाः

एतानि त्रिविधाः क्रतवो यजुर्वेदस्य ब्राह्मणेषु न पठितास्तथापि ताण्ड्यादिषु छन्दोगब्राह्मणेषु पठितास्तत एवोद्धृत्य कात्यायनापस्तम्बाभ्यां स्वसूत्रयोर्विनिवेशिताः । तत्र एकदिनसाध्याः सोमयागा 'एकाहा' इत्युच्यन्ते । निम्नलिखितायां तालिकायां सर्वेषामेकाहानां ताण्ड्यब्राह्मणवाक्यैस्सह उभयोराचार्ययोः सूत्राणां तुलना द्रष्टव्या—

| **कात्यायनसूत्रम्** | **आपस्तम्बसूत्रम्** | **ताण्ड्यप्रवचनम्** |
|---|---|---|
| (२२ अध्याये) | (२२ अध्याये) | (१६ अध्याये) |
| **एकाहाः षट्** | | ज्योतिः |
| ज्योतिः | ज्योतिर्गौरायुरिति | गौः |
| गो आयुषी उक्थ्यौ | त्रिकद्रुकाः | आयुः |
| अभिजिद्विश्वजितौ | विश्वजिदग्निष्टोमः | अभिजित् |
| सर्वजित्समहाव्रतः | श्रैष्ठ्यकामस्य | विश्वजित् |
| | | सर्वजित् |
| **साहस्राः चत्वारः** | इन्द्रस्याभिजित् | |
| ज्योतिः सर्वज्योति- | सर्वजिताग्निष्टोमेन | ज्योति, सर्वज्योतिः |
| र्विश्वज्योतिस्त्रिरात्र- | चत्वारः सहस्राः | विश्वज्योतिः |
| संमितः | ज्योतिरग्निष्टोमः | त्रिरात्रसम्मितः |
| | गौरुक्थ्यः | |
| | सर्वज्योतिरग्निष्टोमः | |
| | त्रिरात्रसंमितोऽग्निष्टोमः | |
| **साद्यस्क्राः पञ्च** | **चत्वारः साद्यस्क्राः** | |
| स्वर्गकामपशुकाम- | प्रथमः | स्वर्गकामादीनां |
| भ्रातृव्यवतां प्रथमः | तस्मिन् कामाः स्पर्धायां | प्रथमः |
| दीर्घव्याधिप्रतिष्ठा- | भ्रातृव्यतितीर्षा स्वर्गः | |
| कामान्नाद्यकामानां | पशवो वा | |

| **कात्यायनसूत्रम्**<br>(२२ अध्याये) | **आपस्तम्बसूत्रम्**<br>(२२ अध्याये) | **ताण्ड्यप्रवचनम्**<br>(१६ अध्याये) |
|---|---|---|
| द्वितीयः<br>हीनस्यानुक्रीः<br><br>विश्वजिच्छिल्पः<br>श्येनोऽभिचरतः<br>एकत्रिके (षष्ठः) | द्वितीयस्य···अन्नाद्यकामं<br>प्रजाकामं पशुकामं याज-<br>येरन् हीनानुजावरोऽनु-<br>क्रिया विश्वजिच्छिल्प-<br>श्चतुर्थः श्येनेनाभिचरन्य-<br>जेत प्रजापतेरेकत्रिकोऽग्नि-<br>ष्टोमः (षष्ठः) | आमयाविप्रभृती-<br>नां द्वितीयः<br>आङ्गिरसामनुक्री-<br>स्तृतीय<br>विश्वजिच्छिल्प-<br>श्चतुर्थः |
| **व्रात्ययज्ञाश्चत्वारः** | | |
| व्रात्यगणस्य ये सम्पाद-<br>येयुस्ते प्रथमेन यजेरन् | व्रात्यानां प्रवासे<br>व्रात्यस्तोमाः | व्रात्यागणशिक्षका-<br>णां प्रथमः<br>निन्दितानां द्वितीयः |
| द्वितीयेन निन्दितानृशंसाः<br>तृतीयेन कनिष्ठाः<br>ज्येष्ठाश्चतुर्थेन | षट्षोडशीनिन्दितानाम्<br>द्विषोडशी कनिष्ठानाम्<br>ऊर्ध्वस्तोयो जेष्ठानाम्<br>चतुःषोडशी सर्वेषाम् | कनिष्ठानां तृतीयः<br>जेष्ठानां चतुर्थः |
| **अग्निष्टुतः पञ्च** | त्रिवृताग्निष्टुताग्नि-<br>ष्टोमेन | |
| अग्निष्टुद्ब्रह्मवर्चस-<br>वीर्यान्नाद्यप्रतिष्ठाका-<br>मानां यश्चापूत इव<br>मन्येत यज्ञविभ्रष्टस्य च | पूतो यजेत<br>अक्षहतः स्त्रीहतः<br>कामहतश्चरणहतो<br>वा यजेत।<br>प्रजाकामं पशुकामं<br>वा याजयेत्।<br>त्रिवृतान्नाद्यकामः।<br>सप्तदशेन···यज्ञविभ्रष्टो<br>यजेत। | पापनिर्हरणार्थं प्रथमः<br>ब्रह्मवर्चसकामस्य<br>द्वितीयः<br>पशुकामस्य तृतीयः<br>यज्ञविभ्रष्टस्य चतुर्थः<br>अनाद्यकामस्य पंचमः |
| **त्रिवृत्स्तोमास्त्रयः**<br>अनिरुक्तः प्रातः–<br>सवनः प्रथमः | तेषां प्रथमेनानिरुक्तेन<br>ग्रामकामो यजेत। | प्रजापतेरपूर्वः |

| **कात्यायनसूत्रम्**<br>(२२ अध्याये) | **आपस्तम्बसूत्रम्**<br>(२२ अध्याये) | **ताण्ड्यप्रवचनम्**<br>(१६ अध्याये) |
|---|---|---|
| तेजोब्रह्मवर्चसपुरोधा-<br>कामस्य बृहस्पतिसवः<br>मरणकामस्य सर्वस्वारः<br>कृतान्नदक्षिणः | निरुक्तं प्रातःसवमित्येके<br>बृहस्पतिसवो द्वितीयः<br>तृतीयस्येषुविष्टुतिं<br>कृत्वाभिचरन्यजेत<br>चतुर्थः सर्वस्वारः शुनकर्णस्तोमः,<br>मरणकामो यजेत । | बृहस्पतिसवो<br>द्वितीयः<br>सर्वस्वारस्तृतीयः |
| **चातुर्मास्यानि चत्वारि** | वैश्वेदेवस्य लोके<br>त्रिवृदग्निष्टोमः | |
| वैश्वदेवस्थाने प्रथमम्<br>द्वितीये द्विदिवाख्यो द्व्यहः<br>तृतीये त्र्यहोऽतिरात्र<br>उत्तमः<br>ज्योतिष्टोमः शुनासीरी-<br>यस्थाने | वरुप्रघासानां लोके<br>अग्निष्टोम उक्थ्यः ।<br>साकमेधानां ··<br>उक्थ्योऽतिरात्रः<br>शुनासीरीयस्य···<br>ज्योतिरग्निष्टोमः | वैश्वदेवस्थानिकः<br>अग्निष्टोमः<br>वरुणप्राघासिक-<br>स्थानिकः<br>द्विद्विधः,<br>साकमेधस्थानिक-<br>त्रिरात्रः शुनासी-<br>रीयस्थानिकः<br>अग्निष्टोमः |
| **सप्तदशसंज्ञकाः पञ्च** | उपहव्येनाग्निष्टोमेना-<br>निरुक्तेन ग्रामकामो | |
| उपहव्योऽनिरुक्तो<br>ग्रामकामस्य, | यजेत । | उपहव्यो अनिरुक्तः |
| स्वर्गकामस्यर्तुपेयः | ऋतपेयेनाग्निष्टोमेन<br>बृहत्सामास्वर्गकामः | ऋतपेयः |
| द्विनामोत्तरो बहुहिरण्यो<br>दूणाशस्य | बहुहिरण्येनाग्निष्टो-<br>मेनानडुहो | अन्यः ऋतपेयः |
| वैश्यपशुकामयोर्वैश्य-<br>स्तोमः | लोकमाप्नोति ज्योतिष्म-<br>तो लोकाञ्जयति | वैश्यस्तोमः |
| सोमातिपूतस्य तीव्र-<br>सुदुक्थ्यः | वैश्यः पशुकामः<br>तीव्रसुतोक्थ्येन··· | तीव्रसुत् |

| कात्यायनसूत्रम् (२२ अध्याये) | आपस्तम्बसूत्रम् (२२ अध्याये) | ताण्ड्यप्रवचनम् (१६ अध्याये) |
|---|---|---|
| | आमयाविनमन्नाद्यकामं प्रजाकामं पशुकामम्··· | |
| **द्वन्द्वसोमाः** | मरुत्स्तोमेन राजपुरोहितौ | |
| द्वन्द्वानां प्रथमो राड् | सायुज्यम् । अथैष राट् । | राट् |
| अन्नाद्यकामस्य विराट् | विराजान्नाद्यकामः | विराट् |
| प्रजापतिकामस्यौपशदः | स्वराजा (औपशदेन) | |
| | प्रतिष्ठकामो | औपशदः |
| पुनस्तोम उक्थ्यः | योगरगीरिवमन्येत स | |
| | पुनस्तोमेन | पुनस्तोमः |
| पशुकामयज्ञौ चतुष्टोमौ | राशिमरायू चतुष्टोमो | |
| | अन्नाद्यकामस्य | चतुष्टोमः |
| उद्भिद्बलभिदौ चाहरतः | | अन्यश्चतुष्टोमः |
| संयुक्तौ | | उद्भित् |
| अपचितिकामस्यापचितिः | | बलभित् |
| पूर्वपक्ष्युत्तरो ज्योतिः | | अपचितिः प्रथमः |
| ऋषभगोसवौ । | | अपचितिर्द्वितीयः |
| | | पक्षी । |
| मरुत्स्तेमो गणयज्ञो | उदभिद्बलभिद्भ्यां पशु- | ज्योतिः |
| भ्रातॄणां सखीनां वा | कामः अपचितिकामो- | ऋषभः । गोसवः । |
| | पचितिभ्याम् | |
| कुलायः कुलदक्षिणो | पक्षिभ्यां साग्निचित्याभ्यां | मरुत्स्तोमः |
| द्वियज्ञो भ्रात्रोः सख्योर्वा | यः कामयेत पक्षी ज्योति- | कुलायः |
| इन्द्रस्तोमो राजयज्ञः | ष्मतः स्वर्गाल्लोकाननुसंचरे- | इन्द्रस्तोमः |
| | यमिति | |
| पुरोधाकामस्येन्द्राग्न्यो- | ऋषभेणाग्निष्टोमेन | इन्द्राग्निस्तोमः |
| स्तोमः | राजानं संग्रामे | विघनप्रथमः |
| विघनौ पशुकामस्य | संयत्ते याजयेत् | विघनः द्वितीयः |
| | गोसवेन·· स्वाराज्यकामः | |
| | मरुतां स्तोमेनानन्तां श्रियं | |
| | जयति । | |

| कात्यायनसूत्रम् (२२ अध्याये) | आपस्तम्बसूत्रम् (२२ अध्याये) | ताण्ड्यप्रवचनम् (१६ अध्याये) |
|---|---|---|
| | अग्नेः कुलायावन्नाद्यकामस्य इन्द्राग्नयोः कुलयौ स्वर्गकामस्य । इन्द्रस्तुतेनेन्द्रस्तोमेनोक्थ्येन बृहत्सामा राजन्यो वीर्यकामः । इन्द्राग्नियोः स्तोमेन राजपुरोहितावुभावेकर्द्धि-याजयेत् । विधनेन वि पाप्मानं भ्रातृव्यं हते । वज्रेण षोडशिनाभिचरन् । संदेशेनाभिचरन् । (तयोः श्येनेन कल्पो व्याख्यातः) | |

अत्र एकाहेषु क्रतुषु एकैव यजमानो भवति, ऋत्विजां तु संख्या षोडश, तत्र ज्योतिरग्निष्टोमसंस्थाको भवति, गोआयुषी उक्थ्यसंस्थाके, अभिजिद्विश्वजित्सर्वजितः अग्निष्टोमसंस्थाकाः, साहस्राश्चत्वार उक्थ्याग्निष्टोमसंस्थाकौ, षट् साद्यक्राः अग्निष्टोमसंस्थाकाः, चत्वारो व्रात्यस्तोमानां प्रथमस्योक्थ्यसंस्था, शेषाणां त्रयाणामग्निष्टोमसंस्था भवति, अग्निष्टुतो अग्निष्टोमसंस्थाकाः, एवं च बृहस्पतिसवादीनामग्निष्टोमसंस्था, एवमन्येषामपि अग्निष्टोमाद्याः संस्था भवन्ति । तत्राग्निष्टोमसंस्थाकत्वे सवनीयः पशुराग्नेय एकः, उक्थ्यसंस्थाके द्वौ पशू (इन्द्राग्न्योः), षोडशिसंस्थाकत्वे आग्नेयेन्द्राग्नास्त्रयः पशवः, अतिरात्रसंस्थाके पूर्वोक्तैस्त्रिभिः पशुभिस्सह सारस्वती मेषी चालभ्यते ।

**विश्वजित्**—अत्र केषांचित् प्रधानानामेकाहानां क्रतूनां सारेणात्र विवेचनं क्रियते । उ० क० यजमानो विश्वजिदाख्ये सर्वस्वदक्षिणे यज्ञे ज्येष्ठपुत्रस्य भागं वर्जयित्वा सर्वस्वमृत्विग्भ्यो ददाति ।[1] उ० क०

1. कठोपनिषदि चाख्यायिका—'उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिचेता नाम पुत्र आस ।' (१।१।१) अत्र वाजश्रवाः स्वपुत्रमपि मृत्यवे ददाति (द्रष्टव्यं उ० क० १।१।४)

यजमानो अवभृथान्ते वत्सस्य रक्तवर्णे सकर्णपुच्छे अवच्छिन्ने चर्मणी परिदधाति।[1] स वैणवीं कल्माषीं वाभ्रिमादाय द्वादशरात्रस्य त्रिषु त्रिषु दिनेषु अरण्ये, जनबहुले देशे, वैश्यजने, निषादेषु च वसति।[2]

**सर्वजित्**—अयं क्रतुः समहाव्रतोऽनुष्ठीयते। अत्र यजमानो महाव्रतेऽहनि प्रत्येकमृत्विजं शताश्वरथं ददाति, तथा च सर्वेभ्यः सहस्रं सहस्रं गवां दक्षिणा।[3]

**साद्यस्क्राः**—साद्यस्क्रेषु क्रतुषु सर्वं सद्यो भवति दीक्षा प्रभृतिक्रयादि। तस्मादेषां साद्यस्क्र इति संज्ञा।

**श्येनः**—उ० क० यजमानो अभिचरन् श्येनेन यजति, अत्र उ० क० यूपश्चषालवर्जितः, तिल्वलवृक्षनिर्मितश्च भवति, कुशस्थाने शरान् प्रयुनक्ति, शववाहने काष्ठेऽधिषवणफलके भवतः, आज्यं भस्मानिष्पादितं नवनीतम्, हविर्धानशकटस्थाने रथः प्रयुज्यते, वाणवन्तश्च परिधयः निवीता लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति, रुद्राय च पशुरालभ्यते।[4]

**चत्वारो व्रात्यस्तोमाः**—एते गणयज्ञाः सन्ति। धर्मशास्त्रादिषु त्रिपुरुषपतितसावित्रीका 'व्रात्या' इत्युच्यन्ते। अथर्ववेदे व्रात्यकाण्डे व्रात्यमहिमोपलभ्यते, परन्तु तत्र व्रात्यस्यान्यो ह्यर्थो भवेत्, डा० सम्पूर्णानन्देन तु व्रात्यकाण्डस्य दार्शनिकभाष्यं अन्यथाप्रकारेण कृतम्। अत्र प्रसङ्गे तु विद्वांसो व्रात्यपदेन पतितसावित्रीकान् म्लेच्छादीन् अभिप्रयन्ति। अथर्ववेदे, इतिहासपुराणेषु च गान्धारबाह्लिककाम्बोजकलिङ्गमागधादयो व्रात्याः कथिताः।[5] ते व्रात्या यदि उपनयन-

---

1. का० श्रौ० (२२।१।२०), आ० श्रौ० (२२।१।१०-१५)
2. का० श्रौ० (२२।१।२१), आ० श्रौ० (१७।२६।१५)
3. का० श्रौ० (२२।२।१-५)
4. का० श्रौ० (२२।३।२-१५), आ० श्रौ० (२२।४।१४-२३)
5. आरट्टा नाम ते देशा नष्टधर्मान् तान् व्रजेत्। व्रात्यानां दासमीयानां वाहीकानामयज्वनाम्॥ गान्धारकलिङ्गमगधानूपारस्करान् सौवीरान् वा।' (आ० श्रौ० २२।६।१८), (महाभारते कर्ण० ४४।३३)
'गन्धारिभ्यो मूजवद्भ्योऽङ्गेभ्यो मगधेभ्यः। प्रेष्यं जनमिव शेवधिं तक्मानं परिदद्मसि (अथर्व० ५।१४।४)

संस्कारमभिलषन्ति, तर्हि व्रात्यस्तोमेनेष्ट्वा संस्कृता भूत्वा आर्या भवन्ति। तथा च ताण्ड्यब्राह्मण उक्तम्—'भस्म एतद्दहति तस्मिन्नेव मृजानायन्ति।'[1] कात्यायनेन चतुर्विधा व्रात्या उल्लिखिताः—हीनाः, निन्दिताः, कनिष्ठाः, ज्येष्ठाश्चेति। एषां कृते चत्वारो व्रात्यस्तोमा उ० क० विहिताः। कात्यायनमते स्थविरेषु व्रात्येषु यो नृशंसतमः स्याद्द्रव्यवत्तमो वानूचानतमो भवेत् तं गार्हपत्ये दीक्षेरन्।[2] तत्र का० क० वक्ष्यमाणानि व्रात्यधनानि—तिर्यगुष्णीषम्, प्रतोदः, ज्याह्लोडः (ज्यारहितो धनुर्दण्डम्), कुटिलगामी फलकास्तीर्णो रथः, रथे अश्वतरो अश्वतरी वा प्रयुज्यते, कृष्णवासः, राजतो निष्कः आविके अजिने, एतानि सर्वाणि यज्ञेषु प्रयुज्यन्ते। तथा च तेषां व्रात्यानां कृष्णरज्जुमयानि वस्त्राणि, कर्णमये चर्ममये चोपानहौ।[3] व्रात्यस्तोमे गृहपतिर्व्रात्यः षट्षष्टिं गा दक्षिणायां द्विगुणा वा ददाति। आपस्तम्बेनापि प्रायेण चैवं विधीयते।[4]

**का० क० ऋत्विगपोहनीयास्त्रय एकाहाः**—का० क०[5] एते त्रय एकाहाः प्रोक्ताः, आपस्तम्बकल्पे एते न विधीयन्ते।

**द्वन्द्वस्तोमाः**—एते उ० क० विहिताः। तत्र द्वयोर्मध्ये एकमनुष्ठाय द्वितीयोऽवश्यमनुष्ठेयस्तेन तयोर्द्वन्द्वमिति संज्ञा। उ० क० एषां द्वन्द्वस्तोमानां सामान्येन विधानमस्ति। तच्च सूत्रेष्वभिहितम्, विस्तरभिया नाधिकं कथ्यते।

**मरुत्स्तोमः**—अयं गणयज्ञो भ्रातृभिः सखिभिर्वा कर्त्तव्यः। अत्र वैश्यस्तोमवत् पञ्चवर्षा वत्सतरी दक्षिणायां दीयते। उभाभ्यामाचार्याभ्यां वज्रसन्दशौ (एकाहौ) षडविंशब्राह्मणोक्तौ निरूपितौ ताण्ड्ये चैषां वर्णनं नास्ति, एतावुभौ चाभिचरणयज्ञौ आस्ताम्।

1. ता० ब्रा० (१७।१), इमं श्रुतिमार्गमनुसरन् स्वामिदयानन्देन मुस्लिमादीनां शुद्धिः कृता।। इतिहासे मध्यकाले चैवं प्रकारेण अग्निकुलक्षत्रियाणामुत्पत्तिरभवदिति श्रूयते।
2. का० श्रौ० (२२।४।७)
3. का० श्रौ० (२२।४)
4. आ० श्रौ० (२२।५।५-१३)
5. का० श्रौ० (२२।६।२१)

# २. अहीनाः

उ० क० द्विरात्रप्रभृतयो द्वादशरात्रपर्यन्ताः सोमयागा अहीना उक्ताः। तत्र द्विसुत्याका द्व्यहास्त्रयः, त्रिसुत्याकाः पञ्च, चतुःसुत्याकाश्चत्वारः, पञ्चसुत्याकास्त्रयः, षट्सुत्याकास्त्रयः, सप्तसुत्याकाः सप्त, एकोऽष्टसुत्याकः, द्वौ नवसुत्याकौ, चत्वारो दशसुत्याकाः, एकादशसुत्याक एकः पौण्डरीक इति सर्वे मिलित्वा त्रयस्त्रिंशत्संख्याका अहीना भवन्ति। इतः पूर्वमुभयोः कल्पयोः त्रयोदशातिरात्रसंस्थाकाणामहीनानामयं क्रम उपलभ्यते—

| का० श्रौ०[1] | आ० श्रौ०[2] |
|---|---|
| नवसप्तदशः | ज्योतिः |
| विषुवान् | सर्वस्तोमः |
| गौः | अप्तोर्यामः |
| आयुः | नवसप्तदशः |
| ज्योतिष्टोमः | विषुवान् |
| विश्वजित् | गोष्टोमः |
| त्रिवृत् | आयुः |
| पञ्चदशः | अभिजित् |
| सप्तदशः | विश्वजित् |
| एकविंशः | त्रिवृत् |
| अप्तोर्यामः | पञ्चदशः |
| अभिजित् | सप्तदशः |
| सर्वस्तोमः | एकविंशः |

इतो अग्रे द्विरात्रप्रभृतिनामहीनानां तुलनात्मकं विवरणमुपस्थाप्यते—

| क्र० सं० | सुत्यादिनानि | संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|---|---|
| १. | द्वे | त्रयः | अङ्गिरसां द्विराजः चैत्ररथो | अङ्गिरसचैत्ररथकपिवनाः। | व्युष्टिद्विरात्रः आङ्गिरस द्विरात्रः, |

1. का० श्रौ० (२३।१)
2. आ० श्रौ० (२३।१३)

| क्र० सं० | सुत्यादिनानि | संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|---|---|
| | | | द्विरात्रः<br>कापिवनो<br>द्विरात्रः<br>(२०।११-१३) | (२३।२।३) | कापिवनद्वि-<br>रात्रः चैत्ररथ-<br>द्विरात्रश्च<br>(२२।१४।१६-२) |
| २. | त्रयः | पञ्च | गर्गत्रिरात्रः,<br>बैदत्रिरात्रः,<br>छन्दोमपव-<br>मानः,<br>अन्तर्वसुः,<br>पराकः।<br>(२०।१४-२१,३)<br>(२१। १-८) | त्र्यहाः पञ्च<br>गर्गबैदच्छ-<br>न्दोयान्तवर्स-<br>पराकाः<br>(२२।२।८) | गर्गत्रिरात्रः<br>(२२।१५-१७,<br>१८।१-७)<br>अन्ये त्रयः<br>बैदछन्दोम-<br>पवामानान्तर्वसु<br>पराकाः।<br>(१८।४, ८-१०) |
| ३. | चत्वारि | चत्वारः | चतुर्वीरः<br>जामदग्न्यः,<br>वसिष्ठः,<br>विश्वामित्र-<br>स्य सञ्जयः,<br>(२१।६-१२) | चतुरहाश्चतुरो<br>त्रिचतुर्वीर-<br>जामदग्न्य-<br>वसिष्ठ-सं-<br>सर्पविश्वा-<br>मित्राः।<br>(२२।२।११) | अत्रेः प्रथमश्च-<br>तुर्वीरः<br>(२२।१८।१२)<br>जामदग्न्येन<br>पुष्टिकामः<br>(२२।१८।१६)<br>जामदग्न्येन<br>वसिष्ठस्य<br>संसर्पः<br>(२२।२०।१)<br>विश्वामित्र-<br>स्य संजय<br>(२२।२०।२) |
| ४ | पञ्च | त्रयः | अभ्यासंग्यः<br>पञ्चशार-<br>दीयः अन्त-<br>महाव्रतः | देवानां प्रथमः<br>द्वितीयः पंच-<br>शारदीयः<br>व्रतवानुत्तमः | संवत्सरा-<br>भ्यासंग्यपंच-<br>शारदीय<br>संज्ञकाः। |

| क्र० सं० | सुत्यादिनानि | संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|---|---|
| | | | (२१।१३-१५) | (२३।४।२, ३, २७) | (२२।२०।५-९) |
| ५. | षट् | त्रयः | ऋतूनां षड्रात्रः, अभ्यासंग्यः त्रिकद्रुकः, (२२।१-३) | ऋतूनां प्रथमः द्वितीयो बृहद्रथन्तरपृष्ठ तृतीये त्रिभ्यस्त्रिकद्रुकः, (२३।५।२-४) | साध्यानां प्रथमः ऋतूनां द्वितीयेन प्रजाकामः, तृतीयेनोपरिष्टात् त्रिकद्रुकेण यं कामम् अभ्यासङ्ग्यः पञ्चाहः । (२२।११।१-६) |
| ६. | सप्त | सप्त | सप्तर्षीणां सप्तरात्रः प्रजापतेः सप्तसात्रः छन्दोमपवमानः, जामदग्न्यः, प्रजापतेरवधामः जनकसप्तरात्रः, पृष्ठ्यस्तोमः। (२२।४-१०) | चत्वारो व्रतोत्तमाः प्रथमाः। इन्द्रस्य पञ्चमः। जनकसप्तरात्रः उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः। (२३।५-१५) | अथ सप्तरात्राः। कौसरुबिन्देन पशुकामः। सप्तर्षीणां द्वितीयेन स्वर्गकामः। प्राजापत्येन प्रजाकामः। छन्दोमपवमानेन पशुकामः। पृष्ठ्यावलम्बनेनान्नाद्यकामः। सत्रसंमितेनान्नाद्यकामः। |

| क्र० सं० | सुत्यादिनानि | संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|---|---|
| | | | | | ऐन्द्रेणौजस्कामः जनकसप्तरात्रेण प्रजातिं भूमानं गच्छति···। (२२।२२।११-१६-२३।१-५) |
| ७. | अष्टौ | एकः | अष्टरात्रः (२२।११) | अष्टाहे षडहान्महाव्रतम् (२३।५।१५) | अष्टरात्रेण ब्रह्मवर्चसकामः। (२२।२३।७) |
| ८. | नव | द्वौ | देवानां नवरात्रः अन्यो नवरात्रः (२२।१२-१३) | नवरात्रे त्रिकद्रुकाः द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः (२३।५।१६-१७) | त्रयो नवरात्राः। प्रथमेनायुष्कामः द्वितीयेन ब्रह्मवर्चसकामः। शललीपिशङ्गेनान्नाद्यकामः। (२२।२३।८-१३) |
| ९. | दश | चत्वारः | त्रिककुप्, कौसरुबिन्दः देवपुरम्, अन्यः कश्चित् | प्रथमस्त्रिककुप् कौसुरुबिन्दः पूर्दशरात्रोऽभिचर्यमाणस्य छन्दोमदशाहः | त्रिककुत्प्रथमः कौसुरुबिन्दः देवपुराभिचर्यमाणः। कौसुरुबिन्देन बहोर्भूयान्भवति। अभ्यासङ्ग्यः···। |
| १०. | एकादशाहः | एकः | एकादशरात्रः पौण्डरीकः | पौण्डरीकः सर्वर्द्धिकामस्य | पौण्डरीक एकादशरात्रः। (२२।२३।१७, २४।१-८) |

# आपस्तम्बकल्पे

**सवाख्या एकादश एकाहाः**—इतं परं तैत्तिरीय[1]ब्राह्मणोक्तास्सवाख्या एकादश एकाहा आपस्तम्बनेनात्रानुक्रान्ताः, ते कात्यायनेन नोक्ताः। ते चैते सवाः सन्ति—

(१) बृहस्पतिसवः (ब्राह्मणसवो वैश्यसवो वा)[2]
(२) सोमसवः
(३) पृथिसवः
(४) गोसवः
(५) ओदनसवः
(६) पञ्चशारदीयः
(७) अग्निष्टुत्
(८) इन्द्रस्तुत्
(९) अप्तोर्यामः
(१०) राजाभिषेकः (सवः)
(११) विघनः

अत्र बृहस्पतिसवेन वैश्यः पुष्टिकामः, ब्राह्मणो वा ब्रह्मवर्चसकामो यजति। सोमसवे यत्किंचित् राजसूयिकमृते सोमं तत्सर्वं भवति, पशुकामः पृथिसवेन यजति, अनेन समानो गोसवः। ओदनसवे यजमानो ब्राह्मे मुहूर्त्ते (उपव्युषि) ओदनं श्रपयित्वा मन्थान् (सक्तून्) कल्पयति।[3]

अभिषिच्यमाने राजनि द्वयोः पुण्याहयोः पौरजानपदाः समवेता भूत्वा पूर्वदिने राजार्थं स्थण्डिलं कल्पयन्ति, तस्मिन् स्थण्डिले रात्रौ राजा वसति। श्वोभूते होमानन्तरं राजा औदुम्बर्यामासन्द्यामुपविशति, केशान् च वापयते, ततो राजपरिचारका राजानमाज्यमिश्रेण पयसा अभ्यञ्जयन्ति ततो यथाविधानमास्तीर्णे शार्दूलचर्मणि राजोपविशति,

---

1. तै० ब्रा० (२।७ प्रपाठके), आ० श्रौ० (२२।२५-२८)

2. 'वैश्यः पुष्टिकामः', 'ब्राह्मणो ब्रह्मवर्चसकामः।'
(आ० श्रौ० २२।२५।२,६)

3. 'आज्यमन्थं ब्राह्मणः पयोमन्थं राजन्यो दधिमन्थं वैश्य उदमन्थं शूद्रः।'
(आ० श्रौ० २२।२६।१)

तमभिषिच्य वेदिपार्श्वस्थे रथे चारोहयन्ति, राजा पुरोहितमभिवाद्य सारथिं चाभिमन्त्रयते, तत आरोहणमन्त्राः पठचन्ते ।[1]

## ३. सत्राणि

उभयोः कल्पयोः सत्रं ब्राह्मणकर्तृकः भवति, तत्रापि समानकल्पा आहिताग्नयोऽनुष्ठितसोमसंस्थाः सप्तदशप्रभृति चतुर्विंशतिपरमा अधिकारिणो भवन्ति। सत्रे ते सर्वे यजमाना भवन्ति, सत्रजन्यफलं च सर्वेषामेव, अतो नास्त्यत्र दक्षिणाविधानम्। सर्वेषां याजमानत्वेऽपि सप्तदशपक्षे एको गृहपतिः क्रियते, अन्ये च ऋत्विजो ब्रह्मत्वादिकं कार्यं कुर्वन्ति, गृहपतिस्तु याजमानं करोति। चतुर्विंशतिपक्षे षोडशभिरार्त्विज्यं कार्यं शेषैरष्टभिर्गृहपतित्वं च क्रियते। दीक्षादिकं कार्यं च सर्वेषामेव समानं भवति ।

द्वादशरात्राद्ध्र्वं एकैकाहवृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि उच्यन्ते, तत्र सर्वेषु सत्रेषु द्वादशदीक्षा द्वादशोपसदश्च भवन्ति, तेषु सौत्यादि अहानि तु रात्रसंख्यया तुल्यानि भवन्ति यथा दतुर्दशरात्रे चतुर्दश सुत्याः एवं प्रकारेण चतुर्दशरात्रसत्रमष्टात्रिंशद्दिनेषु समाप्यते, चत्वारिंशद्रात्रसत्रं चतुष्षष्टिदिनेषु साध्यते ।

रात्रिसत्रेषु यथोपदिष्टमहानि भवन्ति, यथा द्वादशाहिके सत्रे पृष्ठचः षडहः (षडहानि), त्रयश्छन्दोमाः (त्रीणि दिनानि), अविऽवाक्यो दशमहः। प्राक् प्रायणीयाहश्चान्ते उदयनीयाहर्भवति। यत्र षड्भिरहोभिर्विना सत्रं न पूर्यते, तत्राभिप्लवस्यादितः पञ्चहानि गृह्यन्ते, एवं त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः गृह्यन्ते, चतुरहार्थे व्रतमहः गृह्यते, द्वयहार्थे गो आयुषी गृह्येते, उ० क० सर्वेषु सत्रेषु समानो अह्नां क्रमोऽस्ति ।

कात्यायनश्रौतसूत्रापस्तम्बश्रौतसूत्रयोर्यत्ताण्डचब्राह्मणवाक्यैस्सह साम्यं वर्तते तदत्र प्रदर्श्यते (सर्वेषां सत्राणां च सूचनी द्रष्टव्या)—

| संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|
| द्वौ त्रयोदशरात्राः | आप्तद्वादशाहः (२३।१) | द्वे त्रयोदशरात्रे, | द्वौ त्रयोदशरात्रौ, यं कामं कामयन्ते |

1. आ० श्रौ० (२२।२८)

| संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|
| | प्रतिष्ठाफलकः (२३।२) | प्रकृतिविहितं द्वितीयम् | तमभ्यश्नुवते (२३।१।७-८) |
| त्रयः चतुर्दशरात्रा | सर्वर्धिसाधनम् अन्यः चतुर्दशरात्रः प्रतिष्ठा साधनम् (२३।३–५) | द्वौ पृष्ठ्यौ, प्रतिलोमः परः मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः प्रकृतिविहितं तृतीयम् | त्रयचतुर्दशरात्राः द्वितीयं ये तल्पं उदक विवाहे वा मीमांसेरन् तृतीयमृद्धिकामा उपेयुः (२३।१।१७–१७) |
| चत्वारः पञ्चदशरात्राः | देवत्वप्राप्तिफलकः ब्रह्मचर्यफलकः सत्राहीनोभयफलकः प्रजाफलकः (२३।६–८) | पञ्चदशरात्राणि चत्वारि (२४।१।१४–२५) प्रकृतिविहितानि प्राग्विंशतिरात्रात् (२४।२।१) | चत्वारः पञ्चदशरात्राः। देवत्वं गच्छति। द्वितीयं ब्रह्मवर्चसकामाः। तृतीयेनोभौ कामौ··। चतुर्थेन प्रैव जायते प्रजया पशुभिः (२३।२।१-२,५,७।९) |
| षोडशरात्रः एकः | ऐन्द्रः षोडशरात्रः (२३।१०) | | ऐन्द्रः षोडशात्रमोजस्कामा उपेयुः (२३।२।११) |
| सप्तदशरा० | प्रजापते सप्तदशरात्रः | | सप्तदशरात्रमन्नाद्यकामा उपेयुः |
| अष्टादश० | देवानामष्टादशरात्रः | | अष्टादशरात्रं पशुकामा उपेयुः। |
| एकोनविं० | वायोरेकोनविंशतिरात्रः | | एकान्नविंशतिरात्रेण प्रप्रजया पशुभिर्जीयन्ते। |
| विंशति० | पुरुषफलसाधनो | | विंशतिरात्रेण ब्रह्मवर्चसि- |

| संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|
| | | | नोऽन्नादा भवन्ति (२३।२।१३,१५,१७,१८) |
| द्वौ एक विंशति० | पशुफलसाधनो ब्रह्मवर्चसफलकः (२३।११–१८) | एकविंशतिरात्रयोरतिरात्रावषोडशिकौ ॥ (२४।२।३) | द्वावेकविंशतिरात्रौ। यं कामं कामयन्ते। द्वितीयं ब्रह्मवर्चसकामा उपेयुः। (२३।३।१,२,४) |
| द्वाविं० शातरात्रः | द्वाविंशतिरात्रः (२३।१७) | द्विविंशतिरात्रमन्नाद्यकामानाम् (२४।२।११) | द्वाविंशतिरात्रेण संवत्सरादेभ्यो अन्नाद्यमवरुन्धे (२३।३।१०) |
| त्रयोविंशतिरात्रः | त्रयोविंशतिरात्रः (२३।१८) | त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् (२४।२।१२) | त्रयोविंशतिरात्रं पशुकामा उपेयुः (२३।३।१२) |
| द्वौ चतुर्विं० | प्रजापशुसाधनम् स्वर्गसाधनम् (२३।१९–२०) | पूर्वं चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा द्वितीयं संसदः (२४।२।१३,१४) | द्वौ चतुर्विंशतिरात्रौ, यं कामम् (२३।३।१४–१५) संसदा चतुर्विंशतिरात्रेण स्वर्गे लोके सीदन्ति। (२३।४।१) |
| पञ्चविंशतिरात्रः | प्रजापतेः पञ्चविंशतिरात्रः (२३।२१) | पञ्चविंशतिरात्रमन्नाद्यकामानाम् | पञ्चविंशतिरात्रमन्नाद्यकामा उपेयुः (२३।४।३) |
| षड्० प्रभृतिः | षड्विंशतिरात्रः सप्तविंशतिरात्रः अष्टाविंशतिरात्रः द्वात्रिंशद्रात्रः | षड्विंशतिरात्रं प्रतिष्ठाकामानाम्, सप्तविंशतिरात्रमृद्धिकामानामष्टाविंशतिरात्रं प्रजाका- | षड्विंशतिरात्रं स्वर्गकामा उपेयुः सप्तविंशतिमन्नाद्यकामाः, अष्टाविंशतिरात्रं पशुकामा ,, |

| संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|
| | | मानां पशुकामानां वा। द्वात्रिंशद्रात्रं च (२४।२।२२) | एकान्नत्रिंशद्रात्रेणा-परिमितां श्रियं जयन्ति। (२३।४।५, ७,९,११,१३) एकत्रिंशद्रात्रमन्ना-द्यकामा उपेयुः। द्वात्रिंशद्रात्रं प्रति-ष्ठाकामाः उपेयुः। (२३।५।१,३) |
| त्रयस्त्रिंश-द्रात्राणि त्रीणि | प्रतिष्ठाफलकः ऋद्धिफलकः सर्वसाधनः (२४।१–३) | त्रयस्त्रिंशद्रात्राणि त्रीणि व्रतवद् द्वि-तीयं त्र्यभिप्लवम् तृतीये त्रयस्त्रयः (२४।२।२४-२६) | त्रयस्त्रयस्त्रिंशद्रात्र्यः यं कामम्··(प्रथमः,) द्वितीयं ब्रह्मवर्चसका-मा उपेयुः, तृतीयमृ-द्धिकामा उपेयुः। (२३।५,५,६,८,१०) |
| चतुस्त्रि० | चतुस्त्रिंशद्रात्रः (२४।४) | चतुस्त्रिंशद्रात्रमन्ना-द्यकामानाम् (२४।२।३२) | चतुस्त्रिंशद्रात्रमिन्द्रि-यकामा उपेयुः (२३।५।१२) |
| पञ्च० | | | पञ्चत्रिंशद्रात्रं पशु-कामाः (२३।६।१) |
| षट्त्रि० | षट्त्रिंशद्रात्रः | षट्त्रिंशद्रात्रं प्रति-ष्ठाकामानाम् | षट्त्रिंशद्रात्रं स्वर्ग-कामाः |
| सप्त० | सप्तत्रिंशद्रात्रः | सप्तत्रिंशद्रात्रमृद्धि-कामानाम् | सप्तत्रिंशद्रात्रमन्ना-द्यनामाः |
| अष्टा० | अष्टात्रिंशद्रात्रः | अष्टात्रिंशद्रात्रं प्रजा-कामानाम् | अष्टात्रिंशद्रात्रं पशु-कामाः |
| एकोन० | (२५।६–८) | पशुकामानां वा (२४।२।२३-२४।२।३५) | एकान्नचत्वारिंशद्रा-त्रेणानन्तां श्रियं जयन्ति। |

| संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
|---|---|---|---|
| चत्वारिं० | चत्वारिंशद्रात्र: (२४।१०) | चत्वारिंशद्रात्रं च। (२४।२।३६) | चत्वारिंशद्रात्रेण परमायां विराजि प्रतितिष्ठति (२३।६।११) |
| एकोन्नपञ्चाशद्रात्रा: सप्त | पापव्यावृत्तिफलक: श्रीफलक: आञ्जनाभ्याञ्जनाख्य: संवत्सरसम्मित: सवितु: ककुभ: प्रतिष्ठाफलक: प्रजाविभवफलक: (२४।११-१७) | प्रथमो विधृति: यमातिरात्रम् आंजनाभ्यञ्जनीये संवत्सरसम्मिते सवितु: ककुभ:। परे षडभिप्लवे (२४।२।३८-२४।३।२२) | सप्तैकस्मान्नपञ्चाशद्रात्रा विधृतय: प्रथमेन वि पाप्मना भ्रातृव्येण वर्तते यमातिरात्रो द्वितीय: आञ्जनाभ्यञ्जनस्तृतीय:। संवत्सरसंमितश्चतुर्थ: सवितु: ककुभ: पञ्चम: षष्ठं प्रतिष्ठाकामा उपेयु: सप्तमेनात्यन्या: प्रजा भवन्त्योजिष्ठा भवन्ति, (२३।७।१,४,७,११,२३।८।१,४,६) |
| एकषष्टिरात्र: | एकषष्टिरात्र: (२४।१८) | एकषष्टिरात्रे (२४।३।१७) | एकषष्टिरात्रमृद्धिकामा उपेयु: (२३।८।८) |
| शत० | शतरात्र: (२४।१९) | प्रकृतिविहितं शतरात्रम् | देवानां शतरात्रेण सर्वमायुर्यन्ति वसीयांसो भवन्ति। (२३।८।११) |
| अन्यानि-सत्राणि | अङ्गिरसामयनम् इतिवातवतोरयनम् कुण्डपापिनामयनम् सर्पाणां सत्रम् तापश्चितामयनम् अग्ने: | अङ्गिरसामयनमादित्यानामयनवत् इतिवातवतोरयनम् कुण्डपायिनामयनम् सर्पसत्रम् तापश्चितं दीक्षा | आदित्यानामयनेन प्रजातिं भूमानं गच्छति। एतेनाङ्गिरसामयनं व्याख्यातम्। इतिवातवतोरयनेन यं कामं कुण्डपायिना- |

| संख्या | ता० ब्रा० | का० श्रौ० | आ० श्रौ० |
| --- | --- | --- | --- |
| | सहस्रम् प्रजापतेर्द्वादशसंवत्सरम्। शाक्त्यानामयनं षट्त्रिंशत्संवत्सरम्। शतसंवत्सरं विश्वसृजामयनम् मित्रावरुणयोरयनम् इन्द्राग्न्योरयनम् अर्यम्णोरयनम्। | सहस्रसाव्यमग्नेः द्वादशसंवत्सरं प्रजापतेः, षट्त्रिंशत्संवत्सरं शाक्त्यानां शतसंवत्सरं साध्यानाम् सहस्रसंवत्सरं विश्वसृजाम् | मयने मासं दीक्षिता·· तापश्चितामयनं स्वर्गकामाः प्रजापतेर्द्वादशसंवत्सरेण (एतदेव नैमिषीयाणाम्) शाक्त्यानां षट्त्रिंशत्संवत्सरं साध्यानां शतसंवत्सरेण अग्नेः सहस्राख्येन···। |
| | दार्षद्वतम् तुरायणम् (२५।२–१४) | त्रीणि सारस्वतसत्राणि द्वादशाहवद्दीक्षोपसदः द्वितीये तृतीये दार्षद्वतम् तुरायणम् (२४।५।३१–२४।७।१) | त्रीणि सारस्वतसत्राणि मित्रावरुणयोः प्रथममिन्द्राग्न्योर्द्वितीयमर्यम्णस्तृतीयम्। (२३।१२।४) तुरायणेन सर्वामृद्धिमाप्नोति। सर्पाणां सत्रेणापजरां घ्नन्ति। त्रिंशवत्सरेण गवामयनमादित्यानामङ्गिरसाम् प्रजापतेः सहस्रसंवत्सरेण··· (२३।१४।१,८,१०,१२) |

**महासत्राणि**—चत्वारि महासत्राणि दीर्घसत्राणि वोच्यन्ते। द्वादशसंवत्सरात्मकं प्रजापतिसत्रम्, शाक्त्यानामयनसंज्ञकं, साध्यानामयनसंज्ञकं विश्वसृजामयनसंज्ञकं च चतुर्थं महासत्रम्।

**प्रजापतिसत्रम्**—उ० क० प्रजापतेः सत्रं द्वादशासंवत्सरात्मकमुच्यते। आपस्तम्बस्त्वेतदेव सत्रं स्वर्गकामानां नैमिषीयाणमृषीणां

सत्रमाह ।[1]

**शाक्त्यानामयनम्**—अस्मिन् षट्त्रिंशत्संवत्सरात्मके सत्रे तरसमया: पुरोडाशा: भवन्ति, गृहपतिश्च मृगयां गत्वा विविधान् मृगान् हन्ति, इदं सत्रं सर्वप्रथमं सौदासस्य राज्यकाले वासिष्ठै: शाक्त्यैरनुष्ठितम्, अस्मिन् सत्रे आगस्त्यो ब्राह्मणो गृहपतिर्भवति ।

**साध्यानामयनम्**—आपस्तम्बेनोक्तम्—'साध्यानां शतसंवत्सरेण सगवा: सत्पुरुषा: स्वर्गलोकं यन्ति । (२३।१२।१)

**विश्वसृजामयनम्**—इदं तु श्रुतिषु पुराणादिषु च दक्षादीनां दशानां विश्वसृजां प्रजापतीनां सहस्रसंवत्सरात्मकं सत्रं प्रसिद्धमभवत् इति विज्ञायते । तथा चाहापस्तम्ब:—'एतेन वै विश्वसृज इदं विश्वमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृज: । विश्वमेनानानुप्रजायन्ते । तत्र श्लोक:—

विश्वसृज: प्रथमा: सत्रमासत सहस्रसमं प्रसुतेन यन्त: ।
तत ह जज्ञे भुवनस्य गोपा हिरण्यय: शकुनिर्ब्रह्म नामेति ।।'

(२३।१४।१५-१७)

**सारस्वतसत्राणि**—उ० क० त्रीणि सारस्वत सत्राण्युक्तानि चतुर्थं च दार्षद्वतसत्रमभिहितम् । उ० क० सरस्वत्या उपमज्जने (विनशने) सत्रिणो दीक्षन्ते, अत्र सत्रे सदोहहविर्धानाग्नीध्राणि च चक्रीवन्ति भवन्ति, उलूखलबुध्नोपमो यूप: स्थिरासन एव प्रकृत्यते न निखन्यते । सत्रिण: शम्यापाते गार्हपत्यायतनं कुर्वन्ति । इष्ट्यनन्तरमेव देशान्तरं गत्वा शम्याप्रासे दीक्षिता: वसन्ति । सरस्वत्या दक्षिणे कूले एतत्सर्वं व्यत्यासेन कुर्वन्ति, एवं मासपर्यन्तमेकस्मिन् कूले यजन्ति । तत: सत्रिण: आक्रोशंत: प्राञ्चो यान्ति, ततो गत्वा सरस्वतीदृषद्वत्यो: सङ्गम: प्राप्यते । तत्र सङ्गमे अपोनप्त्रियं चरुं निरूप्याग्रे यन्ति, तत्र दशसु गोषु शते वा एकमृषभमुत्सृज्य शतं सहस्रं वा गा: कुर्वन्ति । सत्रावसाने सर्वे सत्रिण: प्लाक्षं प्रस्रवणं प्राप्नुवन्ति, तत्राग्नये काम्येष्टिं निरुप्य प्रासर्पकेभ्यो बडवां मानुषीं वा प्रयच्छन्ति ।

---

1. आ० श्रौ० (२३।११।१०) । तुलनीयम्—वायुपु० (१।१३-१५)
महा० (१।४, ५)

दार्षवतं सत्रं दृषद्वतीतीरे चानुष्ठीयते, अस्मिन् सत्रे सत्रिणः संवत्सरपर्यन्तं गा रक्षन्ति, द्वितीये संवत्सरे नैतन्धवे मरुस्थले अग्निमिधन्ते, तृतीये संवत्सरे परीणन्नामस्थले (कुरुक्षेत्रे) अग्निमाधाय दृषद्वत्या दक्षिणे कूले अग्नये अष्टाकपालं पुरोडाशं निर्वपन्ति, तदनन्तरं यमुनां प्राप्य त्रिप्लक्षनामके स्थाने, यत्र दृषद्वती तिरोभवति, तत्रावभृथं यन्ति ।[1]



श्रौ० (२४।६।३९), आ० श्रौ० (२३।१३।१४)

# अष्टमोऽध्यायः

# अग्निचयनम्

**परिभाषा महत्त्वं च** - महामहोपाध्यायमधुसूदनमहोदयानां मते- 'गार्हपत्यनैऋतआहवनीयाऽष्टौ धिष्णयाश्चैतेषामेकादशानामग्नीनां सोमसम्बन्धिनां संस्कारविशेषोऽग्निचयनं नामातियज्ञः ।'[1] विद्याधरशर्ममहोदयाश्चाहुः 'चयनं नाम इष्टकाभिः सम्पादितः स्थलविशेषः, केवलस्य सोमयागस्य या उत्तरा वेदिः, तां वर्धयित्वा तत्रैव इष्टकाभिश्चयनं सम्पाद्य तदुपरि आहवनीयं विक्षिप्य तत्रैव होमः क्रियते । अग्न्याधारकत्वादस्य स्थण्डिलस्य अग्निचयनमिति संज्ञा ।'[2] शतपथब्राह्मणस्य चतुर्दशकाण्डेषु षट्काण्डानि अग्निकाण्डान्युच्यन्ते, तानि च आचार्यशाण्डिल्यस्य कृतानि इत्यैतिह्यम्, तेषु षट्सु काण्डेषु ब्रह्माण्डस्य सृष्टिप्रक्रियामनुकुर्वन् अग्निचयाख्ये कर्मणि चिक्यानः सर्वाणि कर्माणि करोति, अस्मिन् विषये डा० सत्यप्रकाशेन कीथस्य मतं शतपथस्य भूमिकायामुदाहृतम् ।[3] पञ्चपशवः[4], अग्निः, इष्टकाश्चास्य यज्ञस्य

---

1. यज्ञसरस्वती (पृ० २७१)
2. का० श्रौ० भूमिकायाम् (पृ० ६१)
3. 'In the words of Keith, in the elaborate and in detail tedious rite of the piling of the fire altar lies the most philosophic contents of Samhita, for in it finds expression, the chief doctrine of the sacrificial ritual, the sacrifice is a cosmic power of the highest potency. The pot led to the composition of Sulba Sutras and their geometry. The Agnichayan leads to the concept of Prajapati." (Int. to S. B p. 414)
   'एतं प्रजापतिं सन्तमग्निरित्याचक्षते' (श० ब्रा० ६।१।२)
4. 'स एतान् पञ्चपशूनपश्यत्—पुरुषमश्वं गामविमजम् ।' (श० ब्रा० ६।२।१।२)

मुख्याः पदार्थाः । अग्निचयनस्य सर्वयज्ञत्वं चाहुः वेदविदः ।[1] अनेनास्य महत्त्वं प्रख्याप्यते च ।

**अनुष्ठानकालादिकथनम्**–वाजसनेयिनां सम्प्रदाये चिचीषुः फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं कृत्वा पञ्चपशूनालभते—वैश्वकर्मणां पुरुषं वारुणमश्वमैन्द्रमृषभं त्वाष्ट्रमविमाग्नेयमजमिति एता चालभते । अथवा विकल्पेन एतान् पञ्च पशून् ब्राह्मणाय दक्षिणायां दद्यात् ।[2] आपस्तम्बेनात्रेदं वाजसनेयकं मतमुदाहृतम्—'पञ्च पशवो भवन्तीति वाजसनेयकम् ।'[3] आपस्तम्बस्य स्वमते यजमानः प्राजापत्यमश्वं तूपरं तूपाकृत्य, अश्वभृषभं वृष्णि बस्तं चालभते । एते सर्वे मुष्कराः (साण्डाः) भवन्ति ।

**सामिधेन्याद्याः**—उ० क० अत्र होता एकविंशतिं सामिधेनीरन्वाह, आपस्तम्बमते स एकादश प्राकृतीस्तथा दशाग्निकीः सामिधेनीरन्वाह, विकल्पे चतुर्विंशतिं सामिधेनीरन्वाह ।[4] उभयोर्मते चात्र 'ऊर्ध्वा अस्य समिध' इति द्वादश प्रयाजानामाप्रियो भवन्ति ।[5]

**पशुकायशोधनादि**—का० क० अजेन विना चतुर्णां पुरुषादीनां पशूनां कायशोधनं भवति, अजेन च यागे प्रचरणमुक्तम्, एक आचार्याः सर्वैः पशुभिः प्रचारमिच्छन्ति इति कात्यायनसम्मतिः ।[6] उ० क० आलम्भनीयः पुरुषो वैश्यो राजन्यो वा भवति ।[7] आ० क० चिक्यानः सप्त, एकविंशतिं वा माषानादाय वैश्यस्य राजन्यस्य वेणुहतस्याशनिहतस्य पुरुषस्य शिरः कृन्तति, काष्ठेषु तृणमन्तर्धाय पशूनां शिरां-

---

1. 'सर्वे हैते यज्ञा योऽग्रमग्निश्चित् —'सोम्योऽध्वरः प्रथमाचितिः, राजसूयो द्वितीया वाजपेयस्तृतीया अश्वमेधश्चतुर्थ्यग्निसवः पञ्चमी ।' (श० ब्रा० १०।१।५।३)
2. का० श्रौ० (१६।१।४-८), अनेन च प्रतीयते पुराकल्पे (ब्राह्मणादिषु) दक्षिणामेव आलम्भनमाहुर्वेदविदः ।
3. आ० श्रौ० (१६।४।८)
4. आ० श्रौ० (१६।७।३-४)
5. का० श्रौ० (१६।१।१२), आ० श्रौ० (१६।८।१०)
6. का० श्रौ० (१६।१।१८-२३)
7. का० श्रौ० (१६।१।१७), आ० श्रौ० (१६।६।२)

स्यादत्ते।[1] का० क० यजमानः संग्रामहतानां शिरांसि हिरण्मयानि मृण्मयानि वा शिरांसि अनालम्भ्य एव कुतश्चित् आनयति।

**प्राजापत्यः पशुः**—का० क० विकल्पे पञ्चपशूनां स्थाने प्राजापत्यः श्यामतूपरो वा आलभ्यते[2], आ० क० चैवं विधीयते।[3] विकल्पे का० क० वायवे नियुत्वते श्वेतलप्सुदीसंज्ञकः पशुरालभ्यते। शतपथे चैवं (६।२।२।६) श्रूयते। आपस्तम्बोऽपि सर्वेषां पशूनां स्थाने वायवे नियुत्वते श्वेतमजं तूपरं विदधाति।[4] तत उ० क० द्वादशकपालः पशुपुरोडाशो विहितः। स च पुरोडाशो वैश्वानरायाग्नये निरुप्यते। कात्यायनमते ततो यजमानो मैथुनादिकं वर्जयेत्।[5] अत्रापस्तम्बेनोदाहृतं वाजसनेयकं मतं द्रष्टव्यम्—'तेनेष्ट्वा संवत्सरं न मांसमश्नीयान्न स्त्रियमुपेयन्नोपरि शयीत। अपि वा मांसमश्नीयादुपरि शयीत स्त्रियं त्वेव नोपेयादिति वाजसनेयकम्।'[6]

**उखासम्भरणम्**—का० क० यजमानः फाल्गुनकृष्णाष्टम्यामुखां सम्भरति।[7] आ० क० त्रयो विकल्पा उक्ताः 'अग्निं चेष्यमाणो अमावस्यायां पौर्णमास्यामेकाष्टकायां वोखां संभरति।[8] का० क० उखानिर्माणार्थं मृत्पिण्डम् अश्वगर्दभाजैरानयति, एतदर्थं यजमानः प्रादेशमात्रीं वैणवीं सुषिरामभ्रिमादत्ते, विकल्पे हिरण्मयीं वाभ्रिमादत्ते। ततो यजमानो अष्टगृहीतेनाज्येन संततं जुहोति।[9] आपस्तम्बस्तु वैणवीवीस्थाने खादिरीं पालाशीमौदुम्बरीमर्कमयीं काष्मर्यमयीं वैकङ्कतीं शमीमयीमन्यस्य यज्ञियवृक्षस्य वाभ्रिं विदधाति।[10] उ० क० अभ्रचा

1. आ० श्रौ० (१६।६।२)
2. का० श्रौ० (१।६।१।३३)
3. आ० श्रौ० (१६।८।२)
4. आ० श्रौ० (१६।८।३)
5. का० श्रौ० (१६।१।२७-२८)
6. आ० श्रौ० (१६।८।९-१०)
7. का० श्रौ० (१६।२।१)
8. आ० श्रौ० (१६।१।१)
9. का० श्रौ० (१६।२।२-७)
10. आ० श्रौ० (१६।२।१)

खात्वा वल्मीकवपया सह कृष्णाजिने पुष्करपर्णं निधाय, तस्मिन् हिरण्यं निधाय हुत्वा च मृत्पिण्डं पुष्करपर्णे संभरति। मृत्पिण्डम् अश्वस्य पृष्ठे धारयित्वा चानयति, आहवनीयस्य पार्श्वे सिकतोपकीर्णे परिवृते प्राग्द्वारे च पिण्डं निदधाति।[1]

**उखानिर्माणप्रकारः**—का० क० यजमानः पर्णकषायपक्वमुदकं पिण्डे चासिञ्चति, ततोऽजलोमभिः शर्कराभिरयासैश्चाश्मचूर्णैश्च पिण्डं संसृजति।[2] आ० क० अर्मकपालैः पिष्टैर्वेणवङ्गारैर्व्रीहितुषैः पलाशकषायेण शर्कराभिः पिष्टाभिः कृष्णाजिनलोमभिरजलोमभिश्च पिण्डं मिश्रयति।[3] यच्चान्यद्दार्ढ्यार्थं विहितं तेनापि पिण्डं मिश्रयति। का० क० पूर्वमिष्टकाकरणमुक्तं तत उखाकरणमुच्यते, आ० क० उखानिर्माणानन्तरमिष्टकाकरणमुच्यते। का० क० यजमान उखां करोति, महिषी (ज्येष्ठपत्नी) आषाढ़ाख्यामिष्टकां करोति।[4] अत्र आ० क० य उखां करोति सैव अषाढ़ां करोति।[5] अत्र का० क० उखा तिर्यगूर्ध्वा प्रादेशमात्री च भवति।[6] आ० क० प्रादेशमात्री, ऊर्ध्वप्रमाणेनारत्निमात्री तिर्यक् प्रमाणेन व्याममात्री अपरिमिता वा भवति सा चतुरश्रा परिमण्डला वाऽपरिमण्डला वा भवेत्।[7] का० क० मन्त्रपूर्वकं यजमान उखाया मृदा प्रथनसंलेपनश्लक्ष्णीकरणसमीकरणानि च करोति। तस्या उखाया ऊर्ध्वप्रमाणास्योत्तरे तृतीये भागे मृन्मयीं वृत्याकारां रास्नां (वर्ति) कृत्वा सर्वासु दिक्षु चतस्रो वर्तिकाः करोति।[8] आ० क० यज-

1. का० श्रौ० (१६।३।१४), आ० श्रौ० (१६।३।१४)
2. का० श्रौ० (१६।३।१५-१९)
3. आ० श्रौ० (१६।४।१)
4. का० श्रौ० (१६।३।२१-२३)
5. आ० श्रौ० (१६।५।४)
6. का० श्रौ० (१६।३।२४)
7. आ० श्रौ० (१६।४।२)—आपस्तम्बेनात्र वाजसनेयकं मतमुदाहृतम्—'पञ्च प्रादेशामिषुमात्रीं वा यदि पञ्च पशवो भवन्तीति वाजसनेयकम्' (आ० श्रौ० १६।४।८)–तुलनीयम्—'पञ्च प्रादेशामिषुमात्रीं वा तिर्यक् पञ्चपशौ० (का० श्रौ० १६।३।२५)
8. का० श्रौ० (१६।३।२४-३१)

मानश्चतुरश्राम् अष्टाश्राम् नवाश्रां वोखां करोति ।[1] आ० क० 'अश्रीणां रास्नानाञ्च संधौ द्वौ चतुरः षडष्टौ वा स्तनान् करोति ।'[2] का० क० द्वौ अष्टौ वा स्तना भवन्ति ।[3] तथा चोभयोः कल्पयोर्यजमानः 'अदितिस्ते' इति मन्त्रेण बिलं कृत्वा 'मित्रैतां ते उखां परिददाम्यमित्या एषा मा भेदीति' मित्राय परिददाति ।[4] आ० क० यजमान एतामुखां कृत्वा सिकतासु प्रतिष्ठापयति, कात्यायनमते एके तिस्रः उखाः कुर्वन्ति ।[5] उ० क० सप्तभिरश्वशकृद्भिरुखां धूपयति । उ० क० च गार्हपत्याग्नौ अवटं खात्वा तस्मिन् उखां पचति । पक्वामुखां सिकतासु प्रतिष्ठापयति । ततो यजमानस्तामुखामजाक्षीरेण सिञ्चति ।[6] अत्राषाढाख्येष्टका विश्वज्योतिर्नाम्नीश्च तिस्र इष्टकाश्च पच्यन्ते ।

**यज्ञदीक्षा (उखयाग्निधारणम्)**–उ० क० अमावस्येनेष्ट्वा फाल्गुन्यामावस्यायां दीक्षा विहिता । तथा च उ० क० दीक्षणीयेष्टौ अग्नावैष्णववैश्वानरौ पुरोडाशौ घृते च चरुश्च भवन्ति, ततोऽध्वर्युः (का० क०) प्राकृतान्याध्वरिकाणि हुत्वा सप्ताग्निकानि जुहोति ।[7] आ० क० च पञ्चाध्वरिकीर्हुत्वा षडाग्निकीर्जुहोति, ततः सप्तमीं पूर्णाहुतिं जुहोति ।[8] तदनन्तरमुभयोः कल्पयोरध्वर्युर्यजमानो वा आहवनीये उखामधिश्रयति । तत उ० क० अध्वर्युस्त्रयोदश समिधः प्रादेशमात्रीरुखायामादधाति, तत्रैकां घृताक्तां समिधमादधति, एवमुखां परितापयति । तत उखां परितप्तां मौञ्जे शिक्ये षडुद्यामे द्वादशोद्यामे वावदधाति । उ० क० यजमानः परिमण्डलं रुक्मं शणसूत्रे प्रोतं कण्ठे प्रतिमुञ्चति, ततो यजमानः परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति, ततः स तामुखाम् आहवनीयस्य पुरस्तात् प्रादेशपाद्यामासन्द्यां चतुष्पाद्यां शिक्यवत्यां निदधाति, ततो 'यजमान उखामवेक्ष्य 'सुपर्णो-

1. आ० श्रौ० (१६।४।८-११)
2. आ० श्रौ० १६।५।२)
3. का० श्रौ० (१६।४।२)
4. का० श्रौ० (१६।४।३)
5. का० श्रौ० (१६।४।५-६)
6. का० श्रौ० (१६।४।१६), आ० श्रौ० (१६।६।१)
7. का० श्रौ० (१६।४।३०)
8. आ० श्रौ० (१६।८।१३)

ऽसि' इत्युक्त्वा–उपरि नाभेर्धारयमाणो विष्णुक्रमादीन् प्रक्रमते ।[1] का० क० यजमान उपरिनाभिमुख्यमग्निं धारयन् तमभिमन्त्रयते 'त्वाहार्षमिति' मन्त्रेण ।[2] आ० क० यजमानस्त्वनेन मन्त्रेणोख्यमग्निमुपतिष्ठते । 'हंसः शुचिषदिति' मन्त्रेण आसन्द्यां' करोति, 'सीद त्वमेति' वात्सप्रेणोपतिष्ठते ।[3] एवमग्निचयने यजमानो दीक्षितो भवति, अस्य कर्मणः संवत्सरपर्यन्तमावृत्तिर्भवति । अत्राग्निचयने सोमस्य प्रधानभूतत्वात् तदीया एव दीक्षा भवन्ति तत उ० क० अप्सूख्यभस्मावपनं विधीयते ।[4] आ० क० पुरीषे पशुकामः भस्मप्रवेशनं कुर्यात्, अप्सु च यायावरः प्रवपेत्, इति ।[5]

का० क० **चयनप्रकाराणि**—कात्यायनेनात्र श्रुतिविधानानुसारेण अनेकप्रकारणां चयनानां विधानं कृतम् । तानि सन्ति—द्रोणचित्, रथचित्, कङ्कचित्, श्येनचित्, प्रउगचित् चेति ।[6]

**वेदिमानम्**—का० क० एकदीक्षापक्षे तस्यामेव रात्रौ विष्णुक्रमादयो वेदिमानमग्निक्षेत्रमानं च कार्याणि । वेदिश्च चयनयागाचित्यनुसारं वर्धनीया, सा च चत्वारिंशत्पदा भवति ।[7] आ० क० यजमानः प्रायणीयया प्रचर्य वेदिं विमीमिते तथा चातिथ्यया प्रचर्याग्निं विमिमीते । का० क० तु दीक्षणीयामुत्तमेऽहनि एते कर्मणी भवतः ।[8]

**अग्निक्षेत्रमानम्**—तत्रैवाग्निक्षेत्रं निमीयते । तच्च सार्द्धसप्तपुरुषात्मकम्, तत्र मध्ये द्विपुरुषयामं द्विपुरुषविस्तारं स्थण्डिलं निर्माय तत्संलग्नमेव दक्षिणपश्चिमोत्तरभागेषु त्रीण्यपि एकैकपुरुषविस्तारम्, दक्षिणोत्तरयोः पार्श्वयोः सारत्निकैकपुरुषयामं पश्चिमे च सवितस्तिकपुरुषयामं स्थण्डिलत्रयं निर्मीयते । स्थण्डिलमिदं प्राङ्मुखं क्रियते,

---

1. का० श्रौ० (१६।५।६), आ० श्रौ० (१६।१०।११-१२)
2. का० श्रौ० (१६।५।१६)
3. आ० श्रौ० (१६।१०।१४)
4. का० श्रौ० (१६।६।२३), आ० श्रौ० (१६।१२।११)
5. आ० श्रौ० (१६।१३।२-४)
6. का० श्रौ० (१६।५।६)
7. का० श्रौ० (१७।३।१४)
8. का० श्रौ० (१६।७।२८), आ० श्रौ० (१६।१७।४)

तस्य दक्षिणोत्तरयोर्द्वे स्थण्डिले, तयोः क्रमाद्दक्षिणोत्तरौ पक्षौ इति संज्ञा, पश्चिमस्य पुच्छमिति नाम, मध्यमस्य चात्मेति संज्ञा। इत्थं स्थानं प्रकल्प्य तच्च रज्ज्वा वेष्टयित्वा तस्य समन्तात् खातं कृत्वा एकषष्ट्यधिकशतद्वयसंख्यकान् चतुर्णवत्यधिकशतत्रयसख्यंकान्वा पाषाणान् इष्टकान्वा निरन्तरं परस्परसंलग्नान् निखनति।[1] आ० कल्पे प्रायेण चैवं विधानं कृतम्।[2] का० क० खातस्योर्ध्वं शर्कराः क्षेप्यन्ते। वाजसनेयिनां (कात्यायनस्य) चरणे एकैकपुरुषवृद्ध्या एकशतविधमग्निचयनमाख्यातम्, एतच्च मतं तत्राचार्येणापस्तम्बेनोदाहृतम्।[3] शतपथे[4] चाग्निमानं एवंविधं विधीयते।

**इष्टकोपधानप्रकारः**—का० क० आत्मानमभिमुखीकृत्य चयनं कर्त्तव्यं पराग्चयनं न कर्त्तव्यम्। या इष्टका यजुषा उपधीयन्ते ता यजुष्मत्य उच्यन्ते। यास्तूष्णीमुपदधाति ता लोकम्पृणा उच्यन्ते। द्वे द्वे लोकम्पृणे उपधाय दश दशोपधाति। अयुग्मो य इष्टकागणो यथा बालखिल्यास्तासां सप्तमध्यमानूके उपधीयन्ते, या चैकेष्टका साप्यनूके उपधेया, यथा विश्वज्योतिसंज्ञका।[5]

**आ० क० चयनपदार्थाः**—आ० क० दीक्षाकल्पेषु मासप्रभृतिषु इष्टकाः क्रियन्ते, मृन्मयी इष्टका तु पादमात्री, अरत्निमात्री, अणूकमात्री, उर्वस्थिमात्री वा भवति। अत्र कल्पे चयनपदार्थाः, समाम्नाताः, पुष्करपर्णं रुक्मः, हिरण्मयः पुरुषः, स्रुचौ, सप्तस्वयमातृण्णाः, शर्कराः, हिरण्येष्टकाः, घृतेष्टकाः (पञ्च), दूर्वेष्टकाः, कूर्म, उलूखलम्, मुसलम्, शूर्पम्, अश्मानः, पशुशिरांसि, सर्पशिरांसि, मृन्मय्यश्चेष्टकाः। आ० क० चिवयानः प्रथमचितौ जानुदघ्नं साहस्रं चिनोति, द्वितीयचितौ नाभिदघ्नं द्विसाहस्रं चिनोति, तृतीयचितौ नाभिदघ्नं त्रिसाहस्रं चिनोति।[6]

---

1. का० श्रौ० (१६।८।१-२३)
2. आ० श्रौ० (१६।१७।६-१४)
3. आ० श्रौ० (१६।१७।१५-१६)
4. श० ब्रा० (१०।२।३।१८)
5. का० श्रौ० (१६।७।१२-२७)
6. आ० श्रौ० (१६-१३)

**गार्हपत्याग्निक्षेत्रम्**—का० क० आदावेव गार्हपत्यस्याग्नेः स्थण्डिलं निर्मीयते, तच्चैकचितिकं त्रिचितिकं भवति, तच्चतुररत्निमात्रं विस्तारे, मण्डलाकारं च क्रियते, एकैकस्यामपि चितौ एकविंशतिरिष्टका भवन्ति ।[1] तथा चाह आपस्तम्बाचार्यः—'गार्हपत्यचितेरायतनं व्याममात्रं चतुरश्रं परिमण्डलं वा' (भवति), अध्वर्युः पलाशशाखया गार्हपत्यस्य तृणादिकं बहिर्निस्सारयति ।[2] उ० क० चाध्वर्युरूषान् सिकताश्च निर्वपति ।[3] ततः का० क० अर्धबृहत्यश्चतस्रः, पद्याः सप्तः, द्वे अर्धपद्ये, अष्टौ वक्रा उपधीयन्ते ।[4] आ० क० अवशिष्टं क्षेत्रं त्रयोदशभिर्लोकम्पृणाभिः प्रच्छादयति । तदनन्तरं चात्वालदेशात्पुरीषमाहृत्य तेन तत्समं करोति । तत उ० क० नैर्ऋत्यां दिशि दूरं गत्वा कृष्णवर्णास्तुषपक्वा निर्ऋतिसंज्ञकास्तिस्र इष्टकाः श्वभ्रादौ निधाय तत्रैव शिक्यं रुक्मं पाशादिकमुन्मुच्यागच्छेत् ।[5] एवं च आ० क० 'नमः सु ते निर्ऋते' इति मन्त्रेण ता निधाय आगच्छति यजमानः ।[6] उ० क० नमस्कृत्वा निर्ऋतिविषयमनपेक्ष्यायान्ति सर्वे, स्नात्वा च गृहान् आगच्छन्ति, अग्नी चोपतिष्ठन्ते ।[7]

**क्षेत्रकर्षणम्**—उ० क० प्रायणीयान्ते यजमानः कर्षणार्थं षड् द्वादश चतुर्विंशतिं वा बलीवर्दान् युनक्ति, अत्र सीरमौदुम्बरं भवति ।[8] आ० क० चात्र एतान्युपकरणान्युक्तानि—उद्योजनम्, अन्तर्यामम् ईषा, खगल्यम्, शफम्, अष्ट्रा, तालम्, मंडूक्यौ च ।[9] का० क० होमानन्तरम् अध्वर्युः 'शुनं सुफाला' इत्यादिभिर्मन्त्रैः प्रथमां सीतां कृषति, ततो मध्ये तूष्णीं तिस्रस्तिस्रः सीताः कृषति, एवमन्यासु दिक्षु च यजमानस्तिस्रस्तिस्रः सीताः कृषति । ततोऽध्वर्युरनडुहौ विमुच्य विरमति,

---

1. का० श्रौ० भूमिकायां, पृ० ६३
2. आ० श्रौ० (१६।१४।१)
3. का० श्रौ० (१७।१।६-७), आ० श्रौ० (१६।१४।१-४)
4. का० श्रौ० (१७।१।८-१७)
5. का० श्रौ० (१७।१।२३)
6. आ० श्रौ० (१६।१५।८)
7. का० श्रौ० (१७।२।६), आ० श्रौ० (१६।१६।४-५)
8. का० श्रौ० (१७।२।८-१०), आ० श्रौ (१६।८।५)
9. आ० श्रौ० (१६।१८।५)—तुलनीयम्–मैत्रायणीयसंहितया (२।७।१२)

तदा यजमानस्तान् बलीवर्दानध्वर्यवे ददाति ।[1] आपस्तम्बेन चैवं क्षेत्र-सीताकर्षणप्रकारमुक्तम्, तथाविधा च बलीवर्दानां दक्षिणा विहिता ।[2] अत्र तेनाचार्येण वाजसनेयिनां मतं प्रदर्शितम् चतुरश्रसम्भिन्नं षोडश-सीतं वाजसनेयिनः समामनन्ति ।[3] कात्यायनेन चैवं विहितम्, शतपथे च षोडश कृष्टाः सीताः श्रूयन्ते ।[4] का० क० अध्वर्युः कुशस्तम्बे हुत्वा पञ्चदश चमसान् कृष्टे चाकृष्टे निनयति ।[5] आ० क० स पञ्चदशो-दपात्राणि निनयति, पूर्वकल्पवत्—द्वादश कृष्टेषु त्रीनकृष्टेषु च[6] तत उ० क० यजमानः सर्वौषधं कृष्टक्षेत्रे वपति । आ० क० चतुर्दशभिर्मन्त्रैः, का० क० पञ्चदशमन्त्रैस्तान्यौषधीनि स वपति । आपस्तम्बेनात्र तानि परिगणितानि—तिलमाषाः, व्रीहियवाः, प्रियङ्ग्वणवः, गोधूमाः, वेणु-श्यामकनीवाराः, जर्तिलाः, गवेधुकाश्च । आरण्यजा मर्कटकाः, गार्मुत-सप्तमाः, कुलत्थसप्तमा वा सप्त ग्राम्याः सप्ताख्याः औषधयः ।[7] का० कल्पे औषधिपरिगणनं नास्ति ।

तत उ० क० उत्तरवेदेर्निवपनमाहवनीपरिश्रयणञ्चोच्येते ।[8]

**प्रथमचितेरिष्टकोपधानम्**—उ० क० रोहिते चर्मण्यानुडुहे प्राचीन-ग्रीवे उत्तरलोम्नि प्रथमायाश्चितेरिष्टका यजमानः संसादयति । आ० क० च तत्र तिस्रः स्वयमातृण्णास्तिस्रश्च विश्वज्योतिषः संसाद्यन्ते ।[9] का० क० स्वयमातृण्णा इच्छया आदधाति ।[10] का० क० अग्नेः पुरस्तात् श्वेतोऽश्वस्तिष्ठति, श्वेताभावे अश्वेताश्वस्तिष्ठति तस्याभावे अनड्वान्

1. इतिहासे तु कुरुजनकादिभिर्नृपैः स्वयं क्षेत्रकर्षणं कृतमिति श्रूयते । (का० श्रौ० १७।२।११-२२)
2. आ० श्रौ० (१६।१६।२-६)
3. आ० श्रौ० (१६।१६।६)
4. श० ब्रा० (७।२।२।४-६)
5. का० श्रौ० (१७।३।३)
6. आ० श्रौ० (१६।१६।१०)
7. आ० श्रौ० (१६।१६।१३-१४)
8. का० श्रौ० (१७।३।३-१४), आ० श्रौ० (१६।२०।६-१२)
9. आ० श्रौ० (१६।२१।२)
10. का० श्रौ० (१७।३।१८)

भवति ।[1] आपस्तम्बस्तु श्वेतमश्वमेन विदधाति ।[2] उ० क० सर्वे ऋत्विग्यजमाना अश्वं पुरस्कृत्याभिप्रव्रजन्ति । पुच्छाद्दक्षिणस्यां दिशीष्टकां निदधाति, ततः परिक्रमणानन्तरमश्वं मुञ्चति । तत इष्टकाभिरध्वर्युर्यजमानो वा अग्निं चिनोति ।

उ० क० यजमानः साम गायन् पुष्करपर्णमुपधाय तस्मिन् 'ब्रह्म जज्ञानमिति' मन्त्रेण रुक्ममुपदधाति, रुक्मे च हिरण्यमयीं पुरुषाकृतिं निदधाति, तदुपरि स्वयमातृण्णामुपधाय साम गायति, ततो जुहोति ।[3]

का० क० पुरुषोपरि स्वयमातृण्णां पाषाणमयीं शर्करां चोपधाय यजमानः साम गायति ।[4] आ० क० स्वयमातृण्णामभिमृश्य यजमानो अश्वेनोपघ्राप्य अविदुषा ब्राह्मणेन सह मध्येऽग्नेरिष्टकामुपदधाति ।[5] उपधाने यजमानः 'भूरिति' व्याहृतिं जपति । ततः स्वयमातृण्णां जुहोति । अत्र कल्पे यजमानः आसीनः प्रथमां स्वयमातृण्णामुपदधाति, ऊर्ध्वज्ञुर्द्वितीयाम्, तिष्ठंस्तृतीयां चोपदधाति । ततः स हिरण्येष्टकामुपधाय मण्डलेष्टकां चोपदधाति ।[6]

ततो यजमानः का० क० यजुष्मत्याद्याः आषाढान्तरस्तासामेकैकां, पूर्वं पूर्वमुपदधाति । तत आत्मनो द्वितीये पद्यालोके इष्टकाश्चिनोति । उलूखलमुसले च रेतः सिग्वेलायां प्रयुनक्ति, (श० ब्रा० ७।५।१।१३) । ततो यजमानो द्वे रेतसिगिष्टके, एकां विश्वज्योतिषम्, द्वे ऋतव्ये, एकामाषाढाम् चोपदधाति । ततः कूर्मं दधिमधुघृतैरङ्क्त्वा शेवालेषु तृतीये पद्यालोके तं (कूर्मम्) उपदधाति । आ० क० च शब्दान्तरेणेदं विधानं वर्तते । अत्र कल्पे जीवन्तं कूर्ममुपदधाति । मन्त्रविनियोगोऽपि किञ्चिद् भिद्यते ।[7]

---

1. का० श्रौ० (१७।३।२०)
2. आ० श्रौ० (१६।२९।५)
3. का० श्रौ० (१७।४।१-१०), आ० श्रौ० (१६।२२।१-४)
4. का० श्रौ० (१७।४।१५-१७)
5. आ० श्रौ० (१६।२३।१-६)
6. का० श्रौ० (१७।४।१८-२८)
7. आ० श्रौ० (१६।२५)

का० क० स्वयमातृण्णामध्यादरत्निमात्रे तृतीये पश्चालोके उत्तरस्यां दिशि प्रादेशमात्रे औदुम्बरे उलूखलमुसले च यजमान उपदधाति[1], आपस्तम्बेनात्र वाजसनेयिनां मतमुल्लिखितम्, तदनुसारेण उलूखलं मध्येऽग्नेरुपदधाति, वेदिमध्ये चोखामुपदधाति[2], आ० क० उखां घृतेन दध्ना मधुना सिकताभिर्वा पूरयित्वा तस्यां पयः करोति।[3] शतपथे चोखापूरणमुक्तम्[4], ततोऽध्वर्युरुखां जुहोति।

**हिरण्यप्रासनम्**—का० क० पञ्चपशूनां प्रतिशिरः सप्तसप्तहिरण्यशकलान् इन्द्रियेषु यजमानः प्रास्यति[5], तथा चापस्तम्बो मतमिदमुदाहरति—'सर्वेषां पशुशिरसां हिरण्यशकलप्रत्यसनं पूरणं च वाजसनेयिनः समामनन्ति।'[6] एवं पञ्चत्रिंशत् हिरण्यशकला पशूनामिन्द्रियेषु प्रास्यन्ते। ततः सर्वाणि पशुशिरांसि यजमान उखायामादधाति, तेषां मध्ये पुरुषशिर उपधीयते, उत्तरपूर्वयोरश्वस्यावेश्च शिरसी, दक्षिणपश्चिमयोर्गोरजयोः शिरसी च उपधीयन्ते। ततः पुरुषशिरसि द्वे स्रुवाहुती हूयेते, ततः शिरसामुपस्थानम्।[7] आ० क० हिरण्यप्रासनं का० कल्पवत् विहितम्। मन्त्रविनियोगस्तु भिन्नः। अत्र कल्पे मधुमिश्रेण दध्ना पुरुषशिरः पूरणम्, ततः सर्वाणि पशुशिरांसि पूर्ववत् उखायां निधीयन्ते। तथोपस्थानमपि चात्र भवति। आ० क० यजमानो दक्षिणेंऽसे सर्पशिर उपदधाति वा नोपदधाति[8], का० कल्पे नैतद् विधानं कथितम्। तथा च आ० क० द्वादशभिर्मन्त्रैः त्रिकृत्वोऽभ्यासपूर्वकं पुरुषाकृतिमिष्टकाभिश्चिनोति यजमानः। ततः स पुरुषसूक्तेन नारायणमुपतिष्ठते।[9]

---

1. का० श्रौ० (१७।५।३)
2. आ० श्रौ० (१६।२६।१२)
3. आ० श्रौ० (१६।२६)
4. श० ब्रा० (७।१।१।३८-४०)
5. का० श्रौ० (१७।५।७)
6. आ० श्रौ० (१६।२७।६)
7. का० श्रौ० (१७।५।७-२३)
8. आ० श्रौ० (१६-२७)
9. आ० श्रौ० (१६।२८।१-३)

भवति।[1] आपस्तम्बस्तु श्वेतमश्वमेव विदधाति।[2] उ० क० सर्वे ऋत्विग्यजमाना अश्वं पुरस्कृत्याभिप्रव्रजन्ति। पुच्छाद्दक्षिणस्यां दिशीष्टकां निदधाति, ततः परिक्रमणानन्तरमश्वं मुञ्चति। तत इष्टकाभिरध्वर्युर्यजमानो वा अग्निं चिनोति।

उ० क० यजमानः साम गायन् पुष्करपर्णमुपधाय तस्मिन् 'ब्रह्म जज्ञाननमिति' मन्त्रेण रुक्ममुपदधाति, रुक्मे च हिरण्मयीं पुरुषाकृतिं निदधाति, तदुपरि स्वयमातृण्णामुपधाय साम गायति, ततो जुहोति।[3]

का० क० पुरुषोपरि स्वयमातृण्णां पाषाणमयीं शर्करां चोपधाय यजमानः साम गायति।[4] आ० क० स्वयमातृण्णामभिमृश्य यजमानो अश्वेनोपघ्राप्य अविदुषा ब्राह्मणेन सह मध्येऽग्नेरिष्टकामुपदधाति।[5] उपधाने यजमानः 'भूरिति' व्याहृतिं जपति। ततः स्वयमातृण्णां जुहोति। अत्र कल्पे यजमानः आसीनः प्रथमां स्वयमातृण्णामुपदधाति, ऊर्ध्वज्ञुर्द्वितीयाम्, तिष्ठंस्तृतीयां चोपदधाति। ततः स हिरण्येष्टकामुपधाय मण्डलेष्टकां चोपदधाति।[6]

ततो यजमानः का० क० यजुष्मत्याद्याः आषाढान्तरस्तासामेकैकां, पूर्वं पूर्वमुपदधाति। तत आत्मनो द्वितीये पद्यालोके इष्टकाश्चिनोति। उलूखलमुसले च रेतःसिग्वेलायां प्रयुनक्ति, (श० ब्रा० ७।५।१।१३)। ततो यजमानो द्वे रेतसिगिष्टके, एकां विश्वज्योतिषम्, द्वे ऋतव्ये, एकामाषाढाम् चोपदधाति। ततः कूर्मं दधिमधुघृतैरङ्क्त्वा शेवालेषु तृतीये पद्यालोके तं (कूर्मम्) उपदधाति। आ० क० च शब्दान्तरेणेदं विधानं वर्तते। अत्र कल्पे जीवन्तं कूर्ममुपदधाति। मन्त्रविनियोगोऽपि किञ्चिद् भिद्यते।[7]

---

1. का० श्रौ० (१७।३।२०)
2. आ० श्रौ० (१६।२१।५)
3. का० श्रौ० (१७।४।१-१०), आ० श्रौ० (१६।२२।१-४)
4. का० श्रौ० (१७।४।१५-१७)
5. आ० श्रौ० (१६।२३।१-९)
6. का० श्रौ० (१७।४।१८-२८)
7. आ० श्रौ० (१६।२५)

का० क० स्वयमातृण्णामध्यादरत्निमात्रे तृतीये पद्मालोके उत्तरस्यां दिशि प्रादेशमात्रे औदुम्बरे उलूखलमुसले च यजमान उपदधाति[1], आपस्तम्बेनात्र वाजसनेयिनां मतमुल्लिखितम्, तदनुसारेण उलूखलं मध्येऽग्नेरुपदधाति, वेदिमध्ये चोखामुपदधाति[2], आ० क० उखां घृतेन दध्ना मधुना सिकताभिर्वा पूरयित्वा तस्यां पयः करोति।[3] शतपथे चोखापूरणमुक्तम्[4], ततोऽध्वर्युरुखां जुहोति।

**हिरण्यप्रासनम्**—का० क० पञ्चपशूनां प्रतिशिरः सप्तसप्तहिरण्यशकलान् इन्द्रियेषु यजमानः प्रास्यति[5], तथा चापस्तम्बो मतमिदमुदाहरति—'सर्वेषां पशुशिरसां हिरण्यशकलप्रत्यसनं पूरणं च वाजसनेयिनः समामनन्ति।'[6] एवं पञ्चत्रिंशत् हिरण्यशकला पशूनामिन्द्रियेषु प्रास्यन्ते। ततः सर्वाणि पशुशिरांसि यजमान उखायामादधाति, तेषां मध्ये पुरुषशिर उपधीयते, उत्तरपूर्वयोरश्वस्यावेश्च शिरसी, दक्षिणपश्चिमयोर्गोरजयोः शिरसी च उपधीयन्ते। ततः पुरुषशिरसि द्वे स्रुवाहुती हूयेते, ततः शिरसामुपस्थानम्।[7] आ० क० हिरण्यप्रासनं का० कल्पवत् विहितम्। मन्त्रविनियोगस्तु भिन्नः। अत्र कल्पे मधुमिश्रेण दध्ना पुरुषशिरः पूरणम्, ततः सर्वाणि पशुशिरांसि पूर्ववत् उखायां निधीयन्ते। तथोपस्थानमपि चात्र भवति। आ० क० यजमानो दक्षिणेंऽसे सर्पशिर उपदधाति वा नोपदधाति[8], का० कल्पे नैतद् विधानं कथितम्। तथा च आ० क० द्वादशभिर्मन्त्रैः त्रिकृत्वोऽभ्यासपूर्वकं पुरुषाकृतिमिष्टकाभिश्चिनोति यजमानः। ततः स पुरुषसूक्तेन नारायणमुपतिष्ठते।[9]

---

1. का० श्रौ० (१७।५।३)
2. आ० श्रौ० (१६।२६।१२)
3. आ० श्रौ० (१६।२६)
4. श० ब्रा० (७।१।१।३८-४०)
5. का० श्रौ० (१७।५।७)
6. आ० श्रौ० (१६।२७।६)
7. का० श्रौ० (१७।५।७-२३)
8. आ० श्रौ० (१६-२७)
9. आ० श्रौ० (१६।२८।१-३)

**का० क० प्रथमाचितिचयनम्**–का० क० यजमानः स्वयमातृण्णाया अपरस्मिन् देशे अजूकान्तेषु पञ्च अपस्या (इष्टका) उपदधाति, पुरस्तादनूकमध्ये मध्यकां पद्यां, तामभितो द्वे अर्धपद्ये, तयोः पार्श्वे द्वे पद्ये चोपदधाति, तदनन्तरं दश दश प्राणभृतो दक्षिणपूर्वांसादारभ्य कर्णासहिता चोपदधाति, एवमुत्तरश्रोणेरारभ्य एवमेवोपधानम्, पुनर्दक्षिणश्रोणेरारभ्य एवमेवोपधानम्, तत उत्तरादारभ्योपधानम्, एवं चत्वारो दशका इष्टकानां चीयन्ते। शिष्टा दश रेतसि च उपधीयन्ते, एवं पञ्चाशत् इष्टका भवन्ति। ततो दक्षिणकोणादारभ्य लोकम्पृणा उपदधाति, एवं शेषभागं ताभिः पूरयति, पशुपुच्छयोर्लोकम्पृणा अधीयन्ते, ततः पुरीषनिवपनं भवति।[1]

का० क० प्रथमायां चितौ द्वे सहस्रे षट् च (२००६) इष्टका भवन्ति, तास्वपि यजुष्मत्यः सप्तसप्ततिः, शेषा लोकम्पृणा (१९२९), द्वितीयायां चितौ १९९१ इष्टकाः, तासु ४१ यजुष्मत्यः, १९५० लोकम्पृणाः, चतुर्थ्यां चितौ १९९७ इष्टकाः, तत्र ४७ यजुष्मत्यः, शेषा १९५० लोकम्पृणाः, पञ्चम्यां चितौ ३०५३ इष्टकाः, तासु १३४ यजुष्मत्यः, शेषाः २९२२ लोकम्पृणाः, सर्वा यजुष्मत्य मिलित्वा ३६० यजुष्मत्यः १०७०९ लोकम्पृणाः, उभयविधा मिलित्वा ११९७० इष्टकाश्चीयन्ते।

**आ० क० प्रथमाचितिचयनम्**—अत्र कल्पेऽपि अपस्याप्रभृतय इष्टका का० कल्पवद्–चिक्यान उपदधाति, प्रतिदिशं पञ्चहिरण्येष्टका एका च मध्ये हिरण्येष्टका इति षड् हिरण्येष्टका विधीयन्ते। आपस्तम्बेन सूत्रेषु उपधानमन्त्रा पूर्णरूपेणैव उदाहृताः, यदा कात्यायनस्तान् क्वचित् क्वचित् प्रतीकमात्रेण उदाहरति। चयनान्तरं यजमान इष्टका उपतिष्ठते। ततः 'त्वामग्ने वृषभमित्यृषभमुपधाय' लोकम्पृण ता अस्य सूददोहस' इत्यवशिष्टं क्षेत्रं लोकम्पृणाभिः पूर्वकल्पवत् पूरयति।[2] अत्रापि इष्टकानां संख्या पूर्ववत् भवति।

**द्वितीयचितिः** (का० क०)—चिक्यानो द्वितीयातृतीयाचतुर्थीषु चितिषु प्रथमाचितिवत् पञ्चाशदूना द्वे सहस्रे लोकम्पृणा इष्टका

1. का० श्रौ० (१७।६।२-१३)
2. आ० श्रौ० (१६।३२,३३ कण्डिके)

उपदधाति। का० क० द्वितीयायां चितौ प्रतिदिशं पञ्च आश्विनीरुपदधाति, ततः प्रतिदिशं पञ्च वैश्वदेवीरुपदधाति, ततः पञ्च प्राणभृतः पञ्च चापस्या उपदधाति, अत्र 'शुक्रशुची' इति संज्ञके द्वे ऋतव्ये इष्टके चोपधीयेते। ततश्चतस्रो वयस्या उपदधाति।[1]

आ० क०—कात्यायनकल्पवदत्रापि पञ्च आश्विनीः, पञ्च वैश्वदेवी, पञ्च प्राणभृतः पञ्च अपस्या, द्वे ऋतव्ये चोपदधाति चतस्रो वयस्या चोपदधाति।[2]

**तृतीयाचितिः**—का० क० तृतीयायां चितौ स्वयमातृण्णामुपधाय विश्वज्योतिषमुपदधाति, तत नमनमस्येषोर्जानां चतुर्णां मासानां चतस्र ऋतव्या उपदधाति, ततो दश प्राणभृतः, द्वादशछन्दस्या, सप्त बालखिल्याश्चोपधाय यजुष्मतीर्लोकम्पृणाश्चोपदधाति।[3]

आ० क० यजमानः श्वोभूते तृतीयां चितिं चिचीषुः स्वयमातृण्णामुपधायाश्वेन चोपघ्राप्य अविदुषा ब्राह्मणेन सह मध्ये, अग्नेरुपधाय तां जुहोति। ततो हिरण्येष्टकां उपदधाति, ततो मण्डलेष्टकामुपधाय रेतसि च उपदधाति, ततो विश्वज्योतिषम्, द्वे संज्ञान्ये, चतस्र ऋतव्याः, पञ्च चेष्टका दिशानामुपदधाय दश प्राणभृत उपदधाति, ततस्तिस्रसु दिक्षु द्वादश द्वादश छन्दस्याः (समग्राः षट्त्रिंशतम्) उपधाय सप्त बालखिल्याः, ततो द्वादश भूतेष्टकाः, ऋषभेष्टकां चोपदधाति।[4]

**चतुर्थीचितिः**—का० क० चतुर्थ्यां चितौ चिक्यानः पूर्वयोर्द्वे इष्टके, दक्षिणदिशि द्वे इष्टके, ततश्चतुर्दश इष्टका चोपधाय षड्इष्टकाश्चोपदधाति, ततो द्वे ऋतव्ये (सहसहस्ये), नव सृष्टीरिष्टकाः, ततो लोकम्पृणभिः प्रथमाचितिवत् पूरणम्।[5]

आ० क० द्वे संज्ञान्यौ, द्वे ऋतव्ये, सप्तदश सृष्टीरिकाः, षोडश व्युष्टीरुपधाय लोकम्पृणाभिश्चितिपूरणमुक्तम्।[6]

---

1. का० श्रौ० (१७।८।१६)
2. आ० श्रौ० (१७।१)
3. का० श्रौ० (१७।६।१-१०)
4. आ० श्रौ० (१७।२।१२)
5. का० श्रौ० (१७।६।१६-१७)
6. आ० श्रौ० (१७।२।८-१३)

**पञ्चमोचितिः**—का० क० पञ्च असपत्ना इष्टका द्वितीये पद्यालोके अनुकान्तेषूपधीयन्ते, ततो दश दश प्रतिदिशं विराट्संज्ञकाश्चत्वारिंशतमुपदधाति, द्वे गायत्र्यौ असपत्नानां विराड्गणस्य मध्ये स्थापनीये। द्वितीये पद्यालोके उष्णिक्संज्ञकाः, ततो अषाढवेलायां पञ्चदशस्तोमभागाः प्रतिदिशमुपदधाति। ततो अनूकेषु पञ्च नाकसदः, पञ्चचूडाः, तिस्रस्तिस्रः छन्दस्या उपदधाति, स्वमन्येषां छन्दसाम् अनुष्टुब्जगतीबृहतीककुब्गायत्रीप्रभृतीनामिष्टकानामुपधानं विधीयते। ततः पुरीषवत्या सह पूर्वामतिच्छन्दसं प्राच्यामुपदधाति, पञ्चमीमसपत्नां पुरीषवतीमुपदधाति, अर्धबृहतीनां स्थाने मध्ये आत्मनि अष्टौ अर्धपद्या उपदधाति, पुनः पुनश्चितिं द्वे ऋतव्ये चोपधाय लोकम्पृणाभिः पुरीषेण च पूरणम्, ततो विकर्णीसंज्ञकामुपधायाग्निप्रोक्षणं हिरण्यशकलसहस्रप्रकिरणं च भवतः।[1]

**आ० क० पुनश्चितिः**—आ० क० चैवंविधं पञ्चम्याश्चितेश्चयनमुक्तम्। अत्र कल्पे चापि यजमानः पुनश्चितिं चिनोति, तद्विधानमापस्तम्बेन विस्तरेण प्रोक्तम्, तत्र यजमानो अष्टौ सयुजः पञ्चजीमूताः सप्तकृतिकाः पञ्च पुरोवसिनीः, अष्टौ आदित्येष्टकाः पञ्च घृतेष्टकाः उपधाति, अत्रापस्तम्बेन वाजसनेयिनां मतमुदाहृतम्—'आदित्येष्टका अपिघृतपिण्डान्मतिषिक्तानुपदधाति, ततोऽपि तेन विधानं विस्तीर्यते। तदनुसारेण पञ्च यशोदाः, पञ्च भूयस्कृतः, पञ्च रूपिणीः पञ्च, षड्, एकां च हृदयेष्टकां सप्त ऋतव्याश्चोपदधाति। ततः षोडशौपशीवरीरिष्टकाः, दश इन्द्रेष्टकाः, द्वाविंशतिमिन्द्रतन्वीं, त्रयस्त्रिंशतं यज्ञतन्वीः, द्वादश ज्योतिष्मतीः पौर्णमासीमिष्टकामुपधाय कृत्तिकानक्षत्रेष्टकामुपधाय सर्वाः (षड्विंशतिं) नक्षत्रेष्टका उपदधाति। ततो अष्टौ सरितः, पञ्चहिरण्येष्टकाः, चतस्रः स्वयमातृण्णाः, पञ्चाह्लामिष्टका उपधाय एकां व्रतेऽष्टकां पञ्चात्मेष्टकाः पञ्च वैश्वदेवीः प्रजापत्यामेकामिष्टकामुपधाय पञ्चायानीरिष्टकाः, चतस्रो वज्रिणीः ततस्त्रिलोकां तिस्रो लोकेष्टकाः, तिस्रश्च पावमानीरुपदधाति। ततः सप्तच्छन्दस्याः, चतस्रो राष्ट्रभृतः उपदधाति, एकेषां मते पुरस्ताद् गायत्रीं दक्षिणतो त्रिष्टुभं पश्चात् जगतीमुत्तरतः पङ्क्तिं च मध्ये उपधाय मुखं पूरयति। परमतेन लोकम्पृणाभिर्मुखपूरणम्, अथवा

1. का० श्रौ० (१७।११)

विकर्णी स्वयमातृण्णां वोपदधाति, चित्यन्ते लोकम्पृणा उपधाय संचितमाज्येन प्रोक्षति, अत्र कल्पेऽपि हिरण्यशकलसहस्रक्षेपणमुक्तम् ।[1]

**शतरुद्रियहोमः** - एवं यजमानश्चितिं चित्वा उ० क० शतरुद्रियं होमं जुहोति। का० क० अग्निचयनक्षेत्रस्योत्तरस्यामपरस्यां स्रुक्त्यां परिश्रित्सु जर्तिलमिश्रान् सगवेधुकसक्तून जुहोति, शाखान्तरेण अजाक्षीरेण वा होमः क्रियते। अत्र अर्कपत्रेण रुद्रदेवतासम्बन्धिभिः प्रत्यवरोहारोहसंज्ञकैर्मन्त्रैः (शु० य० १६ अ०) होमो भवति।[2] आ० क० चैवविधं समानं विधानम्।[3] तत उ० क० अग्निक्षेत्रं परिषेक्ता त्रिः परिषिञ्चति उदकुम्भं चाश्मना भिनत्ति, तत उ० क० यजमानो मण्डूकावकावतेसशाखा वेणौ बद्ध्वा अग्निं प्रतिकर्षति, ततः कर्षणेन मृतं मण्डूकमुत्करे क्षिपति। तत उ० क० यजमानस्य वाग्विसर्जनम्, चित्यारोहणम्, होमः, अवरोहणम्, इत्यादीनि भवन्ति।[4] होमान्ते वैश्वानरस्य मरुतां पुरोडाशनिर्वपणम्। उ० क० सप्तमारुतान् पुरोडाशान् निरुप्य, तत्रान्तिमं मारुताख्यसंज्ञकं पुरोडाशं निर्वपति (सप्तमरुतः—स्वतवान्, प्रघासी, सांतपनः, गृहमेधी, क्रीडी, साकी, ऊर्जिषी च), ततो वसोर्धारासंज्ञकहोमः, तत उच्छिष्टेनाज्येन ब्रह्मौदनं पक्त्वा चतुरो ब्राह्मणान् भोजयित्वा प्राशितवद्भ्यो दक्षिणायां चतस्रो धेनूर्ददाति।[5]

**वाजप्रसवीयहोमः**—का० क० शतरुद्रियानन्तरं राजसूयिकान् षट् पार्थहोमान्, वाजप्रसवीयान् वाजपेयिकान् आग्निकांश्च वाजप्रसवीयान् यजमानो जुहोति। उ० क० वाजप्रसवीये होमे सप्त ग्राम्याः सप्तारण्याश्च औषधयो हूयन्ते, उ० क० ततो हुतशेषे अपः कृत्वा ऋत्विजो यजमानमभिषिञ्चन्ति। तत्रौदुम्बरीमासन्दीं प्रतिष्ठाप्य तस्यां कृष्णाजिनमास्तीर्य तस्मिन्नासीनं यजमानमध्वर्युरभिषिञ्चति। आ० क० व्याघ्र-

---

1. आ० श्रौ० (१७।१।११ कण्डिका)
2. का० श्रौ० (१८।१।२-६)
3. का० श्रौ० (१८।३।४-१४), आ० श्रौ० (१७।१२।२)
   तु० मै० सं० (२।१३।२२)
4. का० श्रौ० (१८।३।४-१४), आ० श्रौ० (          )
   तु० मै० सं० (२।१३।२२)
5. का० श्रौ० (१८।४।१), आ० श्रौ० (१७।१७।९-१२)

चर्मणि राजन्योऽभिषिच्यते, बस्ताजिने वैश्योऽभिषिच्यते, कृष्णाजिने ब्राह्मणोऽभिषिच्यते ।[1]

का० क० यजमानः पुनः षड्राजसूयिकान् पार्थहोमान् जुहोति । अत्राध्वर्युः द्वादशधा विभज्याज्यं जुहोति । ततो रथशिरसि पंचकृत्वो जुहोति, ततः स वातहोमान् जुहोति ।[2]

**धिष्ण्याचयनम्**–आ० क० वाजप्रसवीयहोमानन्तरमध्वर्युः कृष्णायाः श्वेतवत्सायाा गोः पयसा द्वादशगृहीतेनाज्येन राष्ट्रभृत्संज्ञकहोमं जुहोति । का० कल्पवद् रथमुखादिषु च होमा भवन्ति । ततस्त्रीणि वातनामानि जुहोति, तत्राध्वर्युः परमतेन कृष्णाजिनपुटेन जुहोति, ततो मधुमिश्रेण दध्ना षट् सर्पाहुतीः, ततः पञ्चार्काहुतीः, तिस्रो रुचाहुतीर्जुहोति ।[3] तत उ० क० यजमानो लोकम्पृणाभिर्धिष्ण्यान् चिनोति, आग्नीध्रीये चाश्मानमुपदधाति, होत्रीये एकविंशतिर्लोम्पृणा उपधेयाः, मार्जालीये षडिष्टका उपधेयाः, यावतीरिष्टका उपदधाति तावतीः परिश्रितो निदधाति । ततस्तूष्णीं पुरीषनिवपनम् । आ० क० द्वादश षोडश एकविंशतिर्वा लोकम्पृणा उपधीयन्ते । तत उ० क० अग्नियोजनम्, अग्निविमोचनं च विधीयेते । ततो देविकाहवींषि भवन्ति ।

**दक्षिणा**—का० क० मैत्रावरुण्या पयस्यया प्रचर्य यमजानो अध्वर्यवे छागमिथुनं ददाति ।[4] आ० क० दक्षिणायां शतमानस्य कृतं मधुपूर्णं हिरण्यपात्रं ब्रह्मणे ददाति । अध्वर्यवे च कल्याणीर्दक्षिणाः । ततः समिष्टयजूंषि, नवाध्वारिकाणि हुत्वा सक्तुहोमं दशाकूतीश्च जुहोति ।

**याजमानव्रतानि**—अग्निचयनान्ते यजमान उ० क० न वर्षायां धावति, पक्षिमांसे नाश्नाति, प्रथमां चितिं चित्वा न रामामुपेयात्, द्वितीयेऽग्निचयनान्ते स्वां पत्नीमेवोपेयात्, नासवर्णाम्, तृतीये चयनान्ते न काञ्चन स्त्रियमुपेयात्, ब्रह्मचार्येव भवेत्, अग्निचित्तु यावज्जीवं व्रतान्याचरेत्, विकल्पे संवत्सरपर्यन्तं व्रतान्याचरेत्, पुनश्चितिं वा चिनुयात्,

1. आ० श्रौ० (१७।१६।६-६)
2. का० श्रौ० (१८।५।१५-२०)
3. आ० श्रौ० (१७।२०)
4. का० श्रौ० (१८।६।२४)

उ० क० पुनश्चितिचयनमुक्तम्, आपस्तम्बेन चात्र याज्ञसेनीचितिरपि विहिता, अथवा विश्वजिता क्रतुना यष्टव्यम् ।[1]

## (आपस्तम्बकल्पे सावित्राद्याश्चयनेष्टय:)

तैत्तिरीयाणां सम्प्रदाये सावित्राद्या इष्टय: प्रसिद्धा आसन्, तां परम्परामनुसरन् आपस्तम्ब: सावित्राद्यान् यज्ञान् एकोनविंशे प्रश्ने विस्तरेण निरूपितवान्। तत्रापस्तम्बकल्पे प्राधान्येन एतेषां चयन-यज्ञानां वर्णनमुपलभामहे—

(क) सावित्रचयनम्
(ख) नाचिकेतचयनम्
(ग) चातुर्होत्रचयनम्
(घ) वैश्वसृजचयनम्
(ङ) आरुणकेतुकचयनम्

कात्यायनश्रौतसूत्रे (वाजसनेयचरणे) काश्चित् काम्येष्टय: (पश्विष्टय:) व्याख्याता:—यथा—(१) वायव्यपश्विष्टि:, (२) संग्रामयायी-पुरुषस्येष्टि:, (३) प्राजापत्येष्टि:, (४) चित्रेष्टि:, (५) कारीरीष्टि:।

आपस्तम्बकल्पानुसारि एतेषामिष्टीनां विषयवस्तु सारेणात्र संगृह्यते।

**सावित्रचयनम्**—आ० क० पशुबन्धे यजमान: स्वर्गकाम: सावित्रं चिन्वीत स चेष्यमाणो वेदितृतीयदेशे यजते। चिचीषु: पञ्चाशीतिशतं हिरण्येष्टका: तावती: शर्करा:, चतंस्र:, स्वयमातृण्णा इष्टका:, अपरिमिताश्च लोकम्पृणा गृह्णाति। चयनकर्ता उत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य सर्वत: परिमण्डलं रथचक्रमात्रं सावित्रं[2] (सूर्यं) परिलिख्य तत्र कुशस्तम्बे जुहोति। तत्रैव परिमण्डले नवग्रहाणां प्रतीकरूपा: वृत्ताकारा नव रेखा लिख्यन्ते, ता: शर्कराभिरवकीर्य दर्भैश्च प्रच्छाद्य दध्ना मधुमिश्रेण शर्कराभिश्च संपूरयति।

प्रातरग्निहोत्रे हुते यजमान आत्मनि अग्निं गृहीत्वा मन्त्रपूर्वकं स्वयंचित्तौ सिकता निर्वपति, तत ऊषान् सिकताश्च संसृज्य निरुप्य

---

1. का० श्रौ० (१७।१२।१६), आ० श्रौ० (१७।४।६)
2. अयं यज्ञ: सौरमण्डलस्य क्रियाकलापस्यानुकृतिर्भवति। इदमेव तथ्यमस्य यज्ञस्य वर्णनात् प्रकटीभवति।

च वेर्देर्जघनार्धे उदमात्रं च निधाय नवभ्यां बाह्यलेखायां पूर्वपक्षस्य पञ्चदशानामह्नां प्रतीकरूपा इष्टकाः संदधाति, तेषामन्तराले पञ्चदशानां मुहूर्तानां पञ्चदश इष्टका उपदधाति। एवं क्रमेण यजमानः पूर्वपक्षस्य पञ्चदशानां रात्रीणाम्, आसां रात्रीणां मुहूर्तानाम्, पञ्चदशापरपक्षस्याह्नाम्, तेषां च पञ्चदशमुहूर्तानां प्रतिलेखामुपदधाति नवसु लेखासु, एवं द्वादशमासानां (पूर्वपरयोः पक्षयोः) चतुर्विंशतिरिष्टकाः, त्रयोदश मासानां चेष्टका उपदधाति। अतः परं षड्यज्ञक्रतूनां त्रयाणां च क्रतूनामिष्टका उपदधाति—अग्निष्टोम उक्थ्यो अग्निर्ऋतुरिति, ततो नाभ्यां (केन्द्रे) चत्वारि संवत्सरनामानि उपदधाति—प्रजापतिः, संवत्सरः, महान् कश्च। ततश्चतस्रः स्वयमातृण्णा दिक्षूपदधाति—भूरग्निं च पृथिवीं च मां चेति। ततो लोकम्पृणा उपधाय चितौ आरोहणावरोहणे भवतः। ततो यजमानश्चितिमुपतिष्ठते। उपस्थानान्तरं यजमानो धेनूः कृत्वा ता उपधाय अजाक्षीरेण च हुत्वा अग्निप्रणयनादिकं कृत्वा अतिमुक्तीर्जुहोति, ततो शतरुद्रीयस्य, वसोर्धारायाः अन्नस्य वसूनां मरुतां च होमा भवन्ति, ततो दक्षिणादिविधानं कथितं कल्पसूत्रकारेण। दक्षिणायां षष्ठौहीगर्भिणी, हिरण्यम्, वासश्च विहितानि।[1]

**नाचिकेतचयनम्**—तैत्तिरीयसंहितायां बहुधा यमनचिकेतसोरुपाख्यानमुपलभ्यते, कठोपनिषदि च तत् प्रसिद्धमेव। तत्र यमेन मृत्युदेवेन नचिकेतसे चयनविधिराख्याता। आ० क० नाचिकेतचयनं प्रायेण सावित्रचयनतुल्यं व्याख्यायते किन्त्वत्र लेखा न भवन्ति, चतुर्भुजात्मकं वृत्ताकारं वा स्वर्गलोकं परिलिख्यते तत्र एकविंशतिर्हिरण्येष्टका नाभ्यामेवोपधीयन्ते, तत्रापि पशुकामः पाङ्क्तचयने पञ्च पञ्च प्रतिदिशमेकां च मध्ये चिनोति, ज्यैष्ठ्यं यशः प्रजां वा ईप्सन् त्रिवृत्तमेव चिनोति—तत्र सप्तेष्टकाः पुरस्तात्तिस्रो दक्षिणतः सप्त पश्चात्तिस्र उत्तरत एकां च मध्ये चिनोति, यदि चिक्यान इच्छेद्भूयिष्ठं जना मे श्रद्दधीरन् तदा स भूयिष्ठां दक्षिणां दद्यात्, तदा स दक्षिणासु नीयमानासु 'प्राच्येहि प्राच्येहीति' जुहोति।[2] ततः स स्वयमातृण्णादि उप-

1. आ० श्रौ० (१६।११-१३)

2. नाचिकेतोपाख्याने—'तं कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश (कठो० १।१।२)

दधाति ।[1]

**चातुर्होत्रचयनम्**—अस्मिन् चयने यावन्ति पदानि तावतीर्हिरण्येष्टकाश्चिक्यान उपदधाति, तत्र दशहोतृहृदयग्रहचतुर्होतृपञ्चहोतृषड्ढोतृसप्तहोतृसंभारपत्नीनाञ्च स्वयमातृष्णासहिता इष्टका उपधीयन्ते ।[2]

**वैश्वसृजचयनम्**—नाचिकेतेन वैश्वसृजो व्याख्यायते, तत्र यावन्तो मन्त्रास्तावन्तीः हिरण्येष्टकाः शार्करा वोपदधाति, तत्र चिक्यान उत्तरवेदेर्नाभिं यच्चामृतं यच्च मर्त्यमित्येतैस्त्रिभिरनुवाकैरग्निं परिचिनोति, अथवा तिस्रश्चितयश्चीयन्ते । अन्यत्समानम् पूर्वेण ।[3]

**आरुणकेतुकचयनम्**—आपस्तम्बमते आरुणकेतुकं चयनं ब्राह्मणव्याख्यातं भवति ।[4]

## काम्येष्टयः

आ० क० यजमानः काम्यैः पशुभिरमावस्यायां पौर्णमास्यां वा यजने, तेषां निरूढपशुबन्धवत् कल्पो भवति, तत्र वायव्यः श्वेतः पशुः, प्राशृङ्गः, अवाशृंगः, उक्षा, वशा वेहद् धेनुर्वत्स ऋषभोऽनडवान् गोमृगो वा पशवो भवन्ति । तत्रापि आभिचरणकेषु कृत्येषु लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति (आ० श्रौ० १६।१६।१–६)

**संग्रामयायीपुरुषस्येष्टिः**–जिगीषुः संग्राममुपप्रयास्यन् आदित्यं चरुं निर्वपेत् । सोऽपि संग्रामभूमौ द्वादशकपालं पुरोडाशं निर्वपेत् । (आ० श्रौ० १६।१६।१–२) ।

**प्राजापत्येष्टिः**—आयुष्यकामः पुरुषः शतकृष्णलां प्राजापत्येष्टिं करोति । तत्र शतं स्वर्णशकलानि काकिण्या माषेण वा समानानि भवन्ति, तानि यजमान आज्ये आवपति, तानि च श्रपयित्वा अष्टौ अवद्यति पक्वानि तानि ब्रह्मादयो भक्षयन्ति । प्रयाजे च कृष्णलं

---

1. आ० श्रौ० (१६।१४)
2. आ० श्रौ० (१६।१४।१६-२७)
3. आ० श्रौ० (१६।१५।१-५)
4. आ० श्रौ० (१६।१५।१६)

जुहोति, तत्राचार्यो बहुविधं विधानं वितनोति अलं विस्तारेण। (आ० श्रौ० १९।२१-२४ कण्डिका:)।

**चित्रेष्टिः**—तत आचार्य चित्रापूर्णमासे चित्रामिष्टिं विदधाति। (आ० श्रौ० १९।२४।१४)।

**कारीरीष्टि**:—अतः परमाचार्येण वृष्टिकामाय कारीरीष्टिर्विहिता। अत्र मरुतां यजनं यजमानः कृष्णं वासः परिधाय करोति, तत्र कृष्णाश्वः यज्ञपार्श्वे स्थितो भवति। यजमानो वेदिमध्ये कृष्णाजिनमास्तीर्य तस्मिन् खर्जूरसक्तून् करीरसक्तून् वा कृष्णमधुना संयुत्य तिस्रः पिण्डीः कृत्वा पुष्करपलाशैः संवेष्ट्य कृष्णदाम्ना बध्नाति, कृष्णाजिनमनसि च बध्नाति, यदि वर्षेत्पिण्डीरेव जुहोति, यदि न वर्षेच्छ्वोभूते कृष्णव्रीहीणां त्रीणि हवींषि निर्वपति। अत्र यागे कृष्णोष्णीषाः कृष्णवसना निवीता ऋत्विजः प्रचरन्ति, कृष्णं वासः कृष्णोऽश्वः कृष्णाविर्दक्षिणा भवति। (आ० श्रौ० १९।२५-१६-२२, २६।१-१५)।



# नवमोऽध्यायः

# महायज्ञाः

## १. राजसूययज्ञः

**राजसूययज्ञस्यैतिह्यम्**–पुरा राजसूययज्ञो राज्याभिषेकस्य स्वाभाविकं कृत्यमासीत् तस्मात् सर्वशास्त्रकाराणां मते राजैव[1] राजसूयेन यष्टुमर्हति, नान्यः कश्चित् वर्णः । आपृथुकालात् युधिष्ठिरपर्यन्तं सर्वैः श्रेष्ठैर्नृपैरयं यज्ञक्रतुराहृतः ।[2] ऐतरेयब्राह्मणे ये राजानः ऐन्द्रेण महाभिषेकेणाभिषिक्ता वर्णितास्तैस्सर्वैं राजसूयोऽश्वमेधो वाऽऽहृतः । एतावुभौ यज्ञौ प्रारम्भे संसक्तौ इव आस्ताम्, उत्तरकाले हि तयोर्भेदः स्पष्टोऽभवत् । तथ्यमिदं ब्राह्मणग्रन्थेषूल्लिखिताभिर्मूर्धाभिषिक्तानां राज्ञां सूचनीभिः प्रकटीभवति ।[3]

---

1. 'राज्ञो राजसूयः' (का० श्रौ० १५।१), 'राजा स्वर्गकामो राजसूयेन यजेत' (श्रा० श्रौ० १८।१८।१)
2. 'पृथी ह वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे, 'सोऽकामयत यतः सर्वमन्नाद्यमवसन्धीयेति···।' (श० ब्रा० ५।२।५।४)
   तथा च हरिवंशे—'राजसूयस्तु सोमेन श्रूयते पूर्वमाहृतः । तस्यान्ते सुमहद् युद्धमभवत् तारकामयम् । आहृतो वरुणेनाथ तस्यान्ते सुमहाक्रतोः । देवासुरं महायुद्धं सर्वभूतक्षयावहम् । हरिश्चन्द्रश्च राजर्षिः क्रतुमेनमुपाहरत् । तत्राप्याडीबकं नाम युद्धं क्षत्रियनाशनम् । ततोऽनन्तरमार्येण पाण्डवेनातिदुस्तरः । महाभारत आरम्भः सम्भृतोऽग्निरिव क्रतुः ।। (हरिवंशे ३।२।१६–१६)
3. 'It is of interest to note the list of these given in the Aitereya Brahman (8–21–23), as have been consecrated (महाभिषेक) correspond roughly with that given in Satpath Brahman (13–5–4) and the Sankhyan Sraut Sutra (16/9) as the list of those who performed the Aswamedha, which, we shall see, is a rite of really a higher class than the Rajsuya (Taittiriya Samhita translated by A. B. Keith, p. xiii).

**अनुष्ठानकालादिकथनम्**—उ० क० फाल्गुनशुक्लप्रतिपदि राजसूयस्यारम्भो विहितः। राजसूययाग एकविंशतिमासेषु समाप्यते, प्रयुग्घविषां मासानुष्ठानपक्षे त्रयस्त्रिंशन्मासा भवन्तीति ज्ञेयम्।

**पवित्राद्याः सोमयागाः**—अत्रानुमत्याद्या इष्टयः, मल्लादयः पशुयागाः, पवित्राद्याः, सोमयागाश्च भवन्ति। तत्र पवित्राख्ये सोमयागे चतस्रो दीक्षाः तिस्र उपसदः, एका च सुत्या। अष्टदिनसाध्योऽयं सोमक्रतुः फाल्गुनशुक्लाष्टम्यां समाप्यते। यज्ञान्ते श्वोभूते (नवम्याम्) यजमानगृहे पूर्णाहुतिस्तथेच्छया च दक्षिणा। ततः उ० क० दशम्यामनुमतीष्टिः, तत्राष्टाकपालादिपुरोडाशो विहितः। का० क० अस्येष्टेर्दक्षिणा वासांसि विहितानि, अग्नावैष्णवस्य हिरण्यदक्षिणा, अग्नीषोमीयस्य पुनरुत्सृष्टो गौर्दक्षिणा, ऐन्द्राग्नस्य अनड्वान् साण्डो दक्षिणा विहिता।[1] आ० क० राजसूयस्याङ्गेषु अभिषेचनीये त्रिंशत् गवां दक्षिणा, पवित्राख्ये पञ्चसहस्राणि, त्रिंशत् दशपेये, दश केशवपनीये, विंशतिर्व्युष्टिद्विरात्रे, पञ्चक्षत्रस्य धृतौ च। अत्रापस्तम्बेन बह्वृचब्राह्मणमतमुदाहृतम्—'षष्टि त्रीणि शतानि सहस्राणां ददातीति बह्वृचब्राह्मणम् भवति।'[2]

**नैर्ऋतत्रिषंयुक्ताख्यादिकर्माणि**—तत उ० क० यजमान इष्टीः कृत्वा पिष्टानां तण्डुलानां नैर्ऋतमेकादशकपालं पुरोडाशं निर्वपति। ततो वल्मीकवपाहोमः। नैर्ऋतेष्टेः कृष्णं वासः कृष्णतूषं च दक्षिणा, ततो गार्हपत्ये हुत्वा धेनुर्दक्षिणा दीयते। तत उ० क० राजसूयान्तर्गतानि पूर्वविहितानि चातुर्मास्यानि भवन्ति। एवं दर्शपौर्णमासौ च प्रकृतिवत् भवतः। ततः पञ्चवातीयो होमः। होमान्ते अश्वत्रययुक्तो रथो दक्षिणा। क्रमेण च शुनासीरीयादिपर्वाणि भवन्ति संवत्सरपर्यन्तम्। तत उ० क० त्रिषंयुक्ताख्यं कर्म विहितम्। का० क० अस्मिन् कर्मणि अग्नावैष्णवं त्रिकपालं प्रथमं हविः, ऐन्द्रावैष्णवश्चरुर्द्वितीयं हविः, वैष्णवश्चरुस्तृतीयं हविः, अस्य वैष्णवेष्टेर्वामनो गौर्दक्षिणा। अथवा अग्नापौष्णमैन्द्रापौष्णं पौष्णं चेति त्रीणि हवींषि त्रिषंयुक्ताख्ये कर्मणि भवन्ति, अथवा विकल्पे अग्नीषोमीयम् ऐन्द्रासौम्यं सौम्यं च त्रीणि हवींषि। ततश्चतुर्थ्यां द्विहविष्केष्टिः—वैश्वानरो द्वादशकपालः,

---

1. का० श्रौ० (१५।१।१-१६)
2. आ० श्रौ० (१८।८।१-७)

वारुणो यावश्चरुश्च ।[1] आपस्तम्बोऽपि स्वस्मिन् कल्पे कात्यायनवत् त्रीणि हवींषि, ततो वैश्वानरं द्वादशकपालं हविः, यावं वारुणं चरुं च विदधाति। स च पूर्वं धात्रे द्वादशकपालं पुरोडाशं विदधाति, धातुः पुरोडाशस्य मिथुनौ गावौ दक्षिणा, वैश्वानरस्य हिरण्यं दक्षिणा, वारुणस्याश्वौ दक्षिणा च ।[2]

**द्वादश रत्नहवींषि**—उ० क० ततो द्वादशोत्तराणि रत्नहवींषि विधीयन्ते, तत्रोभयोः कल्पयोस्तेषां क्रमे महदन्तरमस्ति, तस्मात्तेषां पृथक् पृथग्विवरणमुपस्थाप्यते। का० क० अध्वर्युः प्रथमं सेनान्यो गृहे अग्नयेऽनीकवते हविर्निर्वपति। श्वोभूते बार्हस्पत्यं चरुं पुरोहितस्य गृहे, श्वोभूते तृतीयं हविरैन्द्रम् एकादशकपालं पुरोडाशं यजमानस्य गृहे, श्वोभूते चतुर्थं हविर्महिष्या गृहे अदितिदेवताकं चरुं निर्वपति। ततोऽध्वर्युः पञ्चमं वारुणं चरुं सूतस्य गृहे, षष्ठं मारुतं सप्तकपालं ग्रामण्यो गृहे, सप्तमं सावित्रमष्टाकपालं द्वादशकपालं वा क्षत्तुर्गृहे, अष्टममाश्विनं द्विकपालं संग्रहीतुर्गृहे, नवमं पौष्णं हविः भागदुघस्य गृहे, दशमं रौद्रं गावेधुकं चरुमक्षावापस्य गोविकर्त्तस्य वा गृहे, एकादशं चतुर्गृहीतमाज्यं हविः पालागलस्य गृहे निर्वपति। द्वादशं नैर्ऋतं चरुं स परिवृक्तेर्गृहे दर्व्या जुहोति।

आ० क० च अध्वर्युः प्रथमं वैश्वानरं हविः, द्वितीयं धात्रे द्वादशकपालं हविः तृतीयं यावं वारुणं चरुं च निर्वपति, ततो बार्हस्पत्यादीनि चत्वारि हवींषि, ततो अध्वर्युः भगाय चरुं वावातायां गृहे निर्वपति, वैष्णवं त्रिकपालं पुरोडाशं तक्षारथकारयोर्गृहे, गावेधुकं रौद्रं चरुमक्षावापस्य गृहे, गोविकर्त्तस्य गृहे वा निर्वपति। एकादशमाज्यं हविः कात्यायनवत् आपस्तम्बोऽपि पालाकलस्य गृहे विदधाति। तत आ० क० इष्टिः, परिवेषणम्, दक्षिणा च द्वादशरत्नहविषां विधीयन्ते ।[3] तत उ० क० श्वोभूते मैत्राबार्हस्पत्यस्य चरोर्निर्वापो विहितः ।[4]

**अभिषेचनीयकर्म**—अस्मिन् कर्मणि का० क० भार्गवो होता भवति, अन्येषां मते पूर्णे राजसूये भार्गवो होता भवति। अभिषेचनीयं कर्म

1. का० श्रौ० (१५।१।१७-३०, २।१-२०)
2. आ० श्रौ० (१८।९।३-२०-१०।१-११)
3. आ० श्रौ० (१८।१०।१२-१३)
4. का० श्रौ० (१५।३।३५-४६)

पञ्चभिरहोभिः समाप्यते, (एका दीक्षा, तिस्र उपसदः एका सुत्येति पञ्चापवर्गः) । सर्वप्रथमं यजमानः सोमं क्रीत्वा यं द्विधा कृत्वैकं भागं पर्युह्य, उपनह्य च ब्रह्मागारे निदधाति, ततोऽध्वर्युरग्नीषोमीयस्य पशुपुरोडाशस्याष्टौ देवसूहवींषि निर्वपति, तेषां क्रम एवंविधो विहितः–

प्रथमम्, प्राशुकानां व्रीहीणां सत्यप्रसवाय सवित्रे ।

द्वितीयम्, आशूनां व्रीहीणामग्नये गृहपतये ।

तृतीयं हविः, श्यामकं सोमाय वनस्पतये ।

चतुर्थं हविः, नैवारं चरुं बृहस्पतये वाचस्पतये ।

पञ्चमं हविः, हायनानां व्रीहीणाम् इन्द्राय ज्येष्ठाय ।

षष्ठं हविः, गावेधुकं चरुं रुद्राय पशुपतये ।

सप्तमं हविः, नाम्बानां (अकृष्टपच्यानां) व्रीहीणां चरुं मित्राय सत्याय ।

अष्टमं हविः, यावं चरुं वरुणाय धर्मपतये, इति ।[1]

आ० क० चैवमष्टौ देवसूवां हविषां विधानम् । अत्र कल्पे च कात्यायनवत् यजमानो अभिषेचनीयाय दशपेयाय च सोमं क्रीत्वा द्विधा करोति । उ० क० अध्वर्युर्ब्रह्मा वा राज्ञो हस्तं गृहीत्वा रत्निभ्य आवेदयति—'एष वो भरतो राजा', एष वः कुरवो राजेति, अत्र भरतादीनां ग्रहणं देशोपलक्षणार्थम् न ह्येषां शास्त्रव्यवस्था । आपस्तम्बस्तु विधानं विस्तारयति, तत्र ब्रह्मा अन्यदपि वाक्यं कथयति—'एष वो जनता राजा', 'सोमोऽस्माकं ब्राह्मणानां राजेति' च ।[2]

**अपां ग्रहणम्**—उ० क० अभिषेकार्थानामपां ग्रहणक्रमः प्रेक्षणीयः–

| क्रम० | का० श्रौ० | आ० श्रौ० |
|---|---|---|
| १. | सारस्वतीनामपां ग्रहणम् | सारस्वत्य आपः |
| २. | ऊर्मीणां ग्रहणम् | समुद्रिया आपः, पुंनदस्य वा |
| ३. | स्यन्दमानामपां ग्रहणम् | ऊर्मय आपः |
| ४. | प्रतीपं वहन्तीनामपां ग्रहणम् | प्रतीपं वहन्तीनामापः |
| ५. | अपयतीनां ग्रहणम् | अन्वीपं वहन्तीनामापः |
| ६. | नदीपतेः समुद्रस्य आपः | कूप्या आपः |

1. का० श्रौ० (१५।४।१-२१)
2. आ० श्रौ० (१८।१२)

| क्रम० | का० क० | आ० श्रौ० |
|---|---|---|
| ७. | वीचिस्थाः सूद्या आपः | प्रतीपं गच्छन्तीनामपां ग्रहणम् |
| ८. | आवर्तीया निवेष्या आपः | स्यन्दमाना आपः |
| ९. | स्थावरा आपः | परिवहतीनामपां ग्रहणम् |
| १०. | अन्तरिक्ष्याः (वर्षाकृताः) | आतपवर्ष्या आपः |
| ११. | सरस्या आपः | रूपदर्शिन्यो निर्मला आपः |
| १२. | कूप्याः आपः | स्थावरा आपः |
| १३. | हिमप्रभवा आपः | प्रुष्वा (हिमप्रभवाः) |
| १४ | मधु | गोरुल्व्याः |
| १५. | गोरुल्व्याः | पयः |
| १६. | पयः (दुग्धम्) | दधि |
| १७. | घृतम् | घृतम् |
| १८. | दधि | मधु[1] |

अभिषेकः—का० क० अध्वर्युः प्रथमं सारस्वतीरपो गृहीत्वा चतुर्गृहीतानि चाप्सु जुहोति, ततो मरीचीर्[2]गृहीत्वा पुनरासु जुहोति, एना मिश्रिता आपो महति औदुम्बरे पात्रे निनीयाध्वर्युस्ता मैत्रावरुणधिष्णस्य पुरस्तान्निदधाति, तत्रैव यजमानायाभिषेकार्थं स पालाशौदुम्बरनैयग्रोधाश्वत्थानि चत्वारि पात्राणि निदधाति, ततोऽध्वर्यु मैत्रावरुण्या पयस्यया प्रचर्य व्याघ्रचर्म स्तीर्त्वा चर्मणा पश्चाद्भागे सीसं निधाय, पार्थहोमं हुत्वा, पवित्रयोर्हिरण्यं प्रवपति । ताभ्यां पवित्राभ्यामभिषेचनीयारपो अभिपूय एना अपः पालाशादिषु चतुर्षु पूर्वोक्तेषु पात्रेषु करोति । ततोऽध्वर्युर्यजमानं तार्प्यं वासः परिधापयति, प्रतीयते यत्कात्यायनकालेऽपि तार्प्यशब्दस्य स्पष्टा व्याख्या विदिता नासीत् यत्तनैत्र आचार्येणास्य पदस्य विविधा व्याख्याः कृताः, केचित् क्षुमा अतसी तस्या विकारं क्षौममेव तार्प्यमाहुः । केचित्तु त्रिपाणमाहुः । वपनकाले उदकेन त्रिस्तार्पयित्वा यदुप्यते तत्सूत्रं तृप्यम्, तस्य विकारं तार्पम्, केचित्त्रिपाणं वल्कलमाहुः, केचित् घृतक्लिन्नं वस्त्रं तार्प्यं वदन्ति, तथा चाह ब्राह्मणम्—'तस्मिन् सर्वाणि यज्ञ-

1. का० श्रौ० (१५।४।२३-४२), आ० श्रौ० (१८।१३।१-१८)
2. सूर्यरश्मिभिर्गृतीता आपो मरीचय इत्युच्यन्ते ।

रूपाणि निष्यूतानि भवन्ति' (श० ब्रा० ५।३।५।२०), यजमानस्तार्प्य-स्योपरि पाण्डुकम्बलं निवस्ते, यज्ञसूत्रं च कण्ठे निवीतं संवेष्ट्य अधी-वास आच्छाद्य शिरस्युष्णीषं वेष्टयति, ततोऽध्वर्युर्धनुरातत्य तत्कोटिं विमृज्य यजमानाय धनुः प्रयच्छति, तिस्र इषूश्च प्रयच्छति। अस्मिन् काले यजमानो लौहायसं केशवस्यास्ये प्रविध्यति। अध्वर्युर्बाहुगृहीतं यजमानं व्याघ्रचर्मारोहयति, पार्श्वे विहितं सीसं यजमानः पदा प्रक्षि-पति, अत्रैवाध्वर्युर्यजमानस्य पादयोः परिमण्डलं सौवर्णरुक्मं निधाय तस्य शिरसि नवच्छिद्रं शतच्छिद्रं वा रुक्मं निदधाति। ततो व्याघ्र-चर्मणि स्थितं यजमानं पूर्वमध्वर्युः पुरोहितो वा पालाशेन पात्रजले-नाभिषिञ्चति, ततो द्वितीयेनौदुम्बरेण भ्राता, तृतीयेन नैयोग्रधेन पात्रेण मित्रराजन्यश्चतुर्थेनाश्वत्थेन पात्रेण वैश्यश्च राजानमभिषि-ञ्चन्ति। ततोऽध्वर्युः षट्पार्थहोमान् जुहोति।[1]

आ० क० अध्वर्युर्महति वैतसे सताख्ये पात्रे अप आनयति, तस्मिन् पात्रे शतमानं हिरण्यमवधाय तेन उत्पूय ता अपश्चतुर्षु पात्रेषु करोति। ततो अत्र कल्पे यजमानस्तार्प्यं परिधत्ते, पाण्डरमुष्णीषं च शिरसि परिवेष्टयति। ततोऽध्वर्युरेनं यजमानमेकशतेन दर्भैः पवयति। ततः स एतं दध्नि औदुम्बराणि शष्पाणि च आवपति। ततो अनुप्रदानादिकं कर्म पार्थहोमान्तं कात्यायनकल्पवत् भवति।[2]

**शौनशेपाख्यानादि**—उ० क० अभिषेकानन्तरं द्यूतान्ते वा शौनशे-पाख्यानं विधीयते।[3] अत्रैव परः शताः परःसहस्राः गाथा गीयन्ते। होताऽध्वर्युहिरण्यकशिप्वोरुपविष्टौ शौनशेपमाख्यानं प्रतिगरं च कुर्वाते। आख्यानान्ते तौ शतं शतं सहस्रं सहस्रं वा गवां लभेते। ततो यजमानस्य व्याघ्रचर्मणि त्रिविक्रमणं विधीयते। होमान्ते चाध्वर्युः यजमानस्य पितुः पुत्रस्य च नाम गृह्णाति, ततो होमादि-विधानम्।[4]

**रथयोजनादि**—तत उ० क० वाजपेयवद्रथं युक्त्वा सारथिर्दक्षिणेन मार्गेण गत्वा रथं चात्वालस्य पार्श्वे स्थापयति। यजमानं रथे चारो-

1. आ० श्रौ० (१५।४।४३-५०), १५।५)
2. का० श्रौ० (१८।१३-१५)
3. का० श्रौ० (१५।६।१-२), आ० श्रौ० (१७।१९।१०)
4. का० श्रौ० (१५।६।१।-१४, आ० श्रौ० (१८।१६।११-१६)

हयित्वा यन्ता रथं चालयति । यजमानो धनुष्कोट्या गां स्पृशति, गां गोस्वामिने दत्वा यूपं प्रतिगत्वा रथमन्तःपात्यप्रदेशे स्थापयति । तत्राध्वर्युश्च चत्वारि रथविमोचनानि जुहोति । होमान्ते यजमानो वाराह्यौ उपानहौ धारयति, ततो रथादवरुह्य यन्त्रा सह रथं रथवाहणे करोति, स रथवाहणस्य दक्षिणेऽन्ते शतमानौ (परिमण्डलौ) बध्नाति, तौ स्पृष्ट्वा ब्रह्मणे ददाति ।[1]

आ० कल्पे च रथयोजनादि पूर्वकल्पवद् भवति । एवं चान्यानि कर्माणि तेन आचार्येण विधीयन्ते ।[2]

तत आ० क० अध्वर्युस्त्रिमितं कृत्वा तस्मिन् व्याघ्रचर्मस्थाने खादिरीमासन्दीं प्रतिष्ठापयति ।[3] ततोऽध्वर्युर्यजमानं 'स्योनमासीदतेति' आसन्द्यामासाद्य तस्य हृदयमालभते । अस्मिन् काले ऋत्विजो रत्निनश्च तं यजमानं परिवार्योपविशन्ति यजमानस्य पुरस्तादध्वर्युरुपविशति, दक्षिणतो ब्रह्मा, पश्चाद्धोता, उत्तरत उद्गाता, चोपविशन्ति । सर्वेषूपविष्टेषु राजा अध्वर्युमामन्त्रयते 'त्वं ब्रह्मासीति', एवमध्वर्यु राजानं प्रत्याह, एवं राजा ब्रह्माणं होतारमुद्गातारं चाह, ते च पूर्ववत् प्रतिब्रुवन्ति ।[4]

का० क० यदा यजमान आसन्द्यामुपविष्टो भवति, तदा ऋत्विजोऽस्य पाणौ द्यूतार्थं पञ्चाक्षान् निदधति, पश्चादेनं यजमानं ते यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति । पापनिर्हरणार्थम्, ततो यजमान ऋत्विग्भ्यो वरं ददाति ।[5] आ० क० ब्रह्मा राज्ञे 'इन्द्रस्य वज्रोऽसीति' स्फ्यं प्रयच्छति[6], का० क० तु पुरोहितोऽध्वर्युर्वा अनेनैव मन्त्रेण यजमानाय स्फ्यं प्रयच्छति, यजमानो (राजा) तं स्वभ्रात्रे प्रयच्छति, सोऽपि तं सूताय ददाति, सूतः स्थपतये, स्थपतिः ग्रामण्यै, सोऽपि सजाताय तं प्रयच्छति ।[7] आ० क० राजा स्फ्यं प्रतिहिताय (प्रतीहा-

---

1. का० श्रौ० (१५।६।१५-३६)
2. आ० श्रौ० (१८।१७।१-१५, १८।१८।१-४)
3. का० श्रौ० (१५।७।१), आ० श्रौ० (१८।१८।६)
4. आ० श्रौ० (१८।१८।९-१३)
5. का० श्रौ० (१५।७।४-९)
6. आ० श्रौ० (१८।१८।१४)
7. का० श्रौ० (१५।७।११-१२)

राय-दूताय) प्रयच्छति, प्रतीहार: पुरोहिताय पुरोहित एकस्मै रत्निने, सोऽन्येभ्यो रत्निभ्यो वरिष्ठताक्रमेण प्रयच्छति, अन्ते अक्षावापस्तं स्फ्यं गृह्णाति ।[1]

**द्यूतम्**—का० क० सजातोऽनेन स्फ्येन प्रतिप्रस्थाता सहितो द्यूत-भूमिं करोति, तौ च तत्र चतुरस्रमण्डपं कुरुत: ।[2] आ० क० त्वक्षा-वापो द्यूतभूमिं करोति, स तत्र पर:—शतान् पर:सहस्रान् वाक्षान् तत्राधिदेवने निवपति ।[3] का० क० अध्वर्यु: प्रेष्यति—(द्यूतकरणाय) 'गां दीव्यध्वमिति'। ततो कृतादिद्यूतं प्रवर्तते। अत्र राज्ञे कृतादि रच्यते, सजाताय कलिर्विधीयते। अस्य सजातस्य गां सभायां ताड-यन्ति, तथा चोक्तं शतपथे—'सभायां घ्नन्ति गृहेषु हन्यन्ते' (श० ब्रा० ५।४।४।२३), अनेन ज्ञायते यतो राजसूयक्रतौ द्यूतसभायां गोस्ताडन-मात्रं भवति न हननम्। तस्याहननं तु गृहेषु भवत्येव ।[4] आ० क० चैव राजादय: षष्टौहीं गां विदीव्यन्तो द्यूतं कुर्वन्ति ।[5] उ० क० चास्य कर्मण: पूर्वाग्निवाहौ बलीवर्दौ दक्षिणा भवति ।[6] आ० क० त्वेतौ गावौ ब्रह्मणे दीयेते ।[7] द्यूतजयानन्तरं राजा मङ्गलनामान: रत्निन आह्वयति ।[7] तत: का० क० माहेन्द्रग्रहणादि प्राकृतं कर्म भवति, ततो यजमानस्तोत्रोपासनाय गच्छति ।[8] आ० क० द्यूतानन्तरं नामव्यति-षञ्जनीयौ होमौ, तत: शौनशेपमाख्यानमृचश्च गाथामिश्रा: पर:शता: पर:सहस्रा वा भवन्ति। हिरण्यकशिप्वासीनो होता शौनशेपमाख्यानं शंसति, अध्वर्युश्च स्तोत्रं गृणाति ।[9] का० क० च विकल्पेन पार्थहोमा-नन्तरं शौनशेपमाख्यानं स्तोत्रं च भवत: ।[10] आख्यानान्ते यजमानो

1. आ० श्रौ० (१८।१८।१४-१५)
2. का० श्रौ० (१५।७।१३-१४)
3. आ० श्रौ० (१८।१८।१६, १८।१९।१)
4. का० श्रौ० (१५।७।१७)
5. आ० श्रौ० (१८।१९।२)
6. का० श्रौ० (१५।७।२१)
7. आ० श्रौ० (१५।७।२३-२४)
8. आ० श्रौ० (१८।१९।५-७)
9. आ० श्रौ० (१८।१९।१०)
10. का० श्रौ० (१५।६।५)

हिरण्यकशिप्वासनं होत्रे, हिरण्यकूर्चौ रुक्मौ चाध्वर्यवे प्रयच्छति। मणीन् ब्रह्मणे च ददाति।[1] का० क० अवभृथान्ते अनूबध्यावपाहोमो विधीयते। आ० क० यजमानः स्नानं कृत्वा अप्सु, दर्भस्तम्बे, स्थाणौ, वल्मीकवप्रायां वा जुहोति, ततः सूतवशामनुबन्ध्यामालभते। निर्वपणानन्तरं तिस्रस्तिस्रो गावो दक्षिणायां दीयन्ते। तत्र स शतमानानि ब्रह्मणे, धेनुर्होत्रे, वासांस्यध्वर्यवे, गामग्नीध्रे प्रयच्छति।

तत उ० क० चैत्रशुक्लषष्ठ्यां संसृपाहवींषि भिन्नतन्त्राणि क्रियन्ते। का० क० सावित्रादीनि दश संसृपां हवींषि भवन्ति[2], आ० क० दश सप्त वा संसृपां हवींषि भवन्ति।[3]

**दशपेयम्**—आ० क० ततो दशपेयस्य तन्त्रं प्रारम्भते, का० क० अभिषेचनीयदशपेयौ एकतन्त्रौ भवतः कल्पान्तरेण भिन्नतन्त्रौ वापि भवतः। शतपथे चैवं श्रूयते।[4] कात्यायनस्तु तौ एकतन्त्रौ मन्यते।[5] तत्र कल्पे चाध्वर्युः सप्तम्यां सोममाहृत्य उपसद्देवताहवींषि च निर्वपति।[6] आ० क० दशपेये यजमानः दीक्षादि सर्वं कर्म सद्यः करोति। उपसदां पूर्वं स वैष्णवादि पुरोडाशं निर्वपति। दशपेये भार्गवो होता भवति[7], कात्यायनमते सर्वस्मिन् राजसूये भार्गवो होता भवति।

**सोमभक्षणम्**—उ० क० श्वोभूते सप्तम्यामध्वर्युर्दशाधिकान् चमसान् प्रयुनक्ति, चमसानुन्नीय दश दश ब्राह्मणा एकस्मिन् चमसे सोमं भक्षयन्ति। येषां दश पूर्वपुरुषैः सोममविच्छेदेन पीतं त एव सोमं भक्षयन्ति, पाता च तेषां दशपूर्वपुरुषाणां नामानि गृह्णाति। यजमानस्य चमसे दश क्षत्रियाः सोमं पिबन्ति।

का० क० सोमपानान्ते यजमानो हिरण्यस्रजमुद्गात्रे, रुक्मं होत्रे, हिरण्मयौ दर्पणावध्वर्युभ्याम्, अश्वं प्रस्तोत्रे, वशां मैत्रावरुणाय,

---

1. का० श्रौ० (१५।६।३)
2. आ० श्रौ० (१८।१६।९-१७), आ० श्रौ० (१५।८।१)
3. आ० श्रौ० (१९।२०।७)
4. श० ब्रा० (५।३।५।२६)
5. का० श्रौ० (१५।८।१०-१३)
6. का० श्रौ० (१५।८।१४-१५)
7. आ० श्रौ० (१८।२।१२-२३)

ऋषभं ब्राह्मणाच्छंशिने, वाससी नेष्टापोतृभ्यां यवाचितं शकटमच्छावाकाय, गां चाग्नीध्रे च ददाति।[1] आ० क० चाध्वर्य्वादीनां समाना दक्षिणा, यद्भिन्नं तदत्र संगृह्यते। तत्र कल्पे गामुन्नेत्रे, ऋषभं ग्रावस्तुते, बस्तं सुब्रह्मण्याय, नेष्ट्रे अग्नीध्रे चानड्वान् दक्षिणायां विधीयते।[2]

**पञ्चबिलसंज्ञकं हविः**–का० क० दशपेयान्ते संवत्सरपर्यन्तं दीक्षादौ केशाग्रछेदनमेव भवति न तु वपनम्। यजमानो वर्षपर्यन्तं भूमेरुपरि पादं न दधाति।[3] तत उ० क० आचार्यो पञ्चबिलसंज्ञकहविषां निर्षपणमाहतुः तानि चाग्निसोमेन्द्रविश्वेदेवमित्रावरुणेभ्यो भवन्ति। तत उ० क० बार्हस्पत्यचरुर्विधीयते। आ० क० च यजमानः ततः श्वोभूते सात्यदूतानां त्रिहविषामिष्टिं निर्वपति। तदन्ते तिसृधन्वं[4] शुष्कदृतिश्च दक्षिणा। मतान्तरेण दण्डो वाराह्यौ उपानहौ च दक्षिणा।[5]

का० क० पञ्चबिलकर्मान्ते द्वादश प्रयुग्हवींषि मासि मासि वर्षपर्यन्तमेव क्रियते।[6] आ० क० चैवं विधीयते।[7] तत उ० क० द्वौ पशुबन्धयागौ पञ्चबिलानन्तरं यजमानेन कर्त्तव्यौ।[8] तत उ० क० सोमयागा राजसूयकर्त्रा कर्त्तव्याः। कात्यायनमते तेन सर्वप्रथममतिरात्रेण यजनीयम्[9], आ० क० यजमानेन राजसूयान्ते क्रमेण व्युष्टिद्विरात्रेण, त्रिष्टोमेन, अग्निष्टोमेन च द्रष्टव्यम्।[10] का० क० व्युष्टिद्विरात्रादीनां विधानं वर्तते।[11]

---

1. का० श्रौ० (१५।८।२२-२७)
2. आ० श्रौ० (१८।२१।६-७)
3. का० श्रौ० (१५।८।२८-३०)
4. त्रिभिर्धनुभिः समा भूमिस्तिसृधन्वम्।
5. आ० श्रौ० (१८।२१।११-१७)
6. का० श्रौ० (१५।६।५-११)
7. आ० श्रौ० (१८।२२।५,७)
8. का० श्रौ० (१५।६।१७-१६)
9. का० श्रौ० (१५।६।२०)
10. आ० श्रौ० (१८।२२।१२-२१)
11. का० श्रौ० (१५।६।२१-२७)

# २. अश्वमेधः

**महिमा**—अश्वमेधस्य संहितासु ब्राह्मणग्रन्थेषु च अतीव महिमा कथिता।[1] डा० सत्यप्रकाशस्य मते वेदसंहितासु अश्वमेधशब्दो यज्ञस्याभिधायको नास्ति।[2] लोके अश्वपशुः सूर्यस्य प्रतिनिधिरस्ति—'प्रजापतिर्वै देवानां वीर्यवत्तमो वीर्यमेवास्मिन् दधाति, तस्मादश्वः पशूनां वीर्यवत्तमः।' तस्मादश्व पशूनामोजस्वितमः पशूनामाशिष्ठः।'[3] सोऽयमश्वो मन्त्रेषु बहुभिर्नामभिः कथ्यते—'विभूर्मात्रा प्रभू पित्राऽश्वोऽसि। हयोऽसि अत्योऽसि मयोऽसि। अर्वासि सप्तिरसि वाज्यसि

1. 'राजा वा एष यज्ञानां यदश्वमेधः' (श० ब्रा० १३।२।२।१), 'सर्वे कामा अश्वमेधे सर्वान् देवान् प्रीत्वा सर्वान् कामानाप्नोति षोडशकलं वा इदं सर्वमश्वमेधः······सर्वस्याप्त्यै सर्वस्यावरुद्ध्यैः ······।' (श० ब्रा० १३।५।१।१४-१५)

   'यो अश्वमेधेन यजते सर्व एव भवति, सर्वस्य वा एषा प्रायश्चित्तिः, सर्वस्य भेषजं सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन् सर्वं पाप्मानं तरति।' (तै० सं० ५।३।१२२)।

2. The Samhitas do not refer to this rite, the word in the sense of the horse sacrifice does not occur in the Samhitas (Int. S. B. p. 415)

   ऋग्वेद अश्वमेधनाम्नो राज्ञो दानस्तुतय उपलभ्यन्ते—'यो म इति प्रवोचत्यश्वमेधाय सूरये। ददहचा सनिं यते ददन्मेधामृतायते। अश्वमेधस्य दानाः सोमा इव त्र्याशिरः॥ इन्द्राग्नी शतदाव्यनश्वमेधे सुवीर्यम्। क्षत्रं धारयत बृहद्दिवि सूर्यमिवाजिरम्॥ (ऋ० ५।२७।४-६)

   ऋग्वेदस्य प्रथमे मण्डले द्वे सूक्ते स्तः, ते चोभे अश्वमेधयज्ञे विनियुज्येते, तयोः सूक्तयोर्द्रष्टा दीर्घतमा मामतेय ऋषिरासीत्, विदुषां मते सूक्तयोरनयोः सूर्यस्य ब्रह्माण्डस्य वा विज्ञानं वर्तते, यथा—'चतुस्त्रिंशत् वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य समेति' मन्त्रे सप्तविंशतिर्नक्षत्राणि सप्तग्रहाश्चोच्यन्ते, ब्रह्माण्डे च अश्वात्मकः सूर्यो धावति—'असौ वा आदित्य एषोऽश्वः।' (श० ब्रा०)

3. श० ब्रा० (६।३।३।१०)

वृषासि नृमणाऽसि ययुर्नामासि शिशुर्नामासि ।'[1] तस्यादश्वमेधः सर्वेषु यज्ञेषु महत्तमः प्रशस्यतमो वरिष्ठश्चोच्यते।

**अनुष्ठानकाल**:—अश्वमेधस्य सोमयागत्वेऽप्यस्याश्वस्य सवनीय-पशुत्वादश्वमेध इति संज्ञा प्रसिद्धा। अश्वमेधयागकरणे मूर्धाभिषिक्तः सार्वभौमो राजेवाधिकारी भवति। का० क० फाल्गुनशुक्लनवम्यामष्टम्यां वा ग्रीष्मे वा तस्यारम्भो विधीयते।[2] तस्या पुरस्तात्षडहे सप्ताहे वा ऋत्विजः समायन्ति। आ० क० चित्रानक्षत्रे तस्यारम्भो विधीयते।[3]

**ब्रह्मौदनः**—का० क० यजमानश्चतुर्षु पात्रेषु ब्रह्मौदनं पचति, एनमोदनं स सर्पिषोपसिच्य चतुर्भ्यो महर्त्विग्भ्य आशयति। भोजनान्ते प्रत्यृत्विजं सहस्रं गवां शतमानं च ददाति।[4]

आ० क० यजमान ऋषभालम्भनानन्तरं वैशाख्यामामावस्यायां रथादिभिर्महर्त्विज आनयति, तथा चेतरान् प्रत्यहमानयति आसुब्रह्मण्येभ्यः। यजमानो देवयजनं गत्वा तत्र केशश्मश्रु वापयते, दतो धावते, स्नाति, अहतं वासः परिधत्ते, वाचं संयम्य चोपवसति। रात्रौ एनं जागरयन्ति, ऋत्विजो रात्रिमग्निहोत्रं हुत्वा चतसृभ्यो दिग्भ्य अपः समाहृत्य तास्वप्सु ब्रह्मौदनं पच्यते। का० क० चेदं विधानमेतावता विस्तरेण नास्ति। तथा च आ० क० भोजनपात्रे राजतं रुक्मं निधाय तस्मिन् पात्रे ब्रह्मौदनमुद्धृत्य प्रभूतेन घृतेनोपसिच्य सौवर्णं रुक्ममुपरिष्टात्कृत्वा चतुर्भ्य आर्षेभ्यो महर्त्विग्भ्यश्चोपहरति। प्राशितवद्भ्यो महर्त्विग्भ्यः सहस्रं सहस्रं सौवर्णानां निष्कानां दक्षिणा तथा च प्रत्येकम् अश्वतरीरथं हिरण्यं राजतं च रुक्मौ च प्रयच्छति।[5] तत उ० क० द्वादशारत्निं त्रयोदशारत्निं वा रसनां ब्रह्मौदनोच्छेषेण घृतेनाध्वर्युरनक्ति।[6] अत्राध्वर्युश्चतुःसौवर्णान् निष्कान् यजमाने प्रति-

1. शु० यजु० (२२।१९)
2. का० श्रौ० (२०।१।२-३), तथा च ब्राह्मणम्—'या असौ फाल्गुनी पौर्णमासी भवतीति' (श० ब्रा० १३।४।१।४)
3. आ० श्रौ० (२०।१ १-२)
4. का० श्रौ० (२०।१।४-६)
5. आ० श्रौ० (२०।१।६-१७)
6. का० श्रौ० (२०।१।७), आ० श्रौ० (२०।२।८)

मुञ्चति। वरदानपर्यन्तं यजमानो वाचं यच्छति। ततश्चतस्रो राजपत्न्योऽलङ्कृता निष्किण्यो अनुचरीशतेन सार्धं समागच्छन्ति। ता भवन्ति महिषी, वावाता, परिवृक्ती, पालागली च। यजमानो वावातायाः ऊर्वन्तरे ब्रह्मचारी भूत्वा शेते। उ० क० यजमानः प्रातर्होमं कृत्वा वरं ददाति।

**मेध्याश्वः**—आपस्तम्बो मेध्यस्याश्वस्य वर्णान् समाम्नाति–'कृष्णः, श्वेतः पिशङ्गः, सारङ्गो अरुणपिशङ्गो यस्य वा श्वेतस्याल्पं कृष्णाङ्गं स्यात्तमालभते।[1] कात्यायनोऽप्येवं विदधाति।[2] उ० क० 'देवस्य त्वेति' मन्त्रेणाध्वर्यू रशनामादाय 'ब्रह्मन्नश्वं मेध्यं भन्त्स्यामी'ति ब्रह्मणानुज्ञातोऽध्वर्युरश्वं बध्नाति।[3] उ० क० बहुविधबद्धं चतुरक्षं श्वानं यजमानस्य पितुरनुजायाः पुत्रो अश्वस्य पुरस्तान्नयति मातुरनुजायाः पुत्रः पश्चान्नयति, ततः प्रेषित आयोगवः पुंश्चलूः पौंश्चलेयो वा सैध्रकमुसलेन श्वानं हन्ति, तमश्वं शुना सह जले प्लावयति, आयोगवः श्वानं हन्ति, अश्वमग्निसमीपमानीयाध्वर्युर्जुहोति। ततो वरत्रया विबद्धमैषीकं समूहमानयन्ति, तस्मिन्नार्द्रा वेतसशाखोपसम्बद्धा भवन्ति, तं द्वे शते, दक्षिणतो धारयन्ति, द्वे शते उत्तरतो धारयन्ति। तेनाश्वं पुरस्तात्प्रत्यञ्चमभ्युदूहन्ति।[4]

**अश्वप्रोक्षणादि**—उ० क० अश्वपोक्षणे यजमानो द्वादशकपालान्निर्वपति, ततः प्रयाजेषु वीणागाथी ब्राह्मणो यज्ञदानयुक्ताः स्वयंकृतास्तिस्रो गाथा गायति। राजन्यश्च धृतिषु युद्धजययुक्ता गाथा गायति। ततोऽध्वर्युयजमानौ अश्वस्य दक्षिणे कर्णे जपतः—'विभूर्मात्रेति।' ततोऽश्वं शतानामश्वानां मध्ये चोत्सृजन्ति, ततोऽध्वर्युरश्वस्य रक्षिण आदिशति। ते च रक्षिणो भवन्ति—शतं राजपुत्राः, शतं राजन्यपुत्राः, शतं सूतग्रामणीनां पुत्राः, शतं क्षत्तृसंग्रहीतॄणां पुत्राः, ते च कवचिनो निषङ्गिणो दण्डिनो भूत्वा तमश्वं रक्षन्ति।[5] आ० क० शतं राजपुत्राः सन्नद्धाः सन्नद्धसारथिनः शतमुग्रा अराजानः सन्नद्धाः

1. आ० श्रौ० (२०।२।९-१०)
2. का० श्रौ० (२०।१।३०-३६)
3. का० श्रौ० (२०।१।२७-२८), आ० श्रौ० (२०।३।३)
4. का० श्रौ० (२०।२।१-५), आ० श्रौ० (२०।३।६-१९)
5. का० श्रौ० (२०।२।६-१७)

सन्नद्धसारथिनः, शतं वैश्या विपथिनः शतं शूद्रा वसूथिनो विहिताः।[1] उ० क० तेषां सर्वेषां रक्षिणां रथकारकुले वसितिर्विहिता। आ० क० त्वत्र सवित्रे प्रातरष्टाकपालं पुरोडाशं निर्वपति, का० क० त्वश्वप्रोक्षणकाले द्वादशकपालं पुरोडाशं निर्वपति।[2] आ० क० च होमानन्तरं वीणागाथी 'अरदा' इति, 'अजयथा' इति, 'अपच' इति, तिस्रो गाथा गायति। ततो अत्र कल्पे द्वादशकपालनिर्वपणमुक्तम्।[3]

**पारिप्लवोपाख्यानम्**—उ० क० होता हिरण्यकशिपावुपविशति, तस्य दक्षिणपार्श्वे हिरण्यकशिप्वोर्ब्रह्मा यजमानश्चोपविशतः पुरस्तादध्वर्युर्हिरण्यकूर्चे चोपविशति। का० क० केवलं पारिप्लवस्य कथनं वर्तते, आ० क० होता पारिप्लवं मौर्वमन्यं चाख्याने कथयति। उ० क० वीणागणकिनः, सायं धृतिषु हूयमानासु 'अजिना' इति, अयुध्यथा' इति, 'अमुं संग्राममहन्नि'ति तिस्रो गाथा गायन्ति। संवत्सरपर्यन्तं गाथागानं पारिप्लवोपाख्यानं च भवतः।[4] आ० क० त्रिंशन्मासानां एष संवत्सरो भवति।[5] का० क० वीणागाथिभ्यां प्रत्येकं गवां शतं दक्षिणा, आ० क० शतमनोयुक्तं द्वे शते चानोयुक्ते गवां (बलीवर्दानां) दक्षिणा च विहिता।[6]

**दीक्षादि**—कात्यायनमतेन चैत्र्यां पूर्णिमायामुखासम्भरणमिष्टकापशुश्च भवति। तस्मिन्नेव दिवसे दीक्षणीयेष्टिमारभ्य षट्सु दिनेषु सप्तमीमिष्टिं समापयते। तत्रेष्टौ अग्निके हविषी, वैश्वानरो द्वादशकपालः पुरोडाशः, आदित्यश्चरुश्च भवतः, ततोऽध्वर्युश्चत्वारि औद्ग्रभणानि आध्वरिकाणि च जुहोति।[7] आपस्तम्बेनात्रेदं वाजसनेयकं मतमुदाहृतम्—'सप्तम्यामाग्निक्या त्रिहविषेति वाजसनेयकम्।' तत

1. आ० श्रौ० (२०।४)
2. का० श्रौ० (२०।२।६)
3. आ० श्रौ० (२०।५।६)
4. 'षट्त्रिंशतं दशाहन्याचष्टे' (श० ब्रा० १३।४।३।१५)
(का० श्रौ० २०।३।१-५)
5. आ० श्रौ० (२०।७।४)
6. का० श्रौ० (२०।३।७), आ० श्रौ० (२०।७।५-६)
7. का० श्रौ० (२०।४।७), आ० श्रौ० (२०।८।११)

उ० क० यजमान ऋतुदीक्षाभिः कृष्णाजिनमारोहति तत्र यजमानः 'आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामिति' जातमुख्यमग्निमुपतिष्ठते, अत्रैव विसृष्टवाचि यजमाने वीणागणिकानां दैव्यं गाथागानं भवति ।[1]

**यूपादिः**—का० क० दीक्षामारभ्य द्वादशसु दिनेषु वैशाखशुक्लतृतीयापर्यन्तं द्वादश सुत्याः समापनीयाः, यत्र नित्योदकं तत्र प्राच्यां दिशि आद्येऽग्नौ सार्धसप्तपुरुषप्रमाणं देवयजनं क्रियते । तद्देवयजनं द्विगुणं त्रिगुणं वा भवितुमर्हति, तत्रैव एकविंशतिः यूपाः क्रियन्ते, ते सर्वे यूपा चैकविंशत्यरत्नयो भवन्ति, सर्वेषां मध्ये राज्जुदालाख्यो यूपो भवति, ततो अभिन्नौ पैतुदारवौ यूपौ स्थापनीयौ, तदनन्तरं षट् षड् बैल्वखादिरपालाशा यूपा भवन्ति, तेषां मध्ये त्रयस्त्रयो यूपा अभित उभयोः पार्श्वयोर्भवन्ति । प्रतियूपमग्नीषोमीया एकविंशतिः पशवो नियुज्यन्ते, द्वयोर्यूपयोरेकादशिन्योः सवनीयाः पशवो विनियुज्यन्ते, मध्यमे यूपे अग्नियौ पशू, उत्तरयोरपि यूपयोरेकादशिन्योः सवनीयाः पशवो भवन्ति ।[2] आ० क० चैवं यूपादिविधानं कृतम् ।[3]

**दक्षिणाविधानम्**—उ० क० दिक्षु यद्द्रव्यं यजमानेन विजितं तत् समशः प्रतिविभज्य महर्त्विग्भ्यो ददाति । का० क० प्राचीं दिशं यजमानो होत्रे ददाति, दक्षिणां दिशं ब्रह्मणे, प्रतीचीं दिशमध्वर्यवे, उदीचीं दिशमुद्गात्रे ददाति । आ० कल्पोऽत्र किञ्चिद् विभिद्यते, तन्मते प्राचीमध्वर्यवे, दक्षिणां ब्रह्मणे, प्रतीचीं होत्रे, उदीचीमुद्गात्रे ददाति, अपि वा प्राचीं होत्रे, प्रतीचीमध्वर्यवे ददाति, तथा च आ० क० 'महिषीं' ब्रह्मणे, वावाता होत्रे, परिवृत्तीमुद्गात्रे, पालागलीमध्वर्यवे च ददाति ।'[4]

**होमभक्षौ**—का० क० तृतीयसवन उक्थ्यं त्रेधं विभज्य गृह्णाति, ततो होमभक्षौ भवतः । ततः सर्वरात्रमाज्यसक्तुधानलाजानामेकैकमध्वर्युर्जुहोति ।[5] आ० क० संस्थितेऽहन्यभित आहवनीयं षट्त्रिंशतमाश्व-

1. आ० श्रौ० (२०।८।१२-१७)
2. का० श्रौ० (२०।४।१३-२६)
3. आ० श्रौ० (२०।८।६-१३)
4. आ० श्रौ० (२०।१०।१)
5. का० श्रौ० (२०।४।२६-३४)

त्थानुपतल्पान् खनति, निम्लोचत्यादित्ये षट्त्रिंशतमध्वर्युरुपतल्पान-धिरुह्य खादिरैः स्रुवैः सर्वरात्रमन्नहोमाञ्जुहोत्यध्वर्युः। आ० क० तानि चान्नाति सन्ति—आज्यं मधु तण्डुलाः पृथुकाः लाजाः करम्भा धानाः सक्तवः मसूस्यानि प्रियङ्गवश्च। ततो मन्त्रपूर्वकं सर्वरात्रहोमो विधीयते।[1]

**अश्वस्यालङ्करणम्**—का० क० रात्रिहोमानन्तरम् अध्वर्युः सौवर्णेन राजतेन च पात्राभ्यां महिमानौ ग्रहौ गृह्णाति। तत ऋत्विगादयो बहिष्पवमानस्तोत्रार्थं सर्पन्ति। ततोऽध्वर्युरेकादशिनीः पशूनुपाकृत्य होतारं प्रेष्यति, ततो होता 'यदक्रन्दः प्रथमं जायमान' इति सूक्तेनाश्वमभिष्टौति, ततो मेध्यमश्वं रथे युनक्ति, इतरानपि त्रीनश्वान् च रथे विनियुज्य सर्वानश्वान् सौवर्णालङ्कारैर्विभूषयन्ति, ततो रथे अध्वर्युयजमानावुपविश्याश्वान् प्रधावयतः, तेषु जले प्रविष्टेषु विमुक्तं मेध्यमश्वं महिषी वावाता, परिवृक्ती चाज्येनाभ्यञ्जन्ति। अञ्जनादि तु प्रत्यागत्य देवयजने भवति। ततो महिषी 'भूरिति' अपतमानान् मणीन् शिरोवालेषु, 'भुव' इति वावाता ग्रीवावालेषु, परिवृक्ती च पुच्छवालेषु च मणीन् प्रवयन्ति, एवं ता एकाधिकान् शतं मणीन् प्रवयन्ति। ततोऽध्वर्युरश्वाय रात्रिहुतशेषं प्रयच्छति—लाजी इच्छाची इनिति' यद्यश्वो हुतशेषं न खादति तर्हि तमप्सु प्रवाहयति। ततो ब्रह्मोद्यं[2] भवति।[3] आ० क० सहस्रं सहस्रं मणीन् सौवर्णान् राजतान् सामुद्रान् च वालेषु पूर्वकल्पवत् प्रवयन्ति। अत्र कल्पे कुमार्यः शङ्खमणीन् तस्याश्वस्य शरीरे उपग्रन्थन्ति। ततो महिषी गौल्गुल्वेनाश्वाङ्गमभ्यनक्ति, वावाता कासाम्बवेनाभ्यनक्ति, परिवृक्ती मौस्ताकृतेनानक्ति। ततो रथे चतुर्णामश्वानां पूर्ववद् नियोजनं भवति। हुतशेषप्रदानादि च पूर्वकल्पवदेव विधीयते।[4]

**पशुनियोजनम्**—का० क० एकादशिनीरुपाकृत्य अश्वमुपाकरोति, तत एकविंशतियूपेषु द्वावेकादशिन्यौ पूर्ववन्नियुज्य अश्वतूपरगोमृगान्

---

1. आ० श्रौ० (२०।१०।१२)
2. 'कः स्विदेशकाकी चरतीति', 'सूर्य एकाकी चरतीति' वाक्योवाक्यविद्या' ब्रह्मोद्यमुच्यते।
3. का० श्रौ० (२०।५।१-२२)
4. आ० श्रौ० (२०।१३।१४)

अग्निष्ठे राज्जुदाले यूपे नियुञ्जन्ति, अश्वस्य ललाटादिषु चाङ्गेषु द्वादश पशवो नियुज्यन्ते, ते पशवः पर्यङ्ग्या इत्युच्यन्ते। सर्वासु यजुर्वेदीयसंहितासु अश्वमेधीयपशुनियोजनं विस्तरेण प्रोक्तम्, कल्पसूत्रकारैः स्वसंहितातः समुद्धृत्य स्वस्मिन् स्वस्मिन् श्रौतसूत्रे विनिवेशितम्। तदत्र सारेण कथ्यते पशुनियोजनार्थं चाश्वस्य शरीरं सर्वमपि रज्जुभिर्वेष्टयित्वा तत्तत्स्थानगतायां रज्ज्वां पशूनुपायेन बध्नन्ति। तस्यायं क्रमो विहितः—आग्नेयं कृष्णग्रीवं ललाटे, हन्वोरधस्तात् सारस्वतीं मेषीम्, आश्विनौ बाह्वोः, सौमापौष्णं श्यामं नाभ्याम्, पार्श्वयोः सौर्यं श्वेतम्, यमदेवत्यं कृष्णम् च। पश्चात्पादयोस्त्वाष्ट्रो लोमशावजौ, वायव्यैन्द्रवैष्णवान् पुच्छे, श्देतवेहद्वामनानिति। इमे पशवोऽश्वतूपणो'—मृगैः सहिताः पञ्चदश सम्पद्यन्ते, पूर्वाभ्यामाग्नेयाभ्यां सह सप्तदश मध्यमे यूपे बध्यन्ते। इतरेषु विंशतियूपेषु रोहितादयः पञ्चदश पशवो नियुज्यन्ते, पूर्वमेकादशिन्या एकैकः पशुर्बद्धो मिलित्वा एकस्मिन् यूपे षोडश षोडश पशवः सम्पद्यन्ते। एवं सर्वे मिलित्वा ३३७ पशवो भवन्ति। एते ग्राम्याः पशव उक्ताः। अथारण्याः पशवो यूपान्तरालेषु नियोक्तव्याः। तान् कपिञ्जलादीन् पृषतान्तांस्त्रयोदशान् त्रयोदशानारण्यान् यूपान्तरालेषु पञ्जरादिषु धारयन्ति ('त्रयोदशानाकाशेष्वालभते' श० ब्रा० १३।५।१।१५), अत्र २२ एकादशिन्याः, ३२७ अश्वादयः, २५० कपिञ्जलादयो मिलित्वा ६०९ पशवो भवन्ति, तथा चोक्तम्—

षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य यज्ञस्य नवभिरधिकानि च॥

आ० कल्पेऽपि प्रायेण एवं प्रकारेण पशुनियोजनमुक्तम्। आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे, पौष्णं नाभौ, ऐन्द्रापौष्णमुपरिष्टाद् गीवासु, आग्नेयौ कृष्णग्रीवौ बाह्वोः, लोमशसक्थ्योस्त्वाष्ट्रौ सक्थ्यौ, शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे, सौर्ययामौ श्वेतं कृष्णं च पार्श्वयोर्बध्नन्ति। आ० कल्पे रोहितो धूम्ररोहित इति नव नव ऐन्द्राग्नदशमानेके समामनन्ति, एवं नव नवाण्यान् स विदधाति, का० कल्पे त्वेते त्रयोदश त्रयोदश यूपान्तरालेषु विधीयन्ते। आपस्तम्बस्तु कल्पं बहुविस्तारयति—यथा—'वसन्ताय कपिञ्जलानामालभन्ते ग्रीष्माय कलविङ्ककान् वर्षाभ्यस्तित्तिरान्' इत्यादि।

**संज्ञपनम्**—का० क० यूपपशुनियोजनानन्तरं 'अद्भ्यस्त्वौषधीभ्य' इति प्राकृतेन मन्त्रेण 'वायुष्ट्वा पचतैरिति आरभ्य' तत्र त्वा देवः सविता दधात्वित्यन्तेन कण्डिकाचतुष्टयान्तकेन वैकृतिकेनाश्वमेधिकेन मन्त्रगणेन अश्वप्रोक्षणं भवति। 'अपां पेरुरिति' मन्त्रेण अश्वस्य मुखे अपः पाययति। ततः कपिञ्जनादीनुत्सृजते। ततोऽश्वस्य संज्ञपनार्थं तृणान्यास्तीर्य तेषामुपरि आस्तरणं तस्योपरि अधिवासः तस्योपरि हिरण्यं निदधाति, एतेषूपरिशमितारः संज्ञपनं कुर्वन्ति। ततोऽध्वर्युः परिपशव्ये हुत्वा पुनः तिस्र आहुतीर्जुहोति, अध्वर्युः पत्नीर्वाचयति—'नमस्तेऽम्बे' इति, ततोऽश्वं त्रिस्त्रिः परियन्ति। पत्न्यो 'गणानां प्रियाणां निधीनामिति' (शु० य० २३।१९) पितृयज्ञवत्पक्षिणां परियन्ति। ततः शोधितेषु पशुषु महिषी अश्वस्य समीपे शेते, ततो अश्वमहिष्योरुपरि वस्त्रमाच्छादयति। ततः सा स्वयमेव अश्वस्य शिश्नमात्मनो योनिप्रदेशे स्थापयति, (श० ब्रा० १३।५।२।२), 'वृषा वाजीति' (शु० य० २३।२०), मन्त्रेण। एतस्मिन् काले अध्वर्युर्ब्रह्मोद्गातृहोतृक्षत्तारः कुमारपत्नीभिस्सह संवदन्ते 'यकासकाविति' (शु० य० २३।२२–३१)। ततस्ता महिषीमुत्थापयन्ति, उत्थापनं त्वनुचरीकर्त्तृकं यथा शातपथी श्रुतिः (१३।५।२।९)।[1]

आ० क० चैवंविधानि प्रोक्षणपानादीनि कर्माणि विधीयन्ते। 'मेषस्त्वा पचतैरिति पर्यग्निकरणम् ततोऽपाव्यानि जुहोत्यध्वर्युः आख्यानुत्सृज्य अश्वस्य पुरो अजो नीयते। संज्ञपनादि च पूर्वकल्पवत् भवति। संज्ञप्यमाने संज्ञप्ते वा अश्वे अध्वर्युराहुतीर्जुहोति, वाजसनेयिन एते आहुती 'परिपशव्ये' इति कथयन्ति। ततः परिक्रमणादि कर्म पूर्ववत् विधीयते। महिषीशयनं चात्र कल्पेऽपि यथावत् भवति।[2]

**सूचीछेदनम्**—उ० क० तिस्रः स्नाताः पत्न्यो 'गायत्री त्रिष्टुबिति' द्वाभ्यामृग्भ्यां सूचीभिरश्वस्य शरीरे असिपथान् कल्पयन्ति। उ० क० तास्सूच्यो लौहीराजतीसौवर्ण्यो भवन्ति। महिषी सौवर्णसूचिभिः, वावाता राजतसूचीभिः परिवृक्ती च लौहीभिः सीसाभिर्वा सूचीभिरश्वं छिन्दन्ति। ततः सौवर्णासिना अश्वशरीरं छिद्यते। इतरेषां पशूनाम् आयसा असयश्छेदनाय भवन्ति। उ० क० अध्वर्यु रश्वस्योदरं पाटयति

1. का० श्रौ० (२०।६।२१)
2. आ० श्रौ० (२०।१७,२०।१८।१-७)

'कस्त्वाछ्यतीति' अनुवाकेन। आपस्तम्बमते 'नाश्वस्य वपा विद्यते' (२०।१८।११), तस्मिन् शरीरे तु चन्द्रं नाम मेदो भवति तदुद्धरति सोऽध्वर्युः। कात्यायनोऽप्येवमाह।[1] ततो अश्वस्य शोणितश्रपणं होमो हविः प्रचरणं च भवन्ति।

**ब्रह्मोद्यम्**—प्राग्वपाहोमाद्धोताऽध्वर्युश्च ब्रह्मोद्यं वदतः, ततो ब्रह्मोद्गातारौ उत्तराभिर्ऋग्भिः संवदतः। ततो होताऽध्वर्युश्च संवदतः, ततो यजमानोऽध्वर्युश्च संवदतः।[2]

**वपाहोमः**—ब्रह्मोद्यानन्तरं वपाप्रचारो भवति, सर्वेषां पशूनां वपाभिरध्वर्युः प्रचरति। ते पशवो गोतूपरमेषाश्च भवन्ति। वपाहोमान्ते द्वितीयेन महिम्ना स जुहोति। अश्वस्य मांसादीनां शूलेः च श्रपयति। का० क० अध्वर्युस्त्वगन्तानि अश्वाङ्गानि चतुर्गृहीतमाज्यं गृहीत्वा जुहोति, अग्नये च हृदयं जुहोति। तदनन्तरं स्विष्टकृदन्ते अग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति यथाऽवत्तं जुहोति। गोमृगकण्ठेन अश्वशफेन अयस्मयेन चरुणा च स तिस्र आहुतीर्जुहोति। ततः सर्वस्तोमादयो विकल्पेन भवन्ति।[3] आ० क० चैवं गोमृगकण्ठादिभिरेव तिस्र आहुतयो हूयन्ते। पत्नीसंयाजान्ते। तदहः समाप्यते। कात्यायनेन त्वत्र अष्टौ विकल्पा उक्ताः, आपस्तम्बेनात्र तान् नाह। तन्मते अत्रोत्तरेऽहनि गव्यानेकादशिन आलभन्ते, प्राजापत्यान् वैश्वदेवान् वा। द्वादशमृषभं तूपरं वा सर्वरूपमुपालब्धव्यम्। का० क० तु चतुर्विंशतिपरमाः पशव आलब्धव्या भवन्ति।

**अवभृथेष्टिः**—उ० क० आलम्भनानन्तरमृत्विग्यजमाना अवभृथेष्टिं कुर्वन्ति। का० क० ततोऽध्वर्युः पिङ्गाक्षखलतिदन्तुरातिगौरवर्णानामन्यतमस्य नरस्य मूर्धनि जुहोति—'जुम्बकाय स्वाहेति' (शु० य० २५।९), कात्यायनमते अश्वमेधस्य नानावभृथानि भवन्ति, ऋजीषकुम्भस्य मज्जनान्ते ह्येवम् अवभृथो भवति। तदेव प्राधान्येन अवभृथमुच्यते। अवभृथान्ते यजमान उन्मुक्तदीक्षो भवति। आपस्तम्बविधानं च कात्यायनविधानमनुवदते। केवलं शब्दानुपूर्वी भिन्ना। यथा आ० क०

1. 'मेदोऽस्योद्धरन्ति वपार्थे' (का० श्रौ० २०।६।७)

3. का० श्रौ० (२०।८।४-१५)

3. का० श्रौ० (२०।८।४-१५)

अवभृथान्ते अध्वर्युरात्रेयशिपिविष्टिखलतिविक्लिकधशुक्लपिङ्गाक्षतिल-कावलानामन्यतमस्य मूर्धनि जुहोति—'मृत्यवे स्वाहा' 'भ्रूणहत्यायै स्वाहा', 'जुम्बकाय स्वाहेति', ते खलत्यादयो होमेन पूता भवन्ति।

**दक्षिणादिविधानम्**—का० क० अश्वमेधान्ते यजमानो दक्षिणायां यथासंवादं सानुचरीं भार्यामृत्विजे ददाति। स पालागलीं कुमारीम-ध्वर्यवे ददाति। कल्पान्तरेण भार्या न दीयते, अनुचरीरेव दद्यात्। इतिहासपुराणाभ्यायां चैतद् मतं दृढ़ीभवति, इतिहासे भार्यादानं न केनचित् श्रूयते, राजसूययाजिना हरिश्चन्द्रेण स्वभार्या शैव्या विक्रीता, एतस्य वृत्तस्य प्रामाणिकता चापि विवादग्रस्ता अस्ति।

आ० क० आत्रेयपुरुषाय दक्षिणाविधानमपि कृतम् तच्च का० क० नास्ति। आ० क० तस्मै यजमानः शतमनोयुक्तं शते चानोयुक्ते वा गवां ददाति।

ततः का० क० एकविंशतिरनुबन्ध्या आलभ्यन्ते। आ० क० तेषां नव श्वेता वशा अनुबन्ध्या भवन्ति। तत्र कल्पे द्वयोर्द्वयोर्मासयोर्यजमानः पशुबन्धेनापि यजते।[1]

## ३. पुरुषमेधः

**पुरुषमेधस्यैतिह्यम्**—पुरा समानवाः पञ्च पशव आलम्भनीया आसन्—एतान् (पञ्चपशून्) प्रजापतिः प्रथमं आलेभे श्यापर्णः सांका-यनो अन्तमोऽथ······।' (श० ब्रा० ६।२।१।३७)।[2] डा० सत्यप्रकाशस्य मते मन्त्रसंहितासु पुरुषबलेर्वर्णनं न विद्यते।[3] ऐतरेयब्राह्मणोक्तेन

---

1. आ० श्रौ० (२०।२२।५-१४, २०।२३)

2. शतपथस्य मतेनैव सर्वप्रथमं नारायणः पुरुषमेधं कृतवान्—'पुरुषो ह नारायणोऽकामयत अतितिष्ठेयं······स एतं पुरुषमेधं पञ्चरात्रं यज्ञ-क्रतुमपश्यत् तमाहरत्।' (श० ब्रा० १३।६।१।१)

3. The human sacrifice as a ritual form is not alluded to in the Samhita (कृष्णयजुर्वेद) as Keith, says, but the Taittiriya Brahman (III–4) enumerates the symbolic vide as does Vajasaneya Samhita (XXX), In fact, there is nothing in Samhitas which justifies the performance of a bali ceremony. the whole of the

शौनःशेपाख्यानेनापि विज्ञायते यत् शुनःशेपस्य बलिर्न बभूव ।[1] उत्तर-कालेचापि पुरुषबलिर्न श्रूयते ।

**विधानम्**—उ० क० पुरुषमेधो ब्राह्मणराजन्यकर्तृकस्त्रयोविंशति-दीक्षो द्वादशोपसत्कः पञ्चसुत्याकश्चत्वारिंशद्दिनसाध्यः । चैत्रशुक्ल-दशम्यामस्यारम्भः । उ० क० अत्रैका दशयूपा अग्नीषोमीया भवन्ति, सुत्यासु प्रथमपञ्चमे अहनी अग्निष्टोमसंस्थे, द्वितीयचतुर्थे उक्थ्यसंस्थे, तृतीयमतिरात्रसंस्थम्, सुत्यासु प्रतिदिनमेकादशिनः पशवः आलम्भ-नीयाः तावन्तोऽग्नीषोमीयाः पशवो मध्ये यूपे आलम्भन्ते । ततो होमादि प्रवर्तते ।[2] आ० क० पुरुषमेधे पञ्चशारदीयवदहानि भवन्ति । उ० क० प्रायेण समानं विधानं वर्तते । तृतीयेऽतिरात्रसंस्थेऽहनि मध्यमे यूपे ब्राह्मणादीनष्टचत्वारिंशत्संख्यकान् संहितोक्तान्[3] पुरुषान् नियुज्य, इतरेषु दशसु यूपेषु एकादशैकादशपुरुषांश्च नियुनक्ति, अत्र द्वितीये यूपे सप्तत्रिंशत्पुरुषा नियुज्यन्ते । सर्वे मिलित्वा १८४ पुरुषाः संबद्धाः क्रियन्ते । उ० क० बन्धनानन्तरं पुरुषसूक्तेन यजमानः सर्वानुपतिष्ठते । पर्यग्निकृतान् सर्वान् पुरुषान् कपिञ्जलादिवदुत्सृजते, ततो होमः क्रियते । उ० क० पुरुषमेधान्ते अश्वमेधवद्दक्षिणा विधीयते, यदि ब्राह्मणो यजते स सर्वस्वं ददाति । ततः पशूनालभ्य उ० क० यजमान आत्मनो अग्नी समारोप्य उत्तरनारायणसूक्तेन सूर्यमुपस्थाय पश्चादनवलोक-

---

chapter is devoted to the description of human well-developed society which includes people of numerous professions. The enumeration does not mean dedicating the whole list of people to the flames of fire.

(Int. to S. B. p. 415–16.)

1. Whatever the purpose of the tale, it is enough to show that human sacrifice was for the Brahman period a horror beyond words and Mahabharat insist that it is unknown. (Int. to S. B. p. 455)
2. का० श्रौ० (२१।१।१-१)
3. शु० य० (अध्या० ३०)

यन्नरण्यं प्रव्रजति ।[1] का० क० यदि यजमानः पुनर्गृहमागच्छेत्तदा सः अरण्योरग्नी समारोप्य गृहे वसन् अग्निहोत्रादिकं च यावज्जीवं पूर्ववत् कुर्यात् ।[2] आ० क० यजमानो ग्रामं प्रत्यागत्य त्रैधातवीयया यजेत । सौत्रामण्या मैत्रावरुण्या चामिक्षया साकंप्रस्थीयेन पञ्चबिलेन चरुणा पञ्चशारदीयेनेति च यजते ।[3]

## ४. सर्वमेधः

उ० क० सर्वमेधो दशरात्रो विधीयते, अयं सर्वकामेन पुरुषेण कर्त्तव्यः । अत्र द्वादश दीक्षाः, द्वादशोपसदो दश सुत्याश्च भवन्ति । चतुस्त्रिंशद्दिनसाध्योऽयं यागः । अत्र प्रथममहरग्निष्टोमसंस्थम्, ततो दिनत्रये इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्ततः क्रमेणोक्थ्यसंस्थाः, ततो महाव्रतमहः, ततो वाजापेयः ततो अप्तोर्यामः ततस्त्रिणवस्तोम उक्थ्यः, ततस्त्रयस्त्रिंशस्तोम उक्थ्यः, ततो विश्वजित्सर्वपृष्ठातिरात्राः इति दिनानां क्लृप्तिः । चैत्रशुक्लषष्ठ्यामिष्टकापशुरुखासंभरणं च । एकशतविधोऽग्निरत्र, एको यूपः सप्तदशारत्निः, प्रतिदिनं स्तोमापनं सवनीयाः पशव आलभ्यन्ते । का० क० पुरुषमेधवद्दक्षिणा[4], आ० क० अश्वमेधवत्सपुरुषं सभूमिं ददाति ।[5]

## ५. पितृमेधः

कात्यायनश्रौतसूत्रस्य एकविंशस्याध्यायस्य द्वितीयाचतुर्थ्योः कण्डिकयोः पितृमेधः उपवर्णितः । आपस्तम्बकल्पस्य श्रौतभागे तु पितृमेधो नोक्तः । विदुषां सम्मतौ आपस्तम्बीयशाखिनां स्वतन्त्रं पितृमेधसूत्रं नासीत्, तदुक्तं हरिहराचार्येण अन्त्येष्टिप्रयोगे—

भारद्वाजकृतं सूत्रं तद्भाष्यकल्पकारिका ।
सुविलोक्यानाहिताग्नेः समन्त्रं पितृमैधिकम् ॥
कृतिः स्फुटतरा सेयं ज्ञेया तदनुसारिणी ।
आपस्तम्बैरपि ग्राह्यं नान्यत् सूत्रं हि विद्यते ॥

---

1. तथा च मनुराह—'प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् ।
आत्मन्यग्नी समारोप्य ब्राह्मणः प्रव्रजेद् गृहात् ।' (६।३।८)
2. का० श्रौ० (२१।१।१८)
3. आ० श्रौ० (२०।२४।१७)
4. का० श्रौ० (२१।२।१२)
5. आ० श्रौ० (२०।२४।२१)

तथा चाह कश्चिद् विद्वान्—

'श्रीभारद्वाजकृतं ह्येतद् कल्पाख्यसूत्रं जगति प्रसिद्धम्। ग्राह्यं तदन्त्येष्टिविधौ सदापस्तम्बैः।'[1] अत आपस्तम्बस्येदानीं स्वतन्त्रं पितृमेधसूत्रं न हि विद्यते। पितृमेधसम्बन्धिनः केचन पारिभाषिकाः शब्दाश्चात्र व्याख्यायन्ते। ते शब्दाः सन्ति—पितरः, यमः, हव्यवाहनादयो अग्नयः, स्वधा, देवयानः, पितृयाणः, यमदूतौ, कुम्बा, चम्बा च।

**पितरः**—'प्रियरत्नआर्ष' नामधेयो आर्यसमाजिविद्वांसो 'यमपितृपरिचय'नाम्नि ग्रन्थे सूर्यरश्मीनेव पितरं मन्यन्ते स्म, तन्न शास्त्रानुरूपं परम्परानुरूपं वा मतम्। यद्यपि मन्त्रब्राह्मणादिषु ऋतवः, रश्मयः, प्राणा इत्यादयो बहवस्तु पदार्थाः उक्तास्तथापि ते सर्वे अर्थवादास्सन्ति, मानवीयेतिहासे पितृपितामहादय एव पितरो भवन्ति—

पिता पितामहश्चैव तथैव प्रपितामहः।
त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः॥[2]

तत्र ब्राह्मणकल्पादिषु त्रिविधाः पितर उक्ताः सोमवन्तः, बर्हिषदः, अग्निष्वात्ताश्च। तथा च हि शातपथी श्रुतिः-'तद्ये सोमनेनीजा ते पितरः सोमवन्तः, अथ ये दत्तेन पक्वेन लोकं जयन्ति ते पितरो

---

1. श्रीकाशीकरमहोदया भारद्वाजश्रौतसूत्रस्य प्रास्ताविके चाहुः—

"It may be pointed out is this connection that. Caland has drawn attention to Sutra in the Apstamba Sraut Sutra which refers to the Pitramedha rite App. IX/11/20.

'या सा पितृमेधे प्रथमाहुतिस्ताम् एव त्रिः कुर्यादित्येके'

Herein Caland finds direct evidence in support of his assumption that the Pitramedh Sutra formed part the great Kalp of Apstamba, But the various points mentioned above clearly go against such an assumption. It is not impossible that the Pitramedha reffered to in App. IX/11/20 is the Bhardwas Pitramedha itself (p. XLVIII).

2. कर्मप्रदीपस्य टीकायां ब्रह्मपुराणस्य वचनम्, पृ० २६

र्बाहषदः, अथ ये ततो नान्यतरच्च न यानग्निरेव दहन् स्वदयति ते पितरोऽग्निष्वात्ताः' (श० ब्रा० २।६।१।७)। तथा च—'सोमप्रयाजाः पितरः। ये वै पितरो र्बाहषदः। ये वा अयज्वानो गृहमेधिनः ते पितरोऽग्निष्वात्ताः।' (तै० ब्रा० १।६।६।६)।

**त्रिविधा अग्नयः**—श्रोताग्नयस्तु त्रिविधाः परिकीर्तिताः—हव्यवाहनः, क्रव्यात् आमाच्च। 'यो देवयट् तस्मिन् हवींषि श्रपयामस्तस्मिन् यज्ञं तनवामहे, 'अयं वाऽऽमाद् येनेदं मनुष्याः पक्वमश्नन्ति, 'अथ येन पुरुषं दहन्ति स क्रव्यात्।' (श० ब्रा० १।२।१।४)।

**यमः**—इतिहासे तु वैवस्वतो यमः पितृजनानां[1] प्रथमो राजा बभूव, स हि प्रथमः पितृणामुच्यते, किन्तु श्रुतिषु सूर्यः, कालात्मकः संवत्सरः अग्निर्वा यम उच्यते—

'एष वै यमो य एष तपति' (श० ब्रा० १४।१।३।४)
'अयं वै यमो योऽयं (वायुः) पवते (श० ब्रा० १४।२।२।११)
'अग्निरपि यम उच्यते।[2] (द्र० निरुक्ते १०।२०)

**स्वधा**—यः पितृभ्यः तिलापूपक्षीरादीनां चरुः प्रदीयते, सः स्वधा भवति—

'ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्।
स्वधाः स्थ तर्पयत मे पितॄन्।'[3]

**पितृराज्यम्**—अयमेव पितृलोक उच्यते—

सर्वान् कामान् यमराज्ये वशा प्रादुषे दुहे (अथाहुर्नारकं लोकं निरुन्धानस्य याचितम् (अवर्थ० १२।४।३६)।

**द्वे सृती**—पितृमेधप्रकरणे हि द्वे सृती स्मर्यते—ते स्तः—देवयानः पितृयाणश्च—'द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम्।'[4]

1. 'यमो वैवस्वतो राजेत्याह तस्य पितरो विशः' (श० ब्रा० १३।४।३।६)
तथा च—'वैवस्वतं पितॄणां च यमं राज्येऽभ्यषेचयत्' (वायुपु० ७०।८)
2. 'यमो मृत्युर्धस्मारो निर्ऋथो बभ्रुः शर्वस्ता नीलशिखण्डः' (अथर्व० ६।६३।१)
3. शु० य० (२।३४)
4. ऋ० (१०।८८।१५), 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते' (गी० ८।२६)
तथा च द्रष्टव्यम् छा० उ० (पञ्चमे प्रपाठके)।

**यमदूतौ**—मन्त्रेषु यमस्य द्वौ श्वानौ यमस्य दूतौ कथितौ—
यौ तौ श्वानौ यमस्य रक्षितारौ चतुरक्षे पथिषदी नृचक्षसा।
उरुणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो जनाँ अनु॥[1]

**आर्येष्वसुरेषु चौर्ध्वदैहिकसंस्कारविधिः**—पुराकाले भारते वर्षे मृतस्यौर्ध्वदैहिकसंस्कारस्य द्वे विधी आस्ताम्। प्रथमविधौ मृतमग्निना दहन्ति स्म, अपरस्मिन् विधौ भूमौ गर्तं खात्वा मृतं निवपन्ति स्म तथा चोक्तं श्रुतौ—

'ये निखाता ये परोप्ता ये दग्धा ये चोद्धृताः' (अथर्व० १८।२।३४) आर्येषु प्रथमविधिः विहितोऽभवत्, असुरेषु द्वितीयविधिर्विहित आसीत्—'अथ या आसुर्यः प्रजाः त्वद्ये त्वत् परिमण्डलानि (तानि श्मशानानि कुर्वते), (श० ब्रा० १३।८।१।१५) 'अथ या आसुर्यः प्राच्या (प्रजाः ?) त्वद्ये त्वन्तर्हितानि (तानि श्मशानानि) ते चम्बां त्वद्य-स्त्रिस्त्वत्' (श० ब्रा० १३।८।२।१) कात्यायनेसूत्रे च—'शम्बति कम्बति वा' इत्युल्लिखितम्। मृतस्य निवपनार्थं निखाता गर्ता 'कम्बा' 'चम्बा' वा (टोम्बा इति आंग्लभाषायाम्, 'कबर' च प्रसिद्धः) उच्यते। तथा च पण्डितभगवद्दत्तमहोदया लिखन्ति–'अमरकोश (२।७।१८) के अनुसार यज्ञभूमि का आवेष्टन 'कुम्बा' कहलाता है। प्राचीन संस्कृत में अनेक पदों में 'क' के स्थान पर 'च' का प्रयोग देखा जाता है। शतपथ (१३।८।८।१) में आसुरी प्रजाओं की चम्बा रीति का कथन है। यह रीति श्मशान के बदले होती है। इन्हीं 'कुम्बा' अथवा 'चम्बा' का अपभ्रंश कबर शब्द प्रतीत होता है। आसुरी प्रजायें कबरें बनाती थीं। यही कबरें 'हड़प्पा' आदि में मिली हैं।[2] तथा चोक्तं रामायणे—रक्षसां गतसत्वानामेष धर्मः सनातनः। अवटे ये निधीयन्ते तेषां लोकाः सनातनाः।'[3] ते चासुरा मृतशरीरमलङ्कारादिभिर्भूषयन्ति स्म—'तस्मादप्यद्येहाद–दानमश्रद्दधानमयजमानमाहुरासुरो बतेदमसुराणां ह्योपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेणेति संस्कुर्वन्त्येतेन ह्यमुं लोकं ज्येष्यन्तो मन्यन्ते।[4]

1. अथर्व० (१८।२।१२,१३)
2. भा० बृ० इ० (पृ० २२२)
3. वा० रा० (३।४।२२)
4. छः० उ० (८।८)

# कात्यायनश्रौतसूत्रे पितृमेधः

**पितृमेधकालः**—का० क० मृतस्य मरणसंवत्सरस्यास्मृतौ अयुग्मेषु संवत्सरे वा विकल्पेन पितृमेधः करणीयः। स च हस्तस्वातिपुण्यादिषु यत्रैकैत्र तारका आकाशे दृश्यते तदा कर्त्तव्योऽथवा अमावास्यायां वा कर्त्तव्यः, समुच्चस्यासम्भवात्। ऋतुर्ग्रीष्मः शरत्, माघमासो वा। अस्मिन् पितृमेधे मृतस्य परिजनाः (अमात्या वा) स्वसंख्यादधिकानि छत्राणि चादाय सशरीरा दक्षिणां दिशं प्रतिगच्छन्ति, कुम्भेषु अस्थीनि संगृह्य, तं तल्पे कृत्वा हतवस्त्रेण वेष्टयित्वा सपटहवादित्राः पुत्राद्याः कुम्भं वाजयन्तः त्रिस्त्रिः प्रदक्षिणं परियन्ति, स्त्रियो वा परिक्रामन्ति, यज्ञीयेऽहनि बह्वन्नं पचन्ति ब्राह्मणादीन् च भोजयन्ति। ब्राह्मे मुहूर्ते अस्थिकुम्भमादाय यजमानादयो दक्षिणां दिशं प्रतिगच्छन्ति।

**श्मशानभूमिः**—मृतस्यौर्ध्वदैहिकसंस्कारार्थं सूर्यतप्ते गहनभूप्रदेशे गह्वरे गर्ते ऊषरे वा श्मशानं क्रियते। यत्र न्यग्रोधादयो वृक्षा न भवेयुस्तत्र काष्ठैश्चितिः कर्त्तव्याः। कात्यायनमते शम्बति कम्बति वा प्रदेशे श्मशानं कर्त्तव्यम्। 'चम्बा' 'कम्बा' इतिशब्दौ पूर्वं व्याख्यातौ। कर्कादयस्तु एवं व्याचक्षते 'शमिति सुखनीयप्रदेशः, कमिति रमणीयः' 'केचित् शम्बति शमीवने कम्बति करीषवने वेति व्याचक्षते।'[1] तन्न, अस्माभिस्तु असुराणां प्रसङ्गे सर्वमेतद् व्याख्यातम्। वस्तुतष्टीकाकाराणां काले कम्बादयः शब्दा अविस्पष्टार्था अभूवन्। इतिहासे आर्येषु असुरेषु म्लेच्छेषु च कुम्बाः (कबरस्थान, टोम्ब) भवन्ति स्म, यत्र राजकुलानां पुरुषा दह्यन्ते निधीयन्ते स्म। भासेन प्रतिमानाटकस्य प्रारम्भे देवकुलानि स्मृतानि, मिश्रदेशनिवासिनां राज्ञां 'पिरामिडा' इति प्रसिद्धाः, मुगलादीनां च 'टुम्ब' सिकन्दराग्रामे प्रसिद्धाः। इदानीमपि तत्र चित्राणि विचित्राणि उपवनेषु तानि भवनानि तडागादयश्च सन्ति।

**और्ध्वदैहिकः संस्कारः**—मृतसंस्कारकाले कश्चिद्यजमानपुरुषस्तेजनीं (तृणपूलकं) वंशादिबद्धामुच्छ्रित्य चितिपार्श्वे तिष्ठति, श्मशानं पुरुषमात्रप्रमाणमुत्तरतः पृथु भवति। कोणेषु यजमानपुरुषाः पालाशादीनां शङ्कून् क्षिपन्ति, अध्वर्युर्यजमानो वा पालाशशाखया तत्रस्थं

1. का० श्रौ० भाष्ये (२१।३।२२)

तृणादि निरस्य श्मशानं पाषाणखण्डैः परिश्रपति, ततो यजमानः औदुम्बरेण सीरेण चतस्रः सीताः कृषति, सर्वौषधं च वपति, तूष्णीमन्यः कुम्भो क्षिपति भिनत्ति वा, ततो यथाङ्गं कल्पयित्वेष्टकां पादमात्रीं निदधाति, ततो लेखाहीनास्तिस्रस्तिस्रः पादमात्रीरिष्टकाः प्रतिदिशं निदधाति, पुरीषमाहृत्य श्मशाने निवपति । ततो अवकाभिः कुशैश्च श्मशानं प्रच्छाद्य यवान् वपन्ति, ततो दक्षिणतः प्राच्यां सप्त कर्षून् खात्वा श्मशानं क्षीरेण उदकेन वा सिञ्चति । ततो अध्वर्युर्यजमाना आमात्याश्च त्रींस्त्रीनश्मनः कर्षूषु प्रक्षिप्य ग्रामं प्रतिगच्छन्ति । ततः सर्वे उद्यानादिषु स्नात्वा मन्त्रान् (सुमित्रिया न आप०' इत्यादीन्) जपन्तो अहतवांसासि परिधाय गृहान् प्रत्यागच्छन्ति, प्रत्यागच्छन्तस्ते ग्रामश्मशानयोर्मध्ये मर्यादालोष्ठं च निदधाति, ततो होमः प्रवर्तते । यजमान आञ्जनाभ्याञ्जने कृत्वोपसनाग्नि स्थापयित्वा बर्हींषि परिस्तीर्य वारणान् परिधीन् परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोति, अध्वर्युश्च रक्षणमन्त्रान् (परिदां)[1] वदति ।

कात्यायनेन पितृमेधस्य दक्षिणा—'सोमधाना दक्षिणाऽनड्वान् यवाश्च विहिताः, सर्वाणि वस्तूनि पुराणानि भवन्ति ।

**आपस्तम्बीयं पितृमेधविधानम्**—आपस्तम्बानुयायिभिः पितृमेधे भारद्वाजपितृमेधसूत्रं स्वीक्रियते, तच्च पूर्वमेव दृढीकृतम्, तैत्तिरीयाणां पितृमेधमन्त्रास्तु तैत्तिरीयारण्यके (षष्ठे प्रपाठके) विद्यन्ते । कात्यायनस्य भारद्वाजस्य च विधानयोर्मन्त्रेषु चात्र महदन्तरं परिदृश्यते । यथा भारद्वाजविधाने पितृमेधे राजगवीविधानं दृश्यते, कात्यायनविधाने तन्नास्ति, एवमन्यानि चान्तराणि सन्ति, अलं बहुविस्तरेण (अप्रासङ्गिकाच्च) ।

## ६. प्रायश्चित्तानि

कात्यायनेन सर्वप्रायश्चित्तानि एकस्मिन्नेवाध्याये प्रोक्तानि, आपस्तम्बस्तु तानि अनेकत्र ब्रवीति, यथा अग्निहोत्रसम्बन्धीनि नवमे प्रश्ने सोमप्रायश्चित्तानि चतुर्दशे प्रश्ने, प्रवर्ग्यप्रायश्चित्तानि, पञ्चदशे प्रश्ने च तेन कथितानि कात्यायनस्तु सर्वाणि प्रायश्चित्तानि पञ्चविंशेऽध्याये संग्रहीतवान् ।

---

1. शु० य० (३५।१८)—'परीत गामनेषत' इत्यादि ।

उभयोः कल्पयोश्च प्रायश्चित्तानां वर्णनक्रमे महदन्तरं परिदृश्यते, तदत्र सूचन्या प्रकटीभवति—

| का० श्रौ० क्रमः | आ० श्रौ० क्रमः |
|---|---|
| प्रायश्चित्तपदार्थः | पायश्चित्तपदार्थः |
| हौत्रिकं प्रायश्चित्तम् | आहवनीयानुगमने प्रायश्चित्तम् |
| आहवनीयानुगमने ,, | गार्हपत्यानुगमने ,, |
| गार्हपत्यानुगमने ,, | दक्षिणाग्न्यनुगमने ,, |
| दक्षिणाग्न्यनुगमने ,, | वत्सापाकरणे ,, |
| मथ्यमानस्याग्नेरजायमाने ,, | हविर्नाशे ,, |
| हविर्नाशे ,, | पत्न्योदक्याकाले ,, |
| श्वादीनामन्तरागमने ,, | सान्नायस्कन्ने ,, |
| जनमरणे ,, | हविषि कीटपतने ,, |
| संसर्गे प्रायश्चित्तस्यानादरः | वर्षणे ,, |
| हृदयविलेखे प्रायश्चित्तम् | आहुतिपतने ,, |
| यमजनने ,, | अङ्गारस्य पतने ,, |
| गेहदाहे ,, | मथ्यमानस्याजायमाने ,, |
| चन्द्रमसाऽभ्युदिते ,, | अग्नीनां संसर्गे ,, |
| हविरातञ्चने ,, | अग्निहोत्रस्थालीस्रवणे ,, |
| व्रताशक्तौ ,, | यज्ञच्छेदे ,, |
| सान्नाय्यस्कन्ने ,, | चन्द्रमसाऽभ्युदिते ,, |
| कपालनाशे ,, | हविरातञ्चने ,, |
| दोहनाशे ,, | व्रतलोपे ,, |
| सान्नाय्यालाभे ,, | अग्निहोत्रीवाश्यमाने ,, |
| दुष्टहविषः ,, | लोहितदोहने ,, |
| देवताविपर्यासे ,, | दोहविनाशे ,, |
| अवदानादीनां विपर्यासे ,, | स्थालीभिन्ने ,, |
| ध्रुवादीनां ,, | हविषः स्कन्ने ,, |
| प्रणीतानां पतिते ,, | अशनिपाते ,, |
| दोहपतने चतुस्त्रिंशद्धोमः ,, | श्वादीनामागमने ,, |
| शार्दूलनिपातने ,, | सूर्यास्ते ,, |
| उपसर्गस्याशक्तौ ,, | सङ्गवे ,, |

| का० श्रौ० क्रमः | | आ० श्रौ० क्रमः | |
|---|---|---|---|
| यजमानस्य मरणे प्रायश्चित्तम् | | मार्जनावसाने प्रायश्चित्तम् | |
| मृतस्य शरीरे यज्ञाङ्गानां प्रासनम् | | अग्निहोत्रच्छेदे | ,, |
| तस्यास्थिचयनम् | | होमाभावे | ,, |
| नवान्नभक्षणे प्रायश्चित्तम् | | अग्नीनामनुगमने | ,, |
| पुरोडाशदग्धे | ,, | त्रिशंतन्तु होमः | ,, |
| पशुपलायने मरणे च | ,, | शस्त्रमोहे | ,, |
| हृदयनाशे | ,, | कृष्णशंकुनिपतने | ,, |
| यूपविरोहणे | ,, | यूपचलने | ,, |
| अनूबन्ध्यागर्भे | ,, | प्रणीतानां पतने | ,, |
| सत्रायागूर्याशक्तौ | ,, | दुःस्वप्नदर्शने | ,, |
| दीक्षितानां साभ्युत्थाने | ,, | व्रतलोपे | ,, |
| पत्न्युद्कयाकाले | ,, | आज्यस्य स्कन्ने | ,, |
| दुःस्वप्नदर्शने | ,, | कपालभिन्ने | ,, |
| अमेध्यदर्शने | ,, | नवान्नभक्षणे | ,, |
| अद्रिभिन्ने | ,, | यमजनने | ,, |
| सोमातिरेचने | ,, | पशुमरणे | ,, |
| दीक्षितायोपतापादौ | ,, | निषादस्थपतीष्टिः | |
| उखासंभरणे | ,, | ब्रह्मचारिप्रायश्चित्तम् | |
| समानजनसंसवे | ,, | पुरोडाशनाशे | ,, |
| सोमदाहे | ,, | हविषां नाशे | ,, |
| | | अपक्वपुरोडाशे | ,, |
| | | अदक्षिणयागे | ,, |
| | | आहुतिपतने, मित्रेपात्रे, यज्ञनाशे | ,, |
| | | पुरोडाशपृषदाज्यादीनां पतने | ,, |
| | | पशोर्वाश्यमाने | ,, |
| | | साख्यमरणे | , |
| | | गर्भप्रक्षेपे | ,, |
| | | यूपविरोहणे | ,, |
| | | यूपस्य क्रमिभक्षणे | ,, |
| | | यूपपतने | ,, |
| | | लेखावेष्टने | ,, |

उ० क० यज्ञस्य यज्ञाङ्गस्य वा विनाशे व्यतिक्रमे प्रायश्चित्तं विधीयते, तत्र उपपातो विनाशो भ्रेषो अपराध इत्यर्थान्तरा भवन्ति। प्रायश्चित्तपदार्थस्य निर्वचनं तु एवं भवति—प्रायो विनाशः, विध्यतिक्रमजनितो दोषः, 'चिती' संज्ञाने इत्यस्य धातोश्चित्तशब्दो निष्पन्नः, अत एव प्रायस्य चित्तं (दोषस्य ज्ञानं) प्रायश्चित्तमित्युच्यते। एतत्तु कर्मविनाशकाल एव संधीयते, मतान्तरेण प्रायश्चित्तानि दोषादनन्तरं कर्त्तव्यानि। तत्र प्रायश्चित्ते जपो होम इज्या च कर्त्तव्याः।

उ० क० हौत्रिके उपपाते 'भूरिति' गार्हपत्ये होमः, आध्वर्यवे उपपाते सति 'भुवः' इति होमः, सोमे आध्वर्यवे उपपाते आग्नीध्राग्नौ होमः, औद्गात्रापराधे आहवनीये होमो विधीयते। सर्वप्रायश्चित्तहोमं पञ्चभिर्ऋग्भिः (शु० य० २१।३–४, १२।१२) भवति।

उ० क० प्रायश्चित्तविधानानि विस्तरेण प्रोक्तानि, विस्तरभिया अत्र केवलं निदर्शनार्थं कानिचिद् उदाहरणानि प्रदर्श्यन्ते। यथा यदि दुह्यमाना गौर्वाश्येत तदा तस्यै तृणानि ग्रासयेत् अनेन मन्त्रेण—

'सूयवसाद्भगवति हि भूया अथो वयं भगवन्तः स्याम।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती॥'[1]

उ० क० अग्नीनां संसर्गे विकल्पेन प्रायश्चित्तं भवति वा न भवति। का० क० प्रायश्चित्तविधानानि सारेण कथितानि, आपस्तम्बेन तानि बहु विस्तीर्यन्ते, स तु प्रायेण पूर्णं मन्त्रपाठमुदाहरति, यदा कात्यायनः केवलं प्रतीकमन्त्रान् संदर्शयति। क्वचित्तूभयोर्विधानयोर्महदन्तरमस्ति। यथा कात्यायनेन परिभाषापाठे प्रथमाध्याये हि निषादस्थपतीष्टिः प्रोक्ता।[2] आपस्तम्बस्तु तामिष्टिं नवमे प्रश्ने विदधाति। अस्यामिष्टौ गर्दभपशुर्हूयते, आ० क० चायं गर्दभयज्ञो[3] रक्षोदेवत्यः निर्ऋतिदेवेत्यो

---

1. का० श्रौ० २५।१।१६)
2. मन्वादिषु धर्मशास्त्रेषु पारास्कारादिषु च गृह्यसूत्रेषु यो ब्रह्मचारी सन् स्त्रियं गच्छति सोऽवकीर्णि उच्यते, तस्य प्रायश्चित्तार्थं गर्दभेष्टिर्विहिता सैव श्रौतसूत्रेषु निषादस्थपतीष्टिः, नैर्ऋतेष्टिः, गर्दभेष्टिर्वा उच्यते।
3. गर्दभपशुः रक्षसां मुख्यं वाहनं भवति यथा रामायणे—
रावणस्य गर्दभरथः।

वा भवति। अस्मिन् यागे गर्दभं लौकिकेऽग्नौ श्रपयित्वा तस्मिन्नेवाग्नौ जुहोति, सर्पिषःशेषं शूद्रो अश्नाति।

**सोमप्रायश्चित्तानि**—आपस्तम्बेन नवमे प्रश्ने आदर्शपूर्णमासाभ्यां निरूढपशुबन्धपर्यन्तस्य प्रायश्चित्तानि प्रोक्तानि, चतुर्दशे प्रश्ने सोमप्रायश्चित्तानि च कथितानि, कात्यायनस्तु तानि सर्वाणि पञ्चविंशे अध्याये प्रोवाच, उ० क० दीक्षितस्य मरणे अस्थियज्ञः कथितः, ततः संसवदोषस्य उपतापस्य, यजमानस्य मरणादीनां सोमपतनादीनां च प्रायश्चित्तान्युक्तानि। आपस्तम्बकल्पे तेषां बहुविस्तारो दरीदृश्यते इति पूर्वमेव कथितमस्माभिरतो अलं विस्तरेण। आपस्तम्बस्तु प्रायेण प्रतिप्रकरणं प्रायश्चित्तविधानमाह, कात्यायनस्तानि नैवंविधानि कथयति, तेन तु एकत्र सर्वाणि प्रायश्चित्तविधानानि कथितानि। तयोर्विधानानि प्रायेण समानानि केवलं शब्दानुपूर्वी क्वचित् क्वचित् भिन्ना विद्यते, यत्र तत्र मन्त्रपाठोऽपि भिद्यते।

## प्रवर्ग्यः

**महावीरकरणम्**—उभयोः कल्पयोः प्रायेण समानविधानेन प्रवृज्जनमाख्यातम्। तदनुसारेण उ० क० दीक्षितो अमावस्यायां पौर्णमास्यां वा पुण्ये नक्षत्रे तूष्णीं काण्टकीं समिधमादाय 'युञ्जते मन' इति हुत्वा, अग्निचयनवत् अभ्रिमादाय ब्रह्माणमामन्त्र्य मृत्खननार्थमभिप्रव्रजति, का० क० दीक्षासु यजमानः पिन्वनरौहिणकपालानामुपलक्षणान् महावीरपात्रान् करोति। तन्मते दीक्षितो अन्तःपात्यदेशे मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिमुत्तरतो निदधाति। ततोऽध्वर्युः गवेधुका अजापयश्च वल्मीकवपादिभिस्सह मृत्पिण्डं मिश्रयति, ततः सः मृदमादाय 'मखायेति' प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं महावीरं करोति, ततो निष्पन्नं महावीरं स्पृष्ट्वा निदधाति, ततः स स्रक्पुष्कराकृती पिन्वने रौहिणकपाले परिमण्डले करोति, ततो अश्वशकृता महावीराणां धूपनं दहनं च भवतः। तानुखावत् पक्वानुत्तारयति। सोऽध्वर्युरेव तान् अजापयसा दृणाति।[1] आ० क० चैवं महावीरकरणमुक्तम्।[2]

1. का० श्रौ० (२६।१)
2. आ० श्रौ० (१५।१-४)

**प्रवर्ग्यः**—उ० क० यजमान उपसदा सह प्रवर्ग्येण चरति। उ० क० च अपहितद्वारे प्राग्वंशे (विमिते) अध्वर्यु: कुशानास्तीर्य तेषु महावीरपात्राणि निदधाति। तत एनानि औदुम्बरपात्राणि भवन्ति—आसन्दी, चतस्र: स्रुच:, उपयमनी, प्रोक्षणीधानी, द्वौ दीर्घकाष्ठौ, तष्टौ णफौ, द्वे धृष्टी, मेथी, षट् शङ्कव:, काण्टकी समित्, त्रयोदश वैकङ्कता: परिधयश्च। तथा च त्रीणि कार्ष्णाजिनानि व्यजनानि, दण्डानि, द्वौ रुक्मौ (रजतसुवर्णौ शतमानौ), मौंजानि पात्राणि, वेदौ, अभिधानी, निदाने च।

उ० क० ब्रह्मणानुज्ञातोऽध्वर्यु: सर्वं घर्मं त्रि: प्रोक्षति, आग्नीध्रश्च रौहिणौ पुरोडाशौ अधिश्रयति। प्रतिप्रस्थाता चाज्यं संस्करोति। ततो अध्वर्युरासन्द्यां कृष्णाजिनमास्तीर्य तस्मिन् महावीरपात्रमासादयति। तत: सोऽध्वर्युर्महावीरं शफाभ्यां परिगृह्य समृष्ट्वा सप्त एकादश वा प्राणाहुतीर्जुहोति।

ततो महावीरं प्रतीष्ठाप्य गार्हपत्ये मुञ्जप्रलवान् प्रदीप्य वैकङ्कतीन् परिधीन् परिधाय वाजयन्तश्च ऋत्विज आसते। ततोऽध्वर्युस्तत्र रौहिणपुरोडाशकपालयोरासादनं करोति, ततो घर्मदुघाया आह्वानम्। स तां दोग्धि प्रतिप्रस्थाता चाजां दोग्धि। उभयो: पयसोर्महावीरे आनयनम्। प्रतिप्रस्थाता दक्षिणं रौहिणं पुरोडाशं जुहोति, होत्रा वषट्कृते, अनुवषट्कृते च जुहोति। अध्वर्युर्महावीरमास्राव्य खरे राजतं रुकमं निधाय तस्मिन् महावीरं प्रतिष्ठापयति, एवं प्रतिप्रस्थाता रौहिणादीनां होमं करोति पूर्ववत्। ततोऽध्वर्युर्घर्मं सम्राडासन्द्यामासाद्य शान्तिपाठं च कृत्वा सायं प्रातश्च प्रवर्ग्योपसद्भ्यां चरति।

आ० क० यजमान: प्रवर्ग्यं कृत्वा संवत्सरं न मांसमश्नीयात्, न रामामुपेयान्न मृन्मयेन पिबेत्, नास्य राम उच्छिष्टं पिबेत्।[1]

का० क० यजमान: प्रवर्ग्यमुद्वास्य शतमाने ब्रह्मणे, घर्मदुघामध्वर्यवे, यजमानव्रतदुघाम् च होत्रे, पत्न्या व्रतदुघामुद्गात्रे, अग्नीध्रे चाजां ददाति।[2] आपस्तम्बविधाने च यजमानो अजामग्नीध्रे, षष्ठौहीं ब्रह्मणे, धेनुं होत्रे, रुकमावध्वर्यवे च ददाति।[3]

1. आ० श्रौ० (१५।१२।१३)
2. का० श्रौ० (२६।७।४१-४५)
3. आ० श्रौ० (१५।१३।१)

ततो होमः सामगानं च विधीयेते। तदनन्तरं खरे हिरण्यं निधाय तस्मिन् प्रचरणीयं महावीरं निदधाति। आ० क० अत्रैव सर्वं परिघर्म्यं सर्वतः परिमण्डलमादित्यस्य रूपेण कृत्वा महावीरे गोपय आनयति, मधु दधि च तत्रानीयावपति। आदित्याकृतिस्थाने पुरुषाकृतिं वा करोति।[1] का० क० आकृतिकरणस्य विधानं नास्ति। अत्राचार्येणापस्तम्बेन महावीरौ वेदादयश्च पुरुषरूपेण निरूपिताः। तत आपस्तम्बेनाग्रे घर्मप्रायश्चित्तानि कथितानि।[2] आपस्तम्बस्यापेक्षया कात्यायनेन प्रवर्ग्यप्रचरणं किञ्चिद् विस्तरेण प्रोक्तं विद्यते। उ० क० शेषं घर्मभक्षणम्, घर्मोपस्थानम्, मार्जनम्, आदित्योपस्थानम् होमश्च विधीयन्ते।[3] तथापि कात्यायनस्य प्रवर्ग्यनिरूपणं विस्तृततरं विद्यते। सम्पूर्णस्य विषयस्य निरूपणात् अनावश्यको विस्तारो भविष्यति तदलं बहुना।



1. आ० श्रौ० (१५।१४।१३)
2. आ० श्रौ० (१५।१७), का० श्रौ० (२६।७)
3. आ० श्रौ० (१५।११।१२)

## दशमोऽध्यायः

# कात्यायनापस्तम्बश्रौतसूत्रयो-
# स्सांस्कृतिकमध्ययनम्

उभयोश्श्रौतसूत्रयोर्यत्सांस्कृतिकं विवरणमुपलभ्यते तत्सर्वमत्र सामान्येन संगृह्यते ।

**भौगोलिकीयं विवरणम्**—उभयोश्श्रौतसूत्रयोरेतानि भौगोलिकानि नामधेयानि सन्ति—सरस्वती दृषद्वती, यमुना, कुरुक्षेत्रम्, कुरवः, पाञ्चालाः, गान्धाराः, कलिङ्गाः, मागधाः, पारस्कराः, कारपचवः, परीणत्, प्लक्षप्रस्रवणः, नैमिषारण्यं च ।

**सरस्वतीदृषद्वत्यौ**—(**नद्यौ**)—उभयोश्श्रौतसूत्रयोः[1] सारस्वतसत्र-प्रसङ्गे उभयोर्नद्योर्नामिनी उपलभ्येते । इतिहासेषु चोल्लिख्यते यदन-योर्नद्योस्तटेषु नैका यज्ञा राजभिर्ऋषिभिश्च सम्पादिताः । एनयो-र्नद्योर्मध्यवर्ती प्रदेशो ब्रह्मावर्तनाम्ना प्रसिद्ध आसीत् ।

'सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥'[2]

ऋग्वेदकाले च आर्यावासः सारस्वतप्रदेशेषु विस्तीर्णः, यागभूमि-त्वेनास्य प्रदेशस्य प्रशंसनमनेकत्र ऋक्षु श्रूयते—

'नि त्वा दधे वरं आपृथिव्या इलायास्पदे सुदिनत्वे अह्नाम् ।
दृषद्वत्या मानुष आपगायाः सारस्वत्या रेवदग्ने दिदीहि ॥'[3]

अस्य प्रदेशस्य धर्माचारा आदर्शा बभूवुर्यच्च मनुनोक्तम्—

'एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥'[4]

---

1. का० श्रौ० (२४।५।३०, २४।६।६),
   आ० श्रौ० (२३।१३।२१, १२।५।२३)
2. मनुस्मृति (२।१७)
3. ऋ० (३।२३।४)
4. मनुस्मृति (२।२०)

प्रायेण सर्वेषु यज्ञेषु कृष्णाजिनं (चर्म) प्रयुज्यते स्म, तच्च कृष्ण-मृगस्य चर्मणा निर्मीयते स्म। स च कृष्णमृगोऽस्मिन् देशे हि चरति—

'कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः ॥'[1]

सारस्वते सत्रे ऋत्विग्यजमानाः सरस्वतीदृषद्वत्योर्नद्योः प्रतिगच्छन्ति, एतत्तु विवरणं सारस्वतसत्रप्रकरणे ह्यभिहितम्।

यत्र सरस्वत्यन्तर्भवति, तद्विनशनं श्रौतसूत्रेषु ब्राह्मणेषु च 'उपमज्जनं' इत्याख्यया स्मर्यते।[2] अत्र याजिनः स्नानार्थं गच्छन्ति स्म।

**कुरुक्षेत्रम्**—कुरुक्षेत्रं देवानां यज्ञभूमिरभवत्—'देवा वै सत्रमासत।······तेषां कुरुक्षेत्रं वेदिरासीत्। तस्यै खाण्डवो दक्षिणार्ध आसीत्, तूर्घ्नमुत्तरार्धः, परीणज्जघनार्धः, मरु उत्करः।'[3] का० श्रौ० च कुरुक्षेत्रस्य परीणन्नामकं स्थानमुल्लिखितम्।[4] अत्रैव शर्यणावत् सर आसीत्—'शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्कन्दते।[5] परीणत् स्थानमस्य सरसो निकटवर्ती च प्रतीयते। स्थाणेश्वरे (थानेसरे) वर्तमानो रामह्रदो हि वेदकालिकः शर्यणावत् इति इतिहासविदां मान्यता।

**कुरुपाञ्चलाः**—सर्वस्मिन् श्रुतिवाङ्मये कुरुपाञ्चालान् प्रति भूयसी आदरदृष्टिः, सर्वाधिक्येन च तेषामुल्लेखः श्रौतग्रन्थेषु राजसूये अध्वर्यू रत्निभ्य आवेदयति—'एष वो भरतो राजेति', 'एष वः कुरवो राजेति' कौरव्यम्, 'एष वः पाञ्चाला राजेति' पाञ्चालान्, 'एष वः कुरुपञ्चाला राजेति वा कुरुपाञ्चालान्।'[6] इति राजसूययज्ञे अभिषेककाले अध्वर्युः प्रजाजनान् सम्बोधयति। अनेनैव प्रतीयते यत् कुरुपाञ्चाला जनपदा भारतीयवाङ्मयस्य राजनीतेश्च केन्द्रस्थानमासीत्। पौरववंशजस्य संवरणस्य पुत्रः कुरुरिति बभूव, कुरुराज्ञो नाम्ना

---

1 मनुस्मृति (२।२३)
2. आ० श्रौ० (२३।१२।५), ता० ब्रा० (२५।१०।१)
3. तै० आर० (५।१।१)
4. 'कुरुक्षेत्रे परीणहि' (का० श्रौ० २४।६।३४)
5. सायणः (ऋग्वेदभाष्ये १।८४।१३, शाट्यायनब्राह्मणादुदाहृतम्)।
6. आ० श्रौ० (१८।१२।७)

कुरुराष्ट्रं कुरुक्षेत्रं कुरुजाङ्गलमिति त्रिकं प्रसिद्धिमगमत्। अस्य राष्ट्रस्य राजधानी च हस्तिनापुरमितिहासे विख्यातं नगरम्, तथा कुरुक्षेत्रं धर्मक्षेत्रमपि[1] ऐतिह्ये चातिप्रसिद्धं स्थानम्।

**यमुना कारपचवश्च**---उ० क० सारस्वतसत्रस्यान्ते सर्वे ऋत्विग्यजमाना अभिषेकार्थं यमुनायास्तटवर्तिनं कारपचवं प्रतिगच्छति स्म।[2] नेदानीमिदं स्थानं परिचीयते।

**प्लाक्षप्रस्रवणः**—एवं दार्षद्वतसत्रान्ते ते अवभृथाय प्लाक्षप्रस्रवणं प्रतिगच्छति। त्रिः प्लाक्षपदेन प्रतीयतेऽत्र त्रयः प्लाक्षाः पुरातना वृक्षा भवेयुस्तत्र नदी प्रस्रवति स्म। अनयोरुभयोः स्थानयोः स्थितिर्न ज्ञायते।[3]

**नैतन्धवः**—उ० क० यजमाना दार्षवृते सत्रे 'व्यर्णे' नैतन्धवेऽग्निमिन्धन्ते। अयं 'व्यर्णो' धन्वः (मरुभूमिः) लक्ष्यते। टीकाकारादीनां मते सरस्वत्यास्तटे नैतन्धवा नाम अर्माः (पुराणग्रामा) आसन्, तथा च **ऋग्वेदे**—'येषामिमे पूर्वे अर्मास आसन्नयूपाः। सदम् विभृता पुरूणि।' बौधायनस्य मते च शून्यग्रामो विनष्टग्रामो वा 'अर्म' इत्युच्यते (बौ० श्रौ० ६।१, ६।३) ताण्ड्यब्राह्मणे च सरस्वत्यास्तीरे स्थूलार्मो नाम ह्रद उल्लिखितः।[4]

---

1. **'कुरुक्षेत्रे धर्मक्षेत्रे'** (गीतायाम् १।१), तथा च कुरुधम्मजातके (३।२७६)
2. का० श्रौ० (२४।६।१०)
3. आ० श्रौ० (२३।१३।६)
4. ताण्ड्यब्राह्मणे (२५।२०।१८), तथा च ऋग्वेदे (१।१३२।३), यजुर्वेदे (३०।११), च अर्मामकौ शब्दावुपलभ्येते। डा० वासुदेवशरण अग्रवालमहोदया लिखन्ति 'हो सकता है कि यह मूल शब्द म्लेच्छभाषा का हो। म्लेच्छ (सेमेटिक) परिवार की अर्माइक भाषा में 'अरम्' ऊबड़खाबड़ पथरीले पहाड़ी प्रदेश को कहते हैं। अर्माइक उन लोगों की भाषा थी, जो 'अरम' या पर्वतीय प्रदेशों के निवासी थे।'
(पाणिनिकालीन भारतवर्ष, पृ० ८१)
पाणिनिसूत्रेषु चैतानि नामान्यभिहितानि—भूतार्मः, अधिकार्मः, संजीवार्मः, मद्रार्मः, अश्मार्मः, कज्जलार्मः।

**शाल्वाः (साल्वाः)**–आपस्तम्बगृह्यमन्त्रपाठे[1] चेयं गाथा–पठ्यते– 'यौगन्धरिरेव नो राजा इति शाल्वीरवादिषुः। विवृत्तचक्रा आसीना-स्तीरेण यमुने तव।' अनेन प्रामाण्येन केचिद् आपस्तम्बाचार्यं शाल्व-जनपदस्य निवासिनं मन्यन्ते। विषयोऽयं पूर्वमेव प्रतिपादितः। साल्वानां षड् अवान्तरविभागा आसन्—

उदुम्बरास्तिलखला मद्रकारा युगन्धराः।
भुलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥[2]

महाभाष्ये च शाल्वावयवानां त्रयो जनपदाः परिगणिताः— अजमीढाः, अजक्रन्दाः बुधाश्च[3]। नन्दलालदेमहोदयस्य मते युगन्धरा जनपदा यमुनायाः पश्चिमे, कुरुक्षेत्रस्य च दक्षिणे, स्थिता आसन्। वर्तमानो 'अम्बाला' इति युगन्धराः प्रतीयन्ते।

**गन्धारिकलिङ्गमगधपारस्करसौवीराः**–एकस्मिन् सूत्रे (आ० श्रौ० २२।६।१८) आपस्तम्बेन एते सर्वे जनपदा उल्लिखिताः। इदानीमितिहासपुराणेषु 'गन्धाराः' इति पाठो ह्युपलभ्यते, पुरातनपाठस्तु 'गन्धा-रिरित्येवमासीत्, यथा ऋग्वेदे 'गान्धारीणामिवाविका' (१।१२६।७)। ययातेस्तनयस्य द्रुह्योर्वंशे गान्धाराः क्षत्रिया अभूवन्, ते ययातिना निष्कासिता बाह्लीकेष्ववसन्, बहुकालादनन्तरं दाशरथेर्भरतस्य पुत्रौ तक्षपुष्कलौ तत्र जनपदेषु 'तक्षशिला' 'पुष्कलावती' इति अभिधेये द्वे नगर्यौ उपनिवेशयामासतुः।

अथर्वाङ्गिरसां वेदे पञ्चमकाण्डीये चतुर्दशे सूक्ते मगधमूजवद्ग-न्धाराणां च श्रवणमस्ति 'गन्धारिभ्यो मूजवद्भ्यो मगधेभ्यः। प्रैष्यं जनमिव शेवधिं तक्मानं परिदद्मसि।' महाभारते चैते देशा 'आरट्टा' बाह्लीकाश्चेति उच्यन्ते। तथा च मगधस्यानार्यनिवासत्वेन[4] ऋचि निन्दा श्रूयते—किं कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम्' (ऋ० ३।५३।१४)।

---

1. आ० गृ० म० पा० (६।१५।५)
1. काशिकायाम् (४।१।१७३)
3. महाभाष्ये (४।१।१७०)
4. 'कीकटो नाम देशोऽनार्यनिवासः' (निरुक्ते ६।६।४)
तथा च पुराणे—'कीकटेषु गया पुण्या।' इति श्रूयते

श्रौतसूत्रेषु सौवीरदेशोद्भवस्य सौवीराञ्जनस्योल्लेखोऽस्ति । अपरं त्रैककुत्पर्वतभवं त्रैककुदाञ्जनमधिकं तु प्रसिद्धं बभूव ।[1] यज्ञेषु तस्य प्रचलनमासीत् ।

आपस्तम्बसूत्रोल्लिखितः पारस्करदेशः शाकटायनेन, पतञ्जलिनाऽपि स्मर्यते ।[2] वर्तमानः 'थरपारकरः' मरुस्थलं पुरातनः पारस्करदेश आसीत्, सम्भवतो गृह्यसूत्रकारः पारस्करोऽस्य देशस्य निवासी बभूव ।

कलिङ्गदेशोऽपि निन्दितदेशेषु परिगण्यते । अयं वर्तमान उड़ीसा प्रदेशोऽस्ति ।

**नैमिषवनम्**—आपस्तम्बश्रौतसूत्रे (२३।११।१०) नैमिषियाणां सत्रं श्रूयते, इतिहासपुराणेषु च नैमिषारण्यमतिप्रसिद्धम् । वर्तमाने सीतापुरजनपदे 'मिसिरिख' इत्यभिधं स्थानं पुरातनं नैमिषारण्यमासीत् । सर्वप्रथमं ऐडे पुरूरवसि शासति नैमिषारण्ये ऋषीणां सत्रमभवत् ।[3] ततः कुलपतेः शौनकस्य दीर्घसत्राण्यपि चात्र अभवन् ।[4]

## सामाजिकी व्यवस्था

**चातुर्वर्ण्यं चातुराश्रम्यञ्च**—आपस्तम्बकालपर्यन्तं चातुर्वर्ण्यपद्धतिः यथाकथंचित् सिद्धान्तस्तु परिवर्तनशीला प्रतीयते, तदुक्तमाचार्येण धर्मसूत्रे—'अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ' 'धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ ।'[5] आपस्तम्बकाले यज्ञादिषु शूद्रो यजमानस्य हविरवहन्ति, गां

---

1. आ० श्रौ० (१०।७।१), का० श्रौ० (८।२।२३)
2. ऋक्तन्त्रे (४।५।१०)
   महाभाष्ये (६।१।१५७ — 'पारस्करो देशः'
3. वायुपु० (२।१४-२३)
4. महाभारते (१।४,५)
5. आ० धर्म० सू० (२।५।११।१०,११), मूलतो वर्णपद्धतिर्जन्मना नासीत्, तदुक्तं यास्केन' वर्णं वृणोतेः' (नि० २।३), यः पुरुषः स्वेच्छया यत्कर्म वृणोति स तन्नाम्ना अभिधीयते यथा यो ब्रह्मचर्यं वृतवान् स ब्रह्मचारी (वर्णी) उच्यते, एवं ब्रह्म वृत्वा ब्राह्मणो भवति, वाणिज्यं वृत्वा वणिग् भवति, इदं कर्मणा भवति न जन्मना 'इन्द्रो ब्रह्मणः पुत्रः कर्मणा क्षत्रियोऽभवत् । (महा० शा० २२।११)

च दोग्धि स्म, एते कर्मणी तदर्थं विहिते आस्ताम्, कात्यायनकाले चैते उभे कर्मणी शूद्राय निषिद्धे अभवताम्।

**राजवरणम्**—अस्माकं मतमतेन राजवरणाख्येन कृत्येन च पुष्यति। प्रजानां प्रतिनिधयो रत्निनो राजकर्त्तार आसन् ये राजानं वृण्वन्ति ततस्तमभिषिञ्चन्ति च। उत्तरेषु युगेषु राजपदे वर्गविशेषस्याधिकारोऽभवत्, स वर्गविशेषो राजन्यः (क्षत्रियः) उच्यते स्म। एवं सत्यपि ब्राह्मणवर्गः स्वातन्त्र्यं भजते स्म—

'ब्राह्मण एव पतिर्न राजन्यो न वैश्यः।'[1]

'सोमो वै अस्माकं ब्राह्मणानां राजा।'[2]

राजसूयो राजवरणस्यैव यज्ञ आसीत्। येन कर्मणा राजा सूयते (उत्पाद्यते) तदेव कर्म राजसूययज्ञः—'राजा वै राजसूयेनेष्ट्वा'[3] (भवति), उभयोश्श्रौतसूत्रयोरस्य यज्ञस्य विधानं विस्तीर्णम्। अभिषेककाले राजा प्रजानामद्रोहाय प्रतिज्ञां च करोति स्म—'यां च रात्रिमजायेऽहं यां च प्रेतास्मि तदुभयमन्तरेण इष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथां यदि ते द्रुह्येयमिति।'[4] यथा प्रजाद्रोहो निषिद्धस्तथा राजद्रोहोऽपि निषिद्ध आसीत्। तदानीमष्टविधा राजानो बभूवु, राजा, सम्राट्, भोजः, स्वराट्, विराट्, परमेष्ठी, महाराजः, अधिपतिः, सार्वभौमः (एकराट्) च।[5]

**सभा समितिश्च**—वैदिकग्रन्थेषूल्लिख्यते यद् राष्ट्रीये विधायिके द्वे संस्थे आस्ताम्—सभा समितिश्च।[6] प्रतीयते सभा तु राजसभा

---

1. अथर्व० (५।१७।६)
2. आ० श्रौ० (१८।१२।८)
3. श० ब्रा० (८।४।३।६)
4. ऐ० ब्रा० (८।३।१५)
5. ऐ० ब्रा० (५।२।८), आ० श्रौ० (२०।१।१)
   'तानहमनुराज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय।'
6. सभा च या समितिश्चावतां प्रजापतेर्दुहितरौ संविदाने।
   येन संगच्छा उपमा स शिक्षाच्चारु वदानि पितरं सङ्गतेषु॥
   (अथर्व० ७।१२।१)

(संसद्) आसीत्, तथा समितिस्तु पौराणां (सदस्यानां) लोकसभा आसीत्, उभयोः संज्ञा नरिष्ठाऽपि प्रथिता, ययोरुभयोर्नरा सीदन्ति, तिष्ठन्ति वा तेन ते नरिष्ठे।[1] सभासदोऽपि राज्ञा सह इष्टापूर्तस्य षोडशं भागं विभजन्ते स्म।[2]

**विदथः, परिषच्च**—श्रौतमुभे चैते उभे संस्थेऽपि प्रसिद्धे आस्ताम्, विदुषां ज्ञानगोष्ठी तु 'विदथ' उच्यते, राज्ञां ब्राह्मणानां शास्त्रार्थं परिषत्सु भवन्ति स्म। यथा विदेहादीनां परिषद उपनिषत्सु प्रसिद्धाः तथा च शौनकादीनां चरणानां परिषदश्च श्रूयन्ते। आसु परिषत्सु विपुलं वाङ्मयं रचितमासीत् (यथा शौनकस्य ऋक्प्रातिशाख्यादयो ग्रन्थाः।

**राजकर्त्तारः**—पुरोहितादयो द्वादश राजकर्त्तारो रत्निन उच्यते स्म। का० श्रौ० चैषां नामानि—स्वयं राजा, ततः सेनानीः, पुरोहितः, महिषी, सूतः, ग्रामणीः, क्षत्ता, संग्रहीता, अक्षावापः, गोविकर्त्ता, दूतः, परिवृक्ती च।[3] आपस्तम्बश्रौतसूत्रे केवलमेतानि नामानि सन्ति—राजा, सेनानीः, पुरोहितः, वावाताः, तक्षाः, रथकारः, अक्षावापः, गोविकर्त्ता, पालाकलः।[4] राजसूये राजा सर्वेषामेषां गृहेषु चरुं निर्वपति, पुरोहितादयस्तु क्रमेण राजानमभिषिञ्चन्ति स्म। तदानीं राज्ञस्तिस्रः पत्न्यो अनिवार्या भवन्ति स्म—महिषी, वावाता, परिवृक्ती च। राज्ञो ज्येष्ठा पत्नी महिषी, प्रियतमा भार्या वावाता, परित्यक्ता (हीना वा) परिवृक्ती च। इतिहासे दशरथस्य तिस्रः पत्नयः प्रसिद्धाः।

**दूतः—मन्त्रेषु** दूतानां बहुश उल्लेखः, तत्राग्निर्देवानां दूत इति स्तुतिं लभते। देवदूती सरमा च सरमापणिसंवादे प्रसिद्धा।[5] श्रौत-

---

1. 'विद्म ते सभे नाम नरिष्ठा नाम वा अपि।' (अथर्व० (७।१२।२)
2. 'यद् राजानो विभजन्त इष्टापूर्तस्य षोडशं यमस्यामी सभासदः।' (अथर्व० ३।२९।१)
3. का० श्रौ० (१५।३।१-१३)
4. आ० श्रौ० (१८।१०।१२-२५)—'पालावल इति 'अनृतदूतं ब्रुवते' (१८।१०।२६)
5. 'इन्द्रस्य दूती रिषिता चरामि मह इच्छन्ती पणयो निधीन् वः' (ऋ० १०।१०८।२)

सूत्रेषु प्रधानो राजदूतः 'पालाकलः' (पालागल वा) उच्यते।[1]

**चरः**—श्रौतग्रन्थेषु चरसंस्था अपि प्रतिष्ठिता आसीत्। ऋग्वेदे वरुणस्य 'स्पशाः' श्रूयन्ते।

श्रौतग्रन्थेषु कर्मादिभेदत एव पञ्चधा विभागः—ब्राह्मणः क्षत्रियः, वैश्य इति त्रयः आर्याः, दासो दस्युश्चेति द्वावनार्याविति। क्वचित् पञ्चमवर्णो निषादोऽपि परिगण्यते। सूत्रकाराणां मते निषादस्तु स्थपतीष्टौऽधिकृतः। दासा आर्यैः सह सहयागं कुर्वन्ति स्म।[2] उ० क० गवामयनाख्ये सत्रे महाव्रतदिने शूद्रार्यावुभौ यज्ञवेदेः पार्श्वे चर्म निष्कर्षतः। अस्मिन्नेव कर्मणि अष्टौ दासकुमार्यः उदकुम्भैः मार्जालीयं प्रति गच्छन्ति स्म। आपस्तम्बस्तु एकस्मिन् सूत्रे[3] असुरानपि स्मरति, अनेन विज्ञायते यर्त्तहि असुरा अपि भारते वर्षे निवसन्ति स्म। त्रय आर्यवर्णा 'सार्ववर्णिक'[4] इति पदेनापि आख्यायन्ते, सर्ववर्णेषु शूद्राणामन्तर्भावो नासीत्।

**मिश्रितवर्णाः**—उ० क० सूतमागधानां आयोगवनापितादीनां च प्रासङ्गिक उल्लेखो विद्यते। तत्र महाव्रताख्ये दिने पुंश्चलुः (वेश्या) ब्रह्मचारी चान्योऽन्यमाकर्षतः।[5] सूतस्तु राजकर्मसु भूयसीं प्रतिष्ठां लेभे, स द्वादशरत्निषु परिगण्यते, यस्य गृहे राजा होमं करोति च राजवंशकीर्तिगायका मागधानामुल्लेखोऽपि उभयोः श्रौतसूत्रयोः विद्यते।

**वीणागाथी**—राजसूयाश्वमेधयोर्वीणागणकिनो वीणागाथिनश्च वीणा वादयन्ति गाथाश्च गायन्ति स्म। स वीणागाथी ब्राह्मण एव भवति। तत्राश्वमेधे वीणागाथी तिस्रो गाथा गायति—'अददा' इति

---

1. 'पालाकल इति अनृतद्रुतं' (आ० श्रौ १८।१।२६), 'स्पशः' शब्देन विकृतौ 'हिन्दी भाषायां सिपाही' आंग्लभाषायां स्पाई (Spy) एवं 'पुलिश' (Police) शब्दोऽपि स्पशस्य 'विकृतिरेव, कौटिल्लेनोल्लिखितं यदिन्द्रस्य सहस्रशो गुप्तचरा अभवन् तेन स 'सहस्राक्ष' उच्यते। (अर्थ० १।११।२६), श्रौतसूत्रेषु चराणां
2. निषादपञ्चमान् वर्णान् मन्यते शाकटायनः' (नि० ७।६६)
3. आ० श्रौ० (५।४।१४।६)
4. आ० श्रौ० (५।३।२०)
5. का० श्रौ० (१३।३।६)

'अयजथा' इति, 'अपच' इति ।'[1] महाव्रते तु दासकुमार्यः संवत्सरगाथां गायन्ति स्म—इदं 'मधु'[2] इत्यादि ।

**नापितः**—दीक्षामयेषु यज्ञेषु नापितस्य महत्यावश्यकता आसीत् ।[3] आपस्तम्बस्तु नापितं 'केशवाप' इत्याख्यायते ।[4]

**आयोगवः**—धर्मशास्त्रादिषूल्लिखितं 'वैश्यायां शूद्रेण जात आयोगव उच्यते' सैव सूत्रकाराभ्यां पूंश्चलुः उक्तः, अयं पुंश्चलु, अश्वमेधे सैध्रकमुसलेन श्वानं हन्ति ।[5]

**व्रात्याः**–उ० क० व्रात्यस्तोमाख्याश्चत्वार एकाहा व्रात्यैः करणीयाः । तदुक्तं पतञ्जलिना महाभाष्ये—'नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः । तेषां कर्म व्रातम् । व्रातेन कर्मणा जीवति स व्रातीनः ।'[6] व्रातीना एव व्रात्याः । एषां व्रात्यानामनेक उत्सेधजीविनो गणा आसन् । ते व्रात्या व्रात्यस्तोमैरिष्ट्वा पुनः आर्या अपि भवन्ति स्म । तेषां वैशिष्ट्यानि श्रौतसूत्रेषु वर्णितानि—ते यज्ञे निम्नगामिनं फलकास्तीर्णं रथं युजन्ति स्म, अस्त्रं तेषां ज्योह्लोडः तिर्यङ्नद्धोष्णीषा लोहितोष्णीषा ऋत्विजः प्रचरन्ति स्म, तेषां सर्वाणि वासांसि लोहितानि ।[7] अपरेषां च कृष्णशंकद्रुवासोऽपि भवति स्म ।[8] ते राजतान् निष्कान् विनिमये प्रयुञ्जन्ति स्म, तेषां ग्रामणीः व्रातपतिरुच्यते ।[9] ते व्रात्या व्रात्यस्तोमेनेष्ट्वा व्रातभावाद् विरम्य आर्या व्यवहार्याश्च भवन्ति स्म ।[10] एवं चाह पाणिनिराचार्यः 'अब्राह्मणा ब्राह्मणाः कृताः अक्षत्रियाः क्षत्रियकृताः ।'[11] मध्यकाले चाग्निकुलोद्भवा-

---

1. आ० श्रौ० (२१।१७।१६)
2. का० श्रौ० (१३।३।२१), आ० श्रौ० (२१।१६।१६)
3. का० श्रौ० (७।२।८)
4. आ० श्रौ० (१८।१५।६)
5. का० श्रौ० (२०।१।३८) आ० श्रौ० (२०।३।१२)
6. महाभाष्ये (५।२।२१)
7. 'लोहितवाससो लोहितष्णीषाः प्रचरन्त्यृत्विजः' (का० श्रौ० २२।३।१५)
8. का० श्रौ० (२२।४।१२)
9. का० श्रौ० (२२।४।७)
10. 'यस्या एनद्दहति तस्मिन्नेवंमृजानां यन्ति' (ताण्ड्यब्रा०)
11. अष्टा० (४।१।३०)

नामेवंविधिरुत्पत्तिरभवत् । त एव वाहीका म्लेच्छाश्चापि उच्यन्ते । ते शुद्धा भूत्वा आर्या भवन्ति च ।

**चातुराश्रम्यम्**—कल्पसूत्राणां धर्मसूत्राख्ये भागे चतुर्णां वर्णानां चतुर्णामाश्रमाणां च धर्माः प्रकीर्तिताः । चत्वार आश्रमास्त्वतिप्रसिद्धाः—ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाख्याः । श्रौतसूत्रेषु महाव्रताख्येऽहनि ब्रह्मचारी पुंश्चल्या सह नृत्यति, इदं विचित्रं वर्णनं ब्राह्मणेषु सर्वेषु च श्रौतसूत्रेषु चोपलभ्यते । सोमक्रतौ च ब्रह्मचारी उन्नेतारं दीक्षयति ।[1]

**पत्नी (स्त्री)**—श्रौतसूत्रेषु गृहपतिर्मेधपतिर्यज्ञपतिर्वा उच्यते । दारान् संगृह्य स्नातकः श्रोत्रियो गृहपतिर्भवति । यज्ञसंयोगादेव यजमानस्त्री पत्नीसंज्ञां लभते ।[2] पत्नी च यज्ञस्वामिन्युच्यते, सा तु यज्ञफलस्यार्धभागं च भुङ्क्ते । श्रौतयागेषु यजमानस्य बह्वीनां भार्याणामावश्यकता भवति स्म । राजन्यस्य चतस्रो भार्या विहिताः—'चतस्रो जाया उपक्लृप्ता भवन्ति—महिषी, वावाता, परिवृक्ता, पालागली' (श० ब्रा० १३।५।१।८), तथा चोक्तमैतरेयब्राह्मणे—'एकस्य बह्व्यो जाया भवन्ति' (३।२।१२), तदानीं शूद्रजातीया कृष्णवर्णा भार्या रामोच्यते स्म । श्रौतग्रन्थेषु दासीनां दानमपि श्रूयते । यज्ञे स्त्र्यधिकारसम्बन्धिनी मीमांसा चतुर्थेऽध्याये हि द्रष्टव्या ।

आपस्तम्बकल्पे महिष्यां जातः पुत्र 'माहिषेयः', ज्येष्ठायां जातः पुत्रः 'ज्यैष्ठिनेयः', कनिष्ठायां जातः पुत्रः कानिष्ठिनेयश्चोच्यन्ते ।[4]

वानप्रस्थसंन्यासाश्रमवासिनां श्रौतयज्ञैस्सह स्वल्पोऽपि सम्बन्धो नास्ति, तस्मात्तयोराश्रमयोरुल्लेखो अप्रासङ्गिक एव ।

---

1. पत्युर्नो यज्ञसंयोगे (अष्टा० ४।१।३३)
2. 'नाग्निं चित्वा रामामुपेयात्' (तै० सं० ५।३।८।६), 'न रामामुपेयात्' नास्य राम उच्छिष्ट पिबेत्' (का० श्रौ० १८।६।२६, आ० श्रौ० १७।२४।२), 'रामा रमणायोपेयते न धर्माय, कृष्णजातीया' (निरु० १२।२।२) ।
3. 'दासीसहस्राणि ददामि ते' (ऐ० ब्रा० ८।४।८)
4. आ० श्रौ० (१०।२०।७, २२।१३।२१, २।१।४)

**आनुजावरः**—'योऽल्पतेजस्वी सन् जातीनामनुगन्ता आनुजावर' उच्यते, यथा चोक्तं तैत्तिरीयब्राह्मणे—प्रजापतिरिन्द्रमसृजत आनुजावरं देवानाम् ।'[1] श्रौतसूत्रेषु आनुजावरस्यार्थम् अनेके क्रतवो निर्दिष्टाः ।[2] आ० कल्पे आनुजावरस्य भ्रातृव्यस्य च भूयसी चर्चा दृश्यते । तस्य तु न एतवान् विस्तारः कात्यायनकल्पे ।

**भ्रातृव्यः**—एवं तत्रैव आ० क० हि भ्रातृव्यस्य भूयसी चर्चा, भ्रातृव्यविनाशार्थं तैत्तिरीयसम्प्रदाये बहवो यज्ञा निर्दिष्टाः । श्येनादय एकाहाश्च भ्रातृव्यशमनार्थमिज्यन्ते स्म ।[3] अत्र भ्रातृव्यः शत्रुरुच्यते ।

**ज्येष्ठपुत्रः**—श्रौतसूत्रेषु पिता ज्येष्ठपुत्रस्य दायभागं तस्मै दत्वा सर्वमेधादिषु सर्वस्वदानं करोति ।[4]

**आतिथ्ये गोघातः**—गृहपतिः बहुकालादनन्तरमागतान् षड्विधान् पुरुषान् अर्घ्येण अर्चति । ते च आचार्यः, ऋत्विक्, स्नातकः, राजा, वरः, प्रियोऽतिथिश्च । तदानीमतिथिसत्काराय गोघातस्तु विशेषेण प्रचलित आसीत्, तेन हि अतिथिः, 'गोघ्न' इति संज्ञां लेभे । आ० क० अग्न्याधेये गोघातो विहितः ।[5] भवभूतिना चातिथिपूजने गोघातसम्बन्धिकल्पसूत्रकाराणां मतमुत्तररामचरितनाटके कथितम् ।[6] तत्र वशिष्ठार्थं गोवत्सायाः हननमभूत् । तथा च शांखायनगृह्यसूत्रे—

'मधुपर्के च सोमे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्र चेत्यब्रवीन्मनुः ॥'[7]

**गृहस्थार्थं यज्ञा अनिवार्याः**—आपस्तम्बमते यज्ञास्त्वनिवार्याः कार्या गृहस्थस्य—'त्रैविद्यानां तु वेदा प्रमाणमिति निष्ठा, तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयः—कपालपत्नीसम्बन्धान्युच्चैर्नीचैः कार्यमिति, तैर्विरुद्ध आचारो प्रमाणमिति मन्यन्ते' (आ० ध० २।६।१३।६) ।

1. तै० ब्रा० (२।२।१०।६१)
2. आ० श्रौ० (२।१६।२)
3. आ० श्रौ० भ्रातृव्ययज्ञः (१३।६।४), इत्यादयो वर्णिताः ।
4. का० श्रौ० (२२।१।१०)
5. आ० श्रौ० (५।६।१६।४)
6. उ० रा० (४।१)
7. शां० गृ० (२।१६।१)

**भक्ष्याणि**—श्रौतसूत्राणां काले आर्याणां प्रियं भोजनमोदनम्, क्षीरम्, व्रीहियवाः, उदमन्थः[1], आज्यमन्थः, यवसक्तुः, अपूपाः, पुरोडाशः, चरुः, यवागूः इत्यादीनां हवींषि भवन्ति च। जलेन संयुक्तसक्तुरुदमन्थः कथ्यते, क्षीरेण सिक्तो धानासक्तुः, एवं मधुसक्तुः, मधुमन्थ उच्यते, आज्येन संयुक्त आज्यमन्थो भवति, तथा च आज्यमन्थो ब्राह्मणस्य, पयोमन्थो राजन्यस्य, दधिमन्थो वैश्यस्य, यवागूरपि ब्राह्मणस्य पेयं भोजनम्, सूत्रयुगे यवागूर्भारतीयानां प्रियमशनम्, यथा पाणिनियुगे शाल्वेषु शाल्विका यवागू प्रसिद्धा। दध्ना मिश्रं दुग्धं सान्नायो भवति, तदपि प्रसिद्धं हविः। अतोऽन्यः करीरसक्तुः, खर्जूरसक्तुश्च व्रात्यानां भोजनमासीत्। मन्त्रेष्वपि सक्तवो अपूपाश्च आर्याणां प्रियाणि भोजनानि—यथा चोक्तं—

'यत्तेऽद्य कृणवद् भद्रशोचे। अपूपं देव धृतवन्तमग्ने।'[2] सर्पिराज्यं धृतं चोच्यते, नवनीतं हैयङ्गवीनमुच्यते। तदपि बाहुल्येन प्रयुज्यते। एकाहादिषु यज्ञेषु सक्षीरदृतयो दधिदृतयो रथैराह्रियन्ते स्म।[3]

तथा च ब्राह्मणानां बलकरो भक्ष्यः सोमो निर्णीतः, क्षत्रियाणां न्यग्रोधः, वैश्यानां दध्येवैकं बलकरं भक्ष्यं निर्णीतम्, शूद्राणां त्वाप एव भक्षिता बलकरा भवन्तीति ऐतरेयश्रुतिः।[4] तथैव कात्यायनापस्तम्बयोर्मतम्।[5] नीवाराः गवेधुकाः, श्यामाकाः करम्भाश्च धानाश्चान्या वेदविहिता भक्ष्याः।[6]

**मांसभक्षणम्**—असुरेषु मांसभक्षणं सदैव विहितमेव। कालान्तरेण आर्येषु ब्राह्मणाः क्षत्रियाश्च वृषभादीनां यज्ञशेषं मांसं भक्षयन्ति स्म।

---

1. 'अभिमृश्यार्घाः पिष्ट्वा निवान्यादुग्धे सक्तून्मथित एकशलाकया मन्थः।' (का० श्रौ० ५।८।१२)
2. ऋग्वेदे (१०।४५।९), तथा च—'कतरत्र आहराणि दधि मन्था परिश्रुतम्, जाया पतिं विपृच्छति राष्ट्रे राज्ञः परीक्षितः।' (अथर्व० २०।१२७।९)
3. 'सक्षीरदृतयो रथा भवन्ति' (ताण्ड्यब्रा० १६।१३।१३)
4. ऐ० ब्रा० (७।५।३-६)
5. का० श्रौ० (१०।९।३०), आ० श्रौ० (१२।२४।५)
6. 'पूषण्वते ते चकृमा करम्भं हरिवते हर्यश्वाय धानाः। अपूपमद्धि सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्।' (ऋ० ३।५२।७)

अतिथिसत्काराय गोघातश्चापि विहितः कृतः। तथ्यमिदं पूर्वमेव प्रतिपादितम्।[1] तत्राप्यजमांसस्यासीद् बहुप्रचलनमिति प्रतीयते, 'एष एतेषां पशूनां प्रयुक्ततमो यदजः।' बृहदारण्यकोपनिषदि च (६।४।१८) पुत्रार्थिने औक्षणम् आर्षभं वा मांसं विहितम्। शाकलानां षट्त्रिंशत्संवत्सरात्मके सत्रे तरसमयाः पुरोडाशा भवन्ति, तरसोऽत्र मांसमुच्यते। तत्र सत्रे गृहपतिः संस्थिते सत्रेऽहनि मृगयार्थं वनं गच्छति मृगाश्च हन्ति। ऐतिह्ये त्वगस्त्यादिभिस्तदनुष्ठितम्।[2]

**सुरापानम्**—सौत्रामण्यादिषु यागेषु सुरापानं विहितमेव, केनचित् कात्यायनेन भ्राजसंज्ञके श्लोकेऽस्य सुरापानस्य उपहासः कृतः—

'यदुम्बरवर्णानां घटीनां मण्डलं महत्।
पीतं न गमयेत्स्वर्गं किं तत्क्रतुगतं नयेत्॥'[3]

**द्यूतम्**—अनेकेषु यज्ञेषु (राजसूयादिषु) उ० क० अक्षद्यूतक्रीडा विहिता।[4] वेदमन्त्रेषु त्विदं द्यूतं निषिद्धमिव प्रतीयते।[5] तत्र तु हिंसाचौर्यव्यभिचारमद्यपानद्यूतादयो वर्जिताः कृताः। द्यूतसूक्ते ऋषिराह—'जाया तप्यते कितवस्य हीना माता पुत्रश्च चरतः क्वस्वित्। ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुपनक्तमेति।'[6] यन्मन्त्रेषु निषिद्धं तद् ब्राह्मणेषु श्रौतसूत्रेषु च विहितमभवत्।

इदानीं द्वाभ्यामक्षाभ्यां द्यूतं भवति, किन्तु सूत्रकाले पञ्चाक्षिकस्य द्यूतस्य प्रचलनमासीत्, तेषामक्षाणां नामानि—कृतत्रेताद्वापरकल्याः।[7] तत्र द्यूतकर्त्तारः सभावीद्यूतसभ्यः, आदिनवदर्शो द्यूतप्रेक्षकः, बहिःसद्, बहिःप्रेक्षकः, सभास्थाणुस्तु द्यूतान्तेऽपि चिरं द्यूतसभायां

---

1. तद्यथैवादो मनुष्यराज आगत अन्यस्मिन् वार्हति उक्षाणं वा वेहतं वा क्षदन्त एवमेवास्मा एनत् क्षदन्ते यदग्निं मन्थन्ति।' (ऐ० ब्रा० १।३।४)
2. आ० श्रौ० (२३।११।१३)
3. महाभाष्ये (नवाह्निके, पृ० ६)
4. आ० श्रौ० (५।६।१६।४), का० श्रौ० (१५।७।१७)
5. सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदमहुंरो गात्। आयोर्ह स्कम्भ उपमस्य नीडे पथां विसर्गे धरुणेषु तस्थौ (ऋ० १०।५।६)
6. ऋ० (१०।३४।१०)
7. शु० य० (३०।१८), तै० ब्रा० (३।४।१)

तिष्ठति। पञ्चाक्षिकद्यूतस्य व्याख्यानं काशिकायां द्रष्टव्यम्—'पञ्चिकानामाक्षद्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति। तत्र यदा सर्वे उत्ताना पतन्ति, अवाञ्चो वा पातयिता जयति। तस्यैवास्य विघातोऽन्यथा पाते सति जायते। अक्षेणेदं न तथा वृतं यथा पूर्वं जये, अक्षपरि, शलाकापरि, एकपरि, द्विपरि, त्रिपरि, परमेण चतुष्परि च। पञ्चस्वेकरूपासु जय एव भविष्यति।'[1] आ० क० च कृतसंज्ञकेनाक्षेण यजमानो जयति।[2] एषामक्षाणां नामभिः चतुर्णां युगानां संज्ञाः प्रथिता अभवन्।[3] द्यूतं राज्ञां प्रियतमं व्यसनमासीत्, एतच्च तथ्यं महाभारतादपि ज्ञायते। श्रौतसूत्रेषु तु राजसूये द्यूतमनिवार्यं कृत्यमभवत्।[4] तत्र श्रौतसूत्रेषु दिव्याक्षहृदयज्ञस्य अयोध्यापतेः नलसखस्य ऋतुपर्णस्य गाथा च गीयते—

'यमं भङ्ग्याश्रयो गाय यो राजानपरोध्यः। यमं गाय भङ्ग्याश्रवो यो राजानपरोध्यः।' (आ० श्रौ० १६।६।४) तथा चोक्तं बौधायनेन—'तेन हैतेन ऋतुपर्णो भाङ्गीश्वन ईजे शफलानां राजा' (आ० श्रौ० १८।१३), गाथयाऽनया च प्रतीयते यत् ऋतुपर्णेन हि अयोध्यानगर्याः नामकरणं कृतम्।[5] प्रतीयते, ऋतुपर्णादीनां काले हि यज्ञे अक्षद्यूतस्य विधानं समावेशितम्।

**वस्त्राणि**—उभयोश्श्रौतसूत्रयोः वासः, दशा, वसनम् वस्त्रं चैतानि पट्टाभिधेयानि पदान्युपलभ्यन्ते तत्र वसनानि प्रसिद्धानि—नीविः, ऊर्णदशा, सोमवासः, चण्डातकम्, तार्प्यः, पाण्डुकम्बलः, उष्णीषः, लौहितोष्णीषः, कृष्णोष्णीषः, कद्रुवासश्च। तत्र नीविः कटिबन्धनस्य

---

1. काशि० (२।१।१०)
2. 'कृतं यजमानो विजिनाति' (आ० श्रौ० ५।६।२०।६), पाणिनानाप्युक्तम्—'कृतं गृह्णाति कृतयति', 'कलिं गृह्णाति कलयति' (अ० ३।१।२१)
3. 'कलिः शयानो भवति संज्जिहानस्तु द्वापरः उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन्' (ऐ० ब्रा० ३३।१६)
4. का० श्रौ० (१५।१७।१५-१६), आ० श्रौ० (१८।१६।५)
5. अयोध्यां नगरीं गत्वा भाङ्गास्वरिरुपस्थितः' (वनपर्वणि ६८।२) (अनपरोध्या एव अयोध्या भवति)।

वस्त्रमासीत् तच्च आप्रपदीनं पटं भवति, उपबन्धनमुपनीविरुच्यते ।[1] पिण्डपितृयज्ञादिषु यजमानस्य नीविविस्रंसनमुक्तम् ।[2] मेषरोमनिर्मितं वस्त्रमूर्णादशा भवति, तस्या च यज्ञे बहुप्रयोगः। दीक्षितानाम् आसनार्थं कृष्णमृगाणां चर्माणि (कृष्णाजिनानि) बाहुल्येन प्रयुज्यन्ते स्म। अन्यत्रापि आर्षभस्य चर्मणः कृष्णाजिनस्य वा प्रयोगो विहितः, यथा ब्रह्मौदनादिकेषु वाजपेययागे नेष्टृसंज्ञक ऋत्विक्पत्नीमानीय कौशं वासः चण्डातकं दहरं वा परिधापयति ।[3] दहरं तु कौपीनम्, कौशं कुशमयम्, कौशेयं च चीनांशुकमुच्यते । जघनमात्रप्रच्छादनार्थं चालनकं वस्त्रं चण्डातकमुच्यते, यजमानो अहतवस्त्रं वा यज्ञेषु धारयति, उपरि सर्वतश्चाच्छाद्यते यद्वासस्तदधीवासः, यज्ञकञ्चुकः, उष्णीषस्तु शिरोवेष्टनम्। व्रात्यानां यथादेशं लोहितोष्णीषाः कृष्णोष्णीषा वा ऋत्विजो भवन्ति स्म।

राजसूयं यक्ष्यमाणो तार्प्यस्योपरि पाण्डुकम्बलं निवस्ते ।[4] यज्ञेषु पत्नी केशेषु योक्त्रपाशं बध्नाति, सोमयागेषु सा कुम्बकुरीराभिधं जालं शिरसि धारयति स्म ।[5]

**अलङ्काराः**—कात्यायनसूत्रे (१५।७।७) प्रकाशस्य (दर्पणस्य) उल्लेखो दृश्यते । राजसूयादिषु च यजमानो हिरण्यस्रजं हिरण्यपुण्डरीकं च धारयति, दक्षिणायां च तद्हिरण्यस्रजं दाने ददाति । अश्वमेधे च होत्रध्वर्यू हिरण्यकशिप्वोरासनयोरुपविशतः ।[6] श्रौतग्रन्थेषु निष्कस्य रुक्मस्य च बाहुल्येनोल्लेखः, 'प्रायेण राजा राज्ञी दासकुमार्यश्च एतानि

---

1. अष्टा० (४।३।४४)
2. का० श्रौ० (४।१।१५)
3. का० श्रौ० (४।१।१५), आ० श्रौ० (१५ ३।१६), 'अर्धोरुकं विलासिन्या वासश्चण्डातकं विदुः' (अमरकोशे २।६।११८)
4. का० श्रौ० (१५।५।१२)
5. आ० श्रौ० (१८।५।७), कीथस्य मते—A Linen garment one thrice soaked in ghee one of तप or the त्रिपर्णवक्षः, Goldstucker regarding of word is silken garment which Eggling is inclined to accept. (Vedic Index, p 308)
6. का० श्रौ० (१५।६।४)

भूषणानि धारयन्ति। ऋग्वेदे (५।१९।३), अथर्ववेदे (२०।१३१।१५), ऐतरेयब्राह्मणे (८।२२), शतपथब्राह्मणे (१३।४।१।८) च निष्काणां शतमानादीनां च वर्णनं दृश्यते, तथा चाह आपस्तम्बः—'निष्की स्रग्वी संग्रहीता भवतीति विज्ञायते।'[1] केषांचिद् विदुषां मते निष्कः शतपलस्य शतकृष्णस्य वा सुवर्णमुद्रा आसीत्।[2] शतमानं तु निश्चयेन विनिमयार्थं सुवर्णमुद्रा, शतमानानि दक्षिणायां च दीयन्ते स्म।

**वाहनानि**—तदानीं प्रसिद्धानि वाहनान्यासन्—(यज्ञेषु च प्रयुक्ततमानि)—अनः (शकटम्) रथः, अश्वरथः, अश्वतरीरथः महारथाश्च। भारवाहिनः पशवश्च—अश्वः, रासभः (गर्दभः), उष्ट्रः, अनड्वान्, अश्वतरः, अश्वतरी, हस्ती, वृषभश्च। यानस्य वह्यं वाहनं वेति संज्ञा।[3] वृषभो अनो वहति तेनास्य 'अनड्वानिति' संज्ञा, रथे पृष्ठे युज्यमानोऽश्वः प्रष्टिः[4] इति संज्ञां लभते। दक्षिणायां हस्तिवह्यमहानसां च दानं विहितम्। महानसोऽत्र महारथ उच्यते। उ० क० अश्वरथः अश्वतरीरथाश्च बाहुल्येनोल्लिखिताः कात्यायनेन (२२।२।२३) आजानेया अश्वा (वाह्लिकदेशोद्भवाः) चोल्लिखिताः।

रथाश्च त्रिविधाः परिवृताः क्रियन्ते स्म। वस्त्रेण, कम्बलेन, चर्मणा च। कम्बलेन परिवृतो रथ 'पाण्डुकम्बली' इति संज्ञा लभते। वैयाघ्रेण, द्वैपेन, आर्क्षेण व्याघ्रचर्मणा परिवृत्ता रथा अपि भवन्ति स्म।[5] रासभस्य चक्रीवानिति संज्ञा, अथवा रथस्य चक्रीवानिति च संज्ञा आसीत्।

**पशुपाल्यम्**—यज्ञेषु पशूनां महत्त्वमतिरोहितं विपश्चिताम्। गवादीनां पशूनां दुग्धं चर्म च यज्ञस्य आवश्यके अङ्गे आस्ताम्, अपि तु वाहनार्थं कृष्यर्थं च तेषां महती आवश्यकता आसीत्।

---

1. आ० श्रौ० (२२।१२ ९)
2. द० वैदिक इण्डैक्स, (पृ० ४५५)—'अश्वस्य ग्रीवासु सौवर्णं निष्कं प्रतिमुञ्चन्ति' (आ० श्रौ० २०।१३।४), शतेन, शतपलेन च निष्केण उद्गातारम्। (आ० श्रौ० २०।१३।८)
3. का० श्रौ० (१४।३।३१)
4. 'प्रष्टिवाहनं रथं युनक्ति' (आ० श्रौ० १८।१७।१)
5. आ० श्रौ० (२२।१२।७)

दोग्ध्री गोर्धेनुरुच्यते सा सर्वेषु यज्ञकार्येषु विशेषेण अग्निहोत्रार्थं प्रयुक्ततमा 'अग्निहोत्रीति' संज्ञां लभते। तस्या अन्यानि विशेषणानि-निवान्या, षष्ठौही अघ्न्यूघ्नी, दित्यौही, अनूबन्ध्या, कामदुघा, सोम-क्रयणी इति कार्यप्रयोजनेन सा बहुसंज्ञाः लेभे। मृतवत्सा निवान्या, षड्वर्षा षष्ठौही, द्विवर्षा दित्यौही, बहुदुग्धवती कामदुघा अघ्न्यूघ्नी वा, यज्ञार्थमनुबध्यते (बन्धनमाप्नोति) सा अनूबन्ध्या, सोमक्रयणार्था सोमक्रयणी। प्रजननसमर्थस्य बलीवर्दस्य 'साण्डः' 'मुष्करः' 'वृषभः', 'ऋषभ' इत्याद्याः संज्ञाः प्रथिता अभवन्। एवं वत्सः, वत्सतरः, वत्स-तरी च उ० क० बाहुल्लेनोल्लिखिताः।

गोरनन्तरमश्वस्यातिमहत्त्वं यज्ञेषु प्रथितमेव[1], यज्ञार्थं युद्धार्थं भारवाहनार्थं च अश्वो रथादिषु प्रयुज्यते स्म। चतुरङ्गिण्यां सेना-यामश्वसेना अपि भवति स्म, प्राधान्येन स रथ एव प्रयुज्यते स्म। दक्षिणादिषु च स बाहुल्येन प्रदीयते स्म। अश्वमेधे तु तस्य सर्वाधि-क्येन आदरः। यागे स देववत् पूज्यते, बलिं चाप्नोति स्म। यज्ञेषु हस्तिदानमपि क्वचित् श्रूयते। हस्तिना सह हिरण्यस्य दानमपि विहितम्—

'बहून् पशून् हस्तिहिरण्यमश्वान्' (कठोपनिषदि १।१।२३)

अत्र हिरण्यमिति उष्ट्रस्य नाम—

'त्रीण्युष्ट्रनामानि हिरण्यमित्येके अब्रवीत्।' (अथर्व० २२।१३२।१३)

अजस्तु प्रयुक्ततमो यज्ञेषु, स 'छागः', 'तूपरः', 'लप्सुदी' इत्याद्याः संज्ञाः प्राप्नोति। अजैस्सह अविश्च (मेषो) यज्ञेषु प्रयुज्यते। तस्या उर्णास्तुका उ० क० निर्दिष्टा।

**वन्याः पशवः**—उभयोश्श्रौतसूत्रयोरेते वन्याः पशवाः—सिंहः, हस्ती, तरक्षुः-शार्दूलः, महिषाः, व्याघ्रः, द्विपः, वृकः, एडकः, भये-डकः, वाराह च। श्वा तूभयविधः पशुः—ग्राम्यः, आरण्यश्च।[2] अश्व-मेधे पितृमेधे शुनश्चर्चा श्रूयते।

---

1. 'तस्मादश्वः पशूनामोजस्वितमः······पशूनामाशिष्टः' (श० ब्रा० १३।२।२।२)

2. 'ग्राम्याश्च ये पशव आरण्याश्च ये।' (शु० य० १८।४)

**यज्ञीया पशवः**—यज्ञेषु पञ्च पशव आलम्भनीया बभूवुः—

'तवेमे पञ्च पशवो विभक्ता गावो अश्वाः पुरुषा अजावयः ॥'[1]

क्वचित् पञ्च ग्राम्याः पशवः—

'ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु' (अथर्व० ३।१०।६) अश्वतरगर्दभौ मिलित्वा सप्त ग्राम्याः पशवो भवन्ति ।

**औषधयो वनस्पतयश्च**—श्रौतसूत्रेषु सप्त ग्राम्याः सप्तारण्याश्च ओषधय उक्ताः, तासां नामानि पूर्वमेवाभिहितानि ।

**यज्ञीया वृक्षाः**—उभयोश्श्रौतसूत्रयोरेते यज्ञीया वृक्षाः—उदुम्बरः, विकङ्कतः, पीतदारुः (देवदारुः), वेणुः, वंशः, न्यग्रोधः, प्लक्षः, काष्मर्यः, पलाशः, शमी, अश्वत्थः, विभीतकः, खदिरः, रोहीतकः, बिल्वः, वेतसः, सिध्रकः, अजकावः, एषां वृक्षाणां काष्ठानि यूपार्थं समिधार्थं पात्रार्थं च बाहुल्येन यथाविहितं प्रयुक्ततमानि भवन्ति स्म । यज्ञेषु दर्भाः दूर्वाः, इषीकाः, मुञ्जा, शणः, इक्षुश्च आवश्यका अभूवन् । दर्भास्तु यज्ञानां परमाश्यका द्रव्याणि यैर्विना न कोऽपि यज्ञः सम्पाद्यते ।

**कृषिकर्म**—कृषिस्तु श्रुतौ स्मृतौ[2] वा यज्ञ एवाभिहितम् । सर्वे यज्ञाः कृषिमेव लम्बन्ते । श्रौतसूत्रेषु कृषिसम्बन्धिन एते पदार्था विशिष्टाः—सीरः सीता, हलः, वापः, खलः, खलेवाली क्षेत्रम्, धान्यमरायुः, धान्यराशिः, शस्यम्, लवनम्, उपबर्हणम् च ।

सीरस्तु हलस्यापरनाम, सीता हलस्य फालः (अग्रभागः), वापो वपनम् खलस्तु लोके प्रसिद्धः, खलेवाली मेथी उच्यते, मूलोपवर्हणं

---

1. अथर्व० (११।२।९)
एकस्मिन् मन्त्रे ऐतेषां पञ्च पशूनां वधनिषेधः श्रूयते —'मा नो गोषु पुरुषेषु मा मा गृधो नो अजाविषु । अन्यत्रोग्र विवर्त्तय । पियारूणां प्रजां जहि' (अथर्व० ११।२।२१) ।

2 अग्नौ प्रस्ताहुतिः सम्यक् आदित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिस्ततोन्नं ततः प्रजाः ।' 'अन्नादभवन्ति भूतानि पर्जन्यादन्नसम्भवः । यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ।' (गीतायाम् ३।१४)

निरयनम्, धान्यमरायुः धान्यपरिमाणविशेषः। क्षेत्रादीनि तु प्रसिद्धानि तानि न व्याख्येयानि।

**वाद्यानि क्रीडा च**—तदानीं दुन्दुभिः, अपघाटलिका, भूमिदुन्दुभिः, तम्बलवीणा, शततन्तुवाणश्च प्रसिद्धानि वाद्यानि, एषां यज्ञेषु प्रयोगो विहितः। राजसूये अश्वमेधे च वीणागाथी वीणां वादयति स्म। महाव्रते कर्मणि ब्रह्मचारिपुंश्चल्योर्नृत्यम्, वाजपेये आजिधवनं च प्रसिद्धे क्रीडे आस्ताम्।

**धातवो मणयश्च**—श्रौत्रसूत्रेषु सुवर्णरजतसीसलोहादीनां धातूनामुल्लेखो दृश्यते। कृष्णायसस्य शस्त्राणि—परशुः क्षुरः असिः, शूलः नाराचः ककरः खनित्रम्, अष्ट्रा वाशी च निर्दिष्टाः। अश्वमेधे राजपत्न्यो अश्वमस्तके विविधान् मणीन् आबध्नन्ति स्म। ताश्च तमश्वम् आयसीभिः, राजतीभिः, हिरण्मयीभिश्च सूचीभिस्तुदन्ति स्म। अन्यानि च अस्त्रशस्त्राणि—शासः (का० श्रौ० ६।४।११), वज्रः (का० श्रौ० १।७।१७), निषङ्गः (का० श्रौ० २०।२।२१), कवचम् (का० श्रौ० २०।२।२१), मुसलम् (का० श्रौ० २०।२।११), आपस्तम्बसूत्रेषु (१८।१०) पाशः, कृपाणः कवचादीनि चोल्लिखितानि।

**वाणिज्यम्**—सोमक्रयणात् पणनस्य विनिमयस्य व्यवहारो ज्ञायते। परिक्रयणं तदानीं न श्रेष्ठं कर्म मन्यन्ते विपश्चितः। कौत्सो ब्राह्मणः शूद्रो वा सोमं विक्रीणाति स्म, नान्यो हि कश्चित्। वाणिज्यस्य न विशेषविवरणं श्रौतसूत्रेषूपलभ्यते।

**शिक्षा**—श्रौतसूत्राणां काले शिक्षाया विकासः प्रचारश्च वैदिकचरणेषु परिषत्सु विद्वद्गोष्ठीषु चाभवताम्। अरण्ये हि प्रायेण चैते चरणा भवन्ति स्म। कात्यायनापस्तम्बाभ्यामुल्लिखितं यद्ऋत्विजो अनूचानाः स्थविराः स्नातकाश्च भवेयुः। गुरोः शिष्या अन्तेवासिन उच्यन्ते स्म। गुरुनाम्ना च शिष्याणां विद्यावंशः प्रसिध्यति स्म। यथा तित्तिरेः शिष्याः तैत्तिरीयाः, वाजसनेयस्य शिष्या वाजसनेयिनः, कठस्य शिष्याः कठाः, एवं चरकादीनां शिष्याः।[1] प्रधानगुरुणा प्रवर्तितश्चरणो भवति स्म यत्र प्रधानशाखां तच्छिष्या अधीयते स्म।

1. चरक इति वैशम्पायनस्याख्या, तत्सम्बन्धेन सर्वे तदन्तेवासिनः चरका इत्युच्यन्ते। (का० श्रौ० ४।३।१०४)

विद्वत्सभा च परिषदासीत्, यथा शौनकस्य दीर्घसत्रे परिषत्, तदुल्लिखितं गोभिलेन—'यक्षमिव चक्षुषः प्रियो वा भूयासमिति सपरिषत्कमाचार्यमभ्येत्य ब्रह्मचारी पठति'[1], तदानीं सर्वं वाङ्मयं सर्वाः विद्याश्चासु संस्थासु विकासं लेभिरे।

**वाङ्मयम्**—कात्यायनापस्तम्बयोः श्रौतसूत्रयोश्चत्वारो वेदाः तच्छाखाः काठकादीनि ब्राह्मणानि, उपनिषदः वेदाङ्गानि, अथर्वशिराः, दाशतयी, गाथाः, इतिहासपुराणानि, आख्यानानि चोल्लिख्यन्ते। उ० क० शौनःशेपभौवमन्यवपारिप्लावाख्यानि आख्यानानि निर्दिष्टानि। राजसूयाश्वमेधयोर्होता हिरण्यकशिपावुपविश्याख्यानानि श्रावयति। तदनन्तरं सायं प्रातश्च ब्राह्मणवीणागाथिनौ गाथा गायतः।[2] एतानि आख्यानानि गाथाश्च लोकभाषायां च प्रणीतानि विद्यन्ते। एतानि आख्यानानि इतिहासपुराणानामेव भागा आसन्। ब्राह्मणग्रन्थेष्वपि गाथा आख्यानानि[3] च लोकभाषायां सन्ति। प्रमाणैरेभिः पाश्चात्यानां वितथानि मतानि अपास्तानि भवन्ति यद् इतिहासपुराणानि ब्राह्मणग्रन्थेभ्यो अर्वाक्कालिकानि सन्ति। विवशो विन्टरनीत्सः स्वयं लिलेख—

"We find in the Atiareya Brahman an Akhyan in which the Gathas or verses scattered among the prose approach the epic in language as well as in metre."[4]

श्रौतसूत्रेष्वपि बह्व्यो गाथा यत्र तत्र उदाहृताः। श्रौतसूत्रेषु गाथावाङ्मयेन सह नाराशंसवाङ्मयस्य च विद्यमानताऽपि सिध्यति—'येन नराः प्रशस्यन्ते स नाराशंसो मन्त्रः'[5]; (निरुक्ते ९।१।९)।



1. गो० गृ० (३।४।२८)
2. आ० श्रौ० (२०।७।१)
3. यथा ऐतरेयब्राह्मणे शौनःशेपोपाख्यानम्।
4. Ind. Lit. p. 211, Vol. I.
5. तथा च शतपथे—'स एवं विद्वान् गाथा नाराशंसीः इत्यहरहः स्वाध्यायमधीते।' (श० ब्रा० ११।५।६।८)।

# प्रथमं परिशिष्टम्

# कालविज्ञानम्

**महत्त्वम्**—यज्ञेषु कालविज्ञानस्य महत्त्वमतिरोहितमस्ति ।[1] चन्द्रमसः षोडशकला लोके[2] वेदे च प्रसिद्धाः । भारतीये कालविज्ञाने एते कालपरिमाणा प्रसिद्धाः—

| | | | | | |
|---|---|---|---|---|---|
| १।४ निमेषः | = | १ तुटः | ४० कलाः | = | १ नाडिका |
| २ तुटौ | = | १ लवः | २ नाडिके | = | १ मुहूर्तः |
| २ लवौ | = | १ निमेषः | १५ मुहूर्ताः | = | १ अहोरात्रः |
| ५ निमेषाः | = | १ काष्ठा | १५ अहोरात्राः | = | १ पक्षः |
| ३० काष्ठाः | = | १ कला | ५० नाडिका | = | १ अहोरात्रः |
| | | | २ पक्षौ | = | १ मासः[3] |

वर्तमाने पाश्चात्ये कालविभागे लघिष्ठ कालांशः सैकेण्ड उच्यते, शतपथे तु अग्निचयनप्रकरणे कालस्यातिसूक्ष्मतरमंशमुपलभ्यते—

शतं शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चापि चाविति ।' (श० ब्रा० १२।३।२।८) । श्रमादन्यत्र पुरुषः अहोरात्रयोः १०८०० प्राणान्

---

1. उक्तं च वेदाङ्गज्यौतिषकर्त्रा लगधाचार्येण—
वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः ।
तस्मादिदं कालविज्ञानशास्त्रं यो ज्यौतिषं वेद स वेद यज्ञान् (श्लोक ३)
2. 'कलानां सुपरीमाणात् काल इत्यभिधीयते' (वायुपु० १००।२२८)
कलापदे अण्प्रत्ययसंयोगेन कालः इति शब्दो निष्पन्नः ।
3. द्रष्टव्यानि – कौटिलीयमर्थशास्त्रम्, वायुपुराणम्, विष्णुधर्मोत्तरपुराणम्, सुश्रुतसंहिता च ।
काष्ठा निमेषा दश पञ्चैव त्रिंशच्च काष्ठा गणयेत् कलान्तम् ।
त्रिंशत्कलाश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता राश्यहनी समेते ।।
(वायुपु० ५०।१६९)

गृह्णाति एतावन्तो निश्वासान् च त्यजति। अग्निचयेन एतावतीरिष्टकाश्चीयन्ते। तथा हि—'यावन्तो निमेषास्तावन्तो लोमगर्ताः, यावन्तो लोमगर्तास्तावन्तो स्वेदायनानि, यावन्ति स्वेदायनानि तावन्त एते स्तोका वर्षन्ति।'[1] पुरातनैर्भारतीयैः कालविद्भिरहोरात्राणां मुहूर्तानां नामकरणमपि कृतम्—यथा रौद्रः, सार्वः, मैत्रः, पिण्ड्यः इत्यादयः आपस्तम्बश्रौतसूत्रे च (तैत्तिरीयब्राह्मणानुसारेण)—पूर्वपक्षस्याह्नां नामानि संज्ञानं विज्ञानमित्यादि, मुहूर्तानां नामानि—चित्रः केतुरित्यादि, रात्रीणां नामानि दर्शा, दृष्टा इत्यादि, रात्रिमुहूर्तानां नामानि दाता प्रदाता इत्यादि (आ० श्रौ० १९।१२।१–४, तै० ब्रा० ३।१०।१)।

**ग्रहा वाराश्च**—श्रौतसूत्रयोर्ग्रहाणां वाराणां च स्पष्ट उल्लेखो न विद्यते। आदित्यस्य (सूर्यस्य) बृहस्पतेः शुक्रस्य च मन्त्रेषु नक्षत्रप्रसङ्गेषु यादृशं वर्णनमुपलभामहे तत्तेनावगम्यते यत्ते ग्रहरूपेण स्तुता आसन्—यथा शुक्रामन्थिनोर्ग्रहग्रहणे मन्त्रः—'अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने।'[2] तथा च—'बृहस्पतिः प्रथमं जायमानो तिष्यं नक्षत्रमभिसम्बभूव।'[3] यज्ञेषु वारगणनाया आवश्यकता नासीत्तेन उभयोः श्रौतसूत्रयोस्तेषामुल्लेखो न दृश्यते।

**नक्षत्राणि**—उभयोः श्रौतसूत्रयोरग्न्याधानप्रकरणे नक्षत्राण्युल्लिखितानि। तत्र का० श्रौ० कृत्तिकारोहिणीमृगशिरःफल्गुनीहस्तचित्रानक्षत्राणि स्मृतानि[4], आ० श्रौ० कृत्तिकारोहिणीमृगशीर्षपुनर्वसुफल्गुनीहस्तचित्राविशाखानुराधाश्रवणप्रौष्ठपदाख्यानि नक्षत्राणि प्रकीर्तितानि विद्यन्ते।[5] तैत्तिरीयसंहितायामेतेषां नक्षत्राणां देवताश्चोक्ताः—

---

1. श० ब्रा० (१२।३।२।४-५)
2. ऋग्वेदे (१०।१२।३), आंग्लभाषाया च Venus 'वेनस' इति शुक्रस्य प्रसिद्धं नाम।
3. तै० ब्रा० (२।८।२)
4. का० श्रौ० (४।७।२-४)
5. आ० श्रौ० (५।३), अथर्ववेदे (१९।७) सर्वाणि सप्तविंशतिर्नक्षत्राणि कथितानि।

| नक्षत्रम् | देवता | नक्षत्रम् | देवता |
|---|---|---|---|
| कृत्तिका:[1] | अग्नि: | पूर्वाफाल्गुनी | अर्यमा |
| रोहिणी | प्रजापति: (सोम:) | उत्तराफाल्गुनी | भग: |
| मृगशीर्ष: | सोम: | हस्त: | सविता |
| आर्द्रा | रुद्र: | चित्रा | इन्द्र: |
| पुनर्वसु: | अदिति: | स्वाति: | वायु: |
| तिष्य: | बृहस्पति: | विशाखे | इन्द्राग्नी |
| आश्लेषा | सर्प: | अनुराधा | मित्र: |
| मघा | पितर: | रेवती | इन्द्र: |
| विचृत्ति: | पितर: | श्रविष्ठा | वसव: |
| पूर्वाषाढ़ा | आप: | शतभिषक् | इन्द्र: |
| उत्तराषाढ़ा | विश्वेदेवा: | प्रौष्ठपद: | अजैकपाद: |
| श्रवण: | विष्णु: | प्रौष्ठपद: | अहिर्बुध्न्य: |

**चान्द्रास्तिथय:**—काष्ठाकलामुहूर्तपक्षादय: पूर्वमभिहिता: । श्रौतयज्ञार्थं पौर्णमासी अमावास्या (दर्शा) च पुण्यतमे तिथी स्त:, तथ्यमिदं प्रकाशितं लोके वेदे च। कृष्णपक्षस्य अष्टमी रात्रिरष्टका इत्युच्यते साऽपि पुण्या तिथि: ।[2]

**मासा:**—श्रुतौ द्वादशमासा एवमभिधीयन्ते—

| | | | | | |
|---|---|---|---|---|---|
| चैत्र: | = | मधु: | आश्वयुज् | = | इष: |
| वैशाख: | = | माधव: | कार्तिक: | = | ऊर्ज: |
| ज्येष्ठ: | = | शुक्र: | मार्गशीर्ष: | = | सह: |
| आषाढ: | = | शुचि: | पौष: | = | सहस्य: |
| श्रावण: | = | नभ: | माघ: | = | तप: |
| भाद्रपद: | = | नभस्य: | फाल्गुन: | = | तपस्य: ।[3] |

अन्यत्रास्यां संहितायां मासानामपरनामधेयानि चोपलभ्यन्ते—अरुणोपरजा:, पुण्डरीको विश्वजिदभिजित्, आर्द्र: पिन्वमानोन्नवान्

1. कृत्तिका: षट् सन्ति—'अम्बा, दुला, नितत्नी, अयत्नी, मेघयन्ती, वर्णयन्ती चुम्पुणीका च' (तै० ब्रा० ३।१ ४)
2. तै० ब्रा० (१।५।१२), ताण्ड्यब्रा० (१०।३।१)
3. तै० सं० (१।४।१४)

रसवानिरावान्, सम्भरो सहस्वान् । त्रयोदश[1] मासोऽपि स्मर्यते—यथा 'त्रयोदश मासनामान्युपदधाति' (आ० श्रौ० १६।१२।११) ।

**ऋतवः**—श्रौतग्रन्थेषु पञ्चर्तवः, षडर्तवः सप्तर्तवो वा कथिताः—वसन्तग्रीष्मवर्षाशरद्हेमन्तशिशिराः प्रसिद्धाः । चातुर्मास्ययागेषु यजमानश्चतुर्भिमासनामभिरेककपालमभिजुहोति, पञ्चसंवत्सरैश्च स्वस्तिमाशास्ते ।[2]

**अयने**—षण्मासात्मके द्वे अयने उत्तरायणं दक्षिणायनं च श्रौतग्रन्थेषु प्रसिद्धे स्तः ।

**पञ्चसंवत्सराः**—मन्त्रेषु—'शरत्' 'समा', हिमा, 'वर्षम्' संवत्सरः 'महान्' 'कः' प्रजापतिः[3] इत्यादीनि संवत्सरस्य नामधेयानि प्रज्ञायन्ते । वाजसनेयिसंहितायां च पञ्चसंवत्सराः—'संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि ।' (२६।४५) आपस्तम्बश्रौतसूत्रे चातुर्मास्ययागेषु चैषां पञ्चवत्सराणां[4] स्वस्तिवाचनं विहितम् । इदमेव पञ्चसंवत्सरात्मकं युगम् ज्यौतिषशास्त्रेषु इतिहासपुराणेषु च स्मर्यते ।[5] अनेन युगेनोपबृंहितानि चत्वारि कृतादीनि युगानि प्रसिद्धान्यूभवन्निति अनुसन्धित्सूनां जिज्ञासा शमनीया ।



1. वेदा य उपजायते (ऋ० १।२५।८)
2. आ० श्रौ० (८।१२।५)
3. आ० श्रौ०—'चत्वारि संवत्सरनामान्युपदधाति—प्रजापतिः संवत्सरो महान् क इति' (१६।१२।१५)
4. आ० श्रौ० (८।२६।१८ इत्यादि द्रष्टव्यम्)
5. 'पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्' (ऋग्ज्यौतिषे १ श्लोकः) 'पञ्चसंवत्सरैरेकं प्रोक्तं लघुयुगं बुधैः' (मुनीश्वरः) ।

# द्वितीयं परिशिष्टम्

**श्रौतं दैवतविज्ञानम्**[1]—कात्यायनापस्तम्बश्रौतसूत्रेषु प्राधान्येन एता देवता इज्यन्ते—इन्द्रः, वरुणः, सविता, रुद्रः, प्रजापतिः, अग्निः, विष्णुः, अदितिः, पृथिवी, अश्विनौ, आयुः, आदित्यः, चन्द्रमा (सोमः), पर्जन्यः, पूषा, बृहस्पतिः, वास्तोष्पतिः, यमः, मित्रः, इन्द्राणी, कुहूः, सिनीवाली, अनुमतिः सरस्वती च।

यद्यपि वेदेषु ब्राह्मणेषु चैतिह्यं स्वीकर्त्तव्यं तथापि यजनीया देवा ऐतिहासिकाः पुरुषा नासन्—'तस्मादाहुर्नैतदस्ति यद्दैवासुरं यदिदमन्वाख्याने त्वदुद्यत इतिहासे त्विति।'[2] तथाहि मन्त्रेऽपि ऋषिराह—इन्द्रं प्रति—

'न त्वं युयुत्से कतमच्च नाहर्न ते मित्रो मघवन् कश्चनास्ति।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रून्ननु पुरा युयुत्से॥'
(ऋग्वेदे)

बृहदारण्योपनिषदि इन्द्रस्वरूपमाह याज्ञवल्क्यो वाजसनेयः—'स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति।'[3] यास्क इन्द्रपदस्य—अनेकान् व्युत्पत्तीनाह।[4] दैवतविज्ञाने प्राधान्येन 'तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानः। वायुर्वेन्द्रो वान्तरिक्षस्थानः। तासां महाभाग्यादेकैकस्यापि बहूनि नामधेयानि[5] तथा चाहुर्ऋषयः—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥[6]

---

1. वेदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः।
   दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति॥ (बृ० १।२)
2. श० ब्रा० (११।१।६।६)
3. बृ० उ० (६।३।६)
4. नि० (१०।१।४)
5. नि० (७।५)
6. ऋग्वेदे (१।१६४।४६)

**अग्निः**—श्रौतसूत्रेषु (वेदानुसारेण) अग्निरेव प्रधानो यज्ञस्य देवः।[1] अग्निहोत्रे, अग्न्याधाने, दर्शपूर्णमासयोः किं च सर्वेषु यज्ञेषु सर्वाहुतयो अग्नौ हूयन्ते। श्रौतसूत्रेषु प्रायेण अग्नये अष्टाकपालं पुरोडाशं यजमाना निर्वपन्ति। यथा आ० श्रौ० (९।३)—अग्नये व्रतपतये, क्षामवते, विविधये, विपृचे, वीतये शुचये चाष्टाकपालं पुरोडाशं निर्वपन्ति, का० श्रौ० (२५।४) चैवं विधानम्। अग्न्युपस्थानम् च श्रौतसूत्रेषु यज्ञस्य प्रधानं कृत्यं भवति, यस्मिन् कृत्ये यजमाना विविधैर्मन्त्रैरग्निं स्तुवन्ति।

**विष्णुः**—ब्राह्मणेषूक्तम्–'यज्ञो वै विष्णुः', 'विष्णुर्वै सर्वाः देवताः, अग्निर्वै देवानामवमो विष्णुः परमः' (ऐ० ब्रा०) याज्ञिका यज्ञस्यान्तिमेषु कर्मसु विष्णुक्रमादिषु वैष्णवान् मन्त्रान् जपन्ति। यथा का० श्रौ० (        ), आ० श्रौ० ४।१४।६, २०।२०।११), प्रायश्चित्तेषु च बहुधा वैष्णवीमृचं जपन्ते।

**इन्द्रः**—इन्द्राय महेन्द्राय वा सान्नायं हविर्यज्ञेषु बहुधा निरुप्यते। इन्द्राय च प्रायेण एकादशकपालं पुरोडाशं निर्वपन्ति।

**वरुणः**—वरुणाय यावश्चरुर्निरुप्यते। वरुणप्रधानेषु वरुणः प्रधानो देवता। राजसूयोऽपि वरुणस्य यज्ञ उच्यते। पाशमोचनाय च वरुणमन्त्रा जप्यन्ते।

**अदितिः**—श्रौतसूत्रेषु अदितये चरुर्निरुप्यते, एवं चादित्याय चरुर्विधीयते।

**रुद्रः**—रुद्राय गावेधुकचरुर्विहितः। अग्निचयने शतरुद्रीयहोमस्य रुद्रो देवता प्रधानः। पशुपतिरेव रुद्र उच्यते।

**मरुतः**—रुद्रस्य पुत्रा इन्द्रस्य च प्रजा मरुत उच्यन्ते। गणयज्ञेषु क्रीडिन्यादिषु इष्टिषु च मरुद्भ्यः सप्तकपालं पुरोडाशं निर्वपन्ति।

**सविता**–सवित्रे चाष्टाकपालं द्वादशकपालं वा पुरोडाशं निरुप्यते, सावित्रचयने सूर्यः (सविता) इज्यते।

---

1. ऋग्वेदस्य प्रथमे हि मन्त्रे 'अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥' (ऋ० १।१।१)।

**बृहस्पतिः**—वाजपेये बृहस्पतिः प्रधानो देवता। सैव ब्रह्मणस्पतिरुच्यते।

**वास्तोष्पतिः**—गृहप्रवेशे च वास्तोष्पतिरिज्यते। आ० क० तस्योल्लेखो दृष्टः, का० क० तन्नोल्लिख्यते कुत्रापि।

एवं विविधासु इष्टिषु यज्ञेषु च पृथक् पृथग्देवताः प्रधान्येनाप्रधान्येन वा इज्यन्ते, एतत्तु तत्तत्प्रकरणेष्वेव द्रष्टव्यम्।

क्वचित् क्वचिद् अश्विनौ, सरस्वती, द्यावापृथिवी, हिरण्यगर्भः, पुरुषः, नारायणः इत्येवमादयो देवा अपि श्रौतसूत्रेषु स्तूयन्ते–इज्यन्ते च। तथा च पिण्डपितृयज्ञे यमः पितरश्च प्रधाना देवता भवन्ति, अन्येषु च पितृयज्ञेषु यम इज्यते, तत्तु तत्तत्प्रकरणेष्वपि द्रष्टव्यम्। सोमयज्ञेषु सोमः प्रधानः देवः। तत्राग्निः सोमश्च प्राधान्येन इज्येते। क्वचित् क्वचित् पूषा, पर्जन्यः इत्यादयो देवाश्चापि इज्यन्ते, एवं सरस्वती, कुहूः सिनीवाली चापि राजसूयादौ इष्टा देवा भवन्ति। अलं बहुना अत्र विस्तरेण।



# तृतीयं परिशिष्टम्

**मितिविज्ञानम्**—श्रौतयागेषु अंगुल्यादीनाम् मानानामञ्जल्यादीनां च परिमाणानां प्रयोगो विहित आसीत्। शुल्वसूत्रेषु मानान्येवंविधानि विहितानि—

| | | |
|---|---|---|
| १४ अणवः | = | १ तिलः |
| ३४ तिलाः | = | १ अंगुलिः |
| १२ अंगुलयः | = | १ प्रादेशः, व्यामो वा। |
| १३ अंगुलयः | = | १ वितस्तिः |
| १५ अंगुलयः | = | १ पदम् |
| २४ अंगुलयः | = | १ अरत्निः |
| ३२ अंगुलयः | = | १ जानुः |
| ३६ अंगुलयः | = | १ शम्या |
| ८६ अंगुलयः | = | १ युगम् |
| १०४ अंगुलयः | = | १ अक्षः (रथाङ्गम्) |
| १२० अंगुलयः | = | १ पुरुषः (मानम्)[1] |

उभयोः श्रौतसूत्रयोरेतानि मानानि विहितानि। वेद्यादीनां निर्माणे चैषां महती आवश्यकता बभूव। आपस्तम्बश्रौतसूत्रे तु कृष्णस्य शतकृष्णलस्य, शतपलस्य, शतमानस्य, शुल्वस्य (क्रमशः आ० श्रौ० १८।१५।५, २०।१३।८, ५।२१।८, १।४।१०) मानान्यप्यभिहितानि। शङ्कुरज्जुवेणुप्रउगादयश्च यज्ञवेद्यादीनां मानेषु प्रयुज्यन्ते स्म। एवमञ्जलिप्रस्थाढकशूर्पशकटादीन्यपि परिमाणोपकरणान्यासन्। तथा च श्रौतसूत्रेषु परिमण्डलं (वृत्तम्), प्रउगः (त्रिभुजः)। शङ्कुः (कोणः) इत्येवमादीनामपि प्रयोग उपलभ्यते। आपस्तम्बश्रौतसूत्रे तु कानिचिद् विचित्राणि प्रमाणानि दृश्यन्ते, यथा—'कुल्मिमात्रोऽरत्निः प्रादेशः ऊर्वस्थि जान्वस्थि स्रुग्दण्ड इति तिर्यक्प्रमाणानि।'[2]



1. का० शु० (२ कण्डिका)
2. आ० श्रौ० (१।३।१३)

# चतुर्थं परिशिष्टम्

# व्यासपरम्परा

**वेदव्यासाः**—पुराणेषु वेदप्रवचनकर्त्तॄणामृषीणामिदं परम्परोपलभ्यते—

| | |
|---|---|
| प्रथम युगे | स्वयम्भूर्ब्रह्मा |
| द्वितीये युगे | मातरिश्वा |
| तृतीये युगे | उशना |
| चतुर्थे युगे | बृहस्पतिः |
| पञ्चमे युगे | विवस्वान् |
| षष्ठे युगे | वैवस्वतो यमः |
| सप्तमे युगे | इन्द्रः (काश्यपः) |
| अष्टमे युगे | वसिष्ठः |
| नवमे युगे | सारस्वतः (अपान्तरतमाः) |
| दशमे युगे | त्रिधामा |
| एकादशे युगे | शरद्वान् |
| द्वादशे युगे | त्रिविष्टिः |
| त्रयोदशे युगे | अन्तरिक्षः |
| चतुर्दशे युगे | वर्षिः |
| पञ्चदशे युगे | त्र्य्यारुणः |
| षोडशे युगे | धनञ्जयः |
| सप्तदशे युगे | कृतञ्जयः |
| अष्टादशे युगे | तृणञ्जयः |
| एकोनविंशे युगे | भरद्वाजः |
| विंशे युगे | गौतमः |
| एकविंशे युगे | निर्यन्तरः |
| द्वाविंशे युगे | वाजश्रवाः |
| त्रयोविंशे युगे | सोमशुष्मः |

| | |
|---|---|
| चतुर्विंशे युगे | तृणविन्दुः |
| पञ्चविंशे युगे | ऋक्षः (वाल्मीकिः) |
| षड्विंशे युगे | शक्तिः |
| सप्तविंशे युगे | पराशरः |
| अष्टाविंशे युगे | कृष्णद्वैपायनः[1] |



1. वायुपुराणे—अध्यायः (२३)

# पञ्चमं परिशिष्टम्

# प्रवराः

आपस्तम्बेन यज्ञपरिभाषाप्रश्ने (चतुर्विंशेऽध्याये, ५-१० कण्डिकासु) प्रवराः कथिताः प्रवरा हि चार्षेया[1] उच्यन्ते। तत्र यज्ञेषु यजमान ऋषीणामेव आर्षेयं वृणीते, न मनुष्याणां न देवानामिति सिद्धान्तः, तथा चोक्तमापस्तम्बेन—'ऋषिणा हि देवा पुरुषमनुबुध्यन्त इति विज्ञायते', (आ० श्रौ० २४।५।४, कस्यचित् ब्राह्मणग्रन्थस्य वचनमुद्धृतम्)। तत्र यागे यदा यजमानः त्रीन् स्वान् प्रवरानृषीन् नामोल्लेखपूर्वकं कथयति, एतदेव कथनं प्रवरवरणमुच्यते। ते च प्रवरा मन्त्रकृत ऋषयो भवन्ति, आपस्तम्बमते तत्र यजमानो यथर्षि मन्त्रकृतो वृणीते, आचार्याणां मतभेदेन च स एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते न चतुरो वृणीते न च पञ्चातिवृणीते, इति।

मन्त्रकृत एव ऋषयो भवन्ति, तच्चोक्तं तैत्तिरीयारण्यकबृहद्देवतानिरुक्तपुराणादिषु ग्रन्थेषु यत् पञ्चभिः कारणैर्ऋषीणां मन्त्राः प्रादुर्बभूवुः—

ऋषीणां तप्यतामुग्रं तपः परमदुष्करम्।
मन्त्राः प्रादुर्बभूवुर्हि पूर्वमन्वन्तरेष्विह॥
असन्तोषाद् भयाद् दुःखात् सुखाच्छोकाच्च पञ्चधा॥
(ब्रह्माण्डपु० २।६२।६७-६८)

---

1. The Pravaras is a list of names, in most cases three of (supposition) ancestors, which is recited at certain points in sacrificial ritual.

(The Early Brahmanical System of Gotra and Pravara by J. Brough, p. 4, or Gotra Pravara Manjari of Purusottam).

प्राय: सर्वेषां पृथक् पृथक् श्रौतसूत्राणां प्रवराणां पृथक् पृथक् सूचय[1] उपलभ्यन्ते, एतेषां बौधायनश्रौतसूत्रस्य महाप्रवरकाण्डं सर्वाधिक्येन विशालतरम्, कात्यायनेन तु परिशिष्टे प्रवराध्याय: प्रोक्त:, मानवश्रौतसूत्रस्य प्रवराध्यायेन सह कात्यायनप्रवराध्यायस्य महती समानता वर्तते । एवं च वायुपुराणे (५९।५६), ब्रह्माण्डपुराणे (२।३२।९२), मत्स्यपुराणे (१४५।५८) प्रवराणां महत्य: सूचय उपलभ्यन्ते ।

पुराणेषु चैते पञ्चधा ऋषय उल्लिखिता:—महर्षय:, ऋषय:, ऋषीका:, ऋषिपुत्रा:, श्रुतर्षयश्च । तत्र दशानामाद्यानामृषीणां विश्वसृजां महर्षय इति संज्ञा, त एव प्रजापतय उच्यन्ते स्म—

भृगुर्मरीचिश्च ह्यङ्गिरा: पुलह: क्रतु ।
मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्च ते दश ।

तत्र ब्रह्माण्डादिषु पुराणेषु मन्त्रकृतामृषीणां द्विनवति: परिगण्यन्ते—

**भार्गवाणामेकोनविंशति:**—(१) भृगु: (२) उशना काव्य:, (३) प्रचेता (वरुण:) (४) दध्यङ् आथर्वण:, (५) आप्तवान् (६) ऋचीक और्व (७) जमदग्नि: (८) विद: (९) सारस्वत: (अपान्तरतमा:) (१०) आर्ष्टिषेण: (११) च्यवन: (१२) वीतहव्य: (१३) सुमेधा: (१४) पृथु:, (१५) वैन्य:, (१६) दिवोदास: (१७) बाध्रचश्व:, (१८) गृत्समद: (१९) शौनकश्च ।

**अङ्गिरसास्त्रयस्त्रिंशत्**—(१) अङ्गिरा: (२) त्रित: (३) भरद्वाज: (४) ऋतवाक् (५) गर्भ: (६) शिनि: (७) संकृति: (८) गुरुवीति:

1. Panini as is well–known, gives a detailed and intricate set of rules for the formation of gotra names by means of the suffixes.........Both the text of Panini and that of the Ganpath is therefore supply us with a very valuable evidence in a number of cases for reconstruction of text of the Pravara lists. (The Early Brahmanical System of Gorta and Pravara by J Brough, p. 51 or Gotra Mamjari of Purusottam).

(९) मान्धाता (१०) अम्बरीष: (११) युवनाश्व: (१२) पुरुकुत्स: (१३) त्रसद्दस्यु: (१४) सदस्युकान् (१५) आहार्य: (१६) अजमीढ़ (१७) ऋषभ: (१८) कवि: (१९) पृषदश्व: (२०) विरूप: (२१) कण्व: (२२) मुद्गल: (२३) उतथ्य: (२४) शरद्वान् (२५) वाजश्रवा: (२६) अयास्य: (२७) सुवित्ति: (२८) वामदेव: (२९) असिज: (३०) बृहदुक्थ: (३१) दीर्घतमा: (३२) कक्षीवान्। पुराणपाठेषु कस्यचिदेकस्य ऋषेर्नाम नोपलभ्यते।[1]

**षड् काश्यपा:**—(१) कश्यप: (२) वत्सार: (३) नैध्रुव: (४) रैभ्य: (५) असित: (६) देवल:।

**षड् आत्रेया:**—(१) अत्रि: (२) अर्चनाना: (३) श्यावाश्व: गविष्ठिर: (५) आविहोत्र: (६) पूर्वातिथि:।

**सप्त वासिष्ठा:**—(१) वसिष्ठ: (२) शक्ति: (३) पराशर: (४) इन्द्रप्रमिति: (५) भरद्वसु: (६) मैत्रावरुणि: (७) कुण्डिन:।

**त्रयोदश कौशिका:**—(१) विश्वामित्र: (२) देवरात: (शुन:शेप:) (३) उद्धल: (४) मधुच्छन्दा: (५) अघमर्षण: (६) अष्टक: (७) लोहित: (८) कत: (९) कील: (१०) देवश्रवा: (११) रेणु: (१२) पूरण: (१३) धनञ्जय:।

**त्रय आगस्त्या:**—(१) अगस्त्य: (२) दृढ़द्युम्न: (दृढ़ायु:) (३) इन्द्रबाहु: (इध्मवाह:)।

**द्वौ मन्त्रकृतौ क्षत्रियौ**—(१) वैवस्वतो मनु: (२) पुरूरवा ऐल:।

**त्रयो वैश्या:**—(१) भलन्दन: (२) वत्स: (३) संकील:।[2]

---

1. 'This text is, so similar to the Katyayan Pravara edited by A. Weber, that both may be remote Mss. from the same original (Manav S. S. Ed. by J. M. V. Gelder Int. p. 5).

**अपि—** ब्रह्माण्डपुराणे (२।३२।६२), वायुपुराणे (५९।५६), मत्स्यपुराणे (१४५।५८), वैदिक वाङ्मय का इतिहास, भाग १, 'वेदों के ऋषि' विंशोऽध्याय:, आपस्तम्बश्रौतसूत्रे (अध्याय २४, कण्डिका ५-१०

मध्यकाले पुरुषोत्तमपण्डितेन 'गोत्रप्रवरमञ्जरी' नामकं पुस्तकं प्रणीतम्, यस्मिन् सर्वेषां श्रौतसूत्राणां गोत्रप्रवरसूचनीनां संग्रहः कृतो वर्तते, इदं च दुर्लभपुस्तकं 'जोह्नब्रू' नाम्ना पाश्चात्यविदुषा सम्यक् सम्पाद्य प्रकाशतां नीतम् ।



कात्यायनप्रवराध्यायश्च), तथा च—'Gotra Pravara Manjari or Early Brahmanical System of Gotra & Pravaras edited by John Brouhgh, Cambridge University Press, (1953).

# सन्दर्भ-ग्रन्थ-सूची

**संहिताः—**

अथर्ववेदसंहिता—परोपकारिणीसभा, अजमेर, सं० २००१

ऋग्वेदसंहिता—श्रीपाददा० सातवलेकर, स्वाध्यायमण्डल, औन्धनगर १९४०

काठकसंहिता— ,, ,, ,, सतारा, १९४३

काठकसंहिता— ,, ,, ,, ,, सं० १९९७

कपिष्ठलसंहिता—डा० रघुवीर, मेहरचन्द्र लक्ष्मणदास, लाहौर, १९३२

तैत्तिरीयसंहिता—ए० वी० कीथ, मोतीलाल बनारसीदास, प्रथम १९१४, (दिल्ली १९६७)

मैत्रायणीयसंहिता—ल० व० औडर, बेवार्ण १८८५

यजुर्वेदसंहिता—श्रीपाद सातवलेकर, स्वाध्यायमण्डल, पारडी, सूरत, १९५७

सामवेदसंहिता— ,, ,, ,, ,,

**ब्राह्मणानि—**

ऐतरेयब्राह्मणम्—षड्गुरुशिष्यकृतसुखप्रदाटीकासमेतम्, त्रिवेन्द्रम्, १९४५

योडोर अफ्रेट, बोन १८७९

ा ऐतरेय एण्ड कौषीतकि ब्राह्मणाज ग्राफ -ए० बी० कीथ, हार्वड यूनिवर्सिटी प्रेस, १९२०

ं० गंगाप्रसादकृतः हिन्दीअनुवादः—हिन्दी ाहित्य सम्मेलन प्रयाग, सं० २००७

ा० राजेन्द्रलाल मित्र, इण्डोलोजीकल बुक ाउस, न० दिल्ली, १९७२

-डा० लोकेशचन्द्र, सरस्वती विहार, दिल्ली, २०११

ाह्मणम्–दुर्गामोहन भट्टाचार्य, संस्कृत कालेज सीरीज, कलकत्ता, १९५८

ताण्ड्यमहाब्राह्मणम्—चिन्नस्वामी, चौखम्बा संस्कृत सीरीज, वाराणसी, १९९१ सं०

ताण्ड्यब्राह्मणम्–भाग २— ,, ,, ,, ई० १९३६

तैत्तिरीयब्राह्मणम्–भट्टभास्करभाष्योपेतम्–आर० शामा शास्त्री, मैसूर, १९२१

तैत्तिरीयब्राह्मणम्—आनन्दाश्रम संस्कृत ग्रन्थमाला, १९३८

देवताध्यायसंहितोपनिषद्वंशब्राह्मणानि—बी० रामचन्द्र, केन्द्रीय संस्कृत विद्यापीठ, तिरुपति, १९६५

पञ्चविंशब्राह्मणम्—आंग्लभाषायामनुवाद: डा० कालैण्ड, एशियाटिक सोसाइटी बंगाल, कलकत्ता, १९३१

शांखायनब्राह्मणम्—हरिनारायण भट्टाचार्य, संस्कृत कालेज, कलकत्ता, १९७०

शतपथब्राह्मणम्—त्रयो भागा:, हिन्दी अनुवादसहिता:, पं० गंगाप्रसाद उपाध्याय, भूमिका आंग्लभाषायां–डा० सत्यप्रकाश, रिसर्च इन्स्टीट्यूट आफ एंशेन्ट साइन्टिफिक स्टडीज, दिल्ली, १९६९

षड्विंशब्राह्मणम्—डा० बी० रामचन्द्र शर्मा, केन्द्रीय संस्कृत विद्यापीठ, तिरुपति, १९६७

सामविधानब्राह्मणम्—डा० बी० रामचन्द्र शर्मा, केन्द्रीय विद्यापीठ, तिरुपति, १९६४

**आरण्यकानि—**

ऐतरेयारण्यकम् - आनन्दाश्रमसंस्कृतग्रन्थावली, पूना, १८९८

ऐतरेयारण्यकम्—ए० बी० कीथ, औक्सफोर्ड, १९०९

तैत्तिरीयारण्यकम्— द्वौ भागौ, सायणभाष्योपेतम्, आनन्दाश्रमसंस्कृत ग्रन्थावली, पूना, १९६७

**उपनिषद:—**

कठोपनिषद्—गीताप्रेस, गोरखपुर, २०१२ सं०

छान्दोग्योपनिषद्—,, ,, २०१९ सं०

बृहदारण्यकोपनिषद्–,, ,, २०१२ सं०

मुण्डकोपनिषद्— ,, ,, २००९ सं०

प्रश्नोपनिषद्—सार्वदेशिक आर्यप्रतिनिधिसभा, दिल्ली, १९६८

**श्रौतसूत्राणि—**

आपस्तम्बश्रौतसूत्रम्—त्रयो भागाः, सं० आर० गार्बे, रायल एशियाटिक सोसाइटी बंगाल, कलकत्ता, १८८२-१९०३।

आपस्तम्बश्रौतसूत्रम्—सम्पुटत्रयम् (अपूर्णम्) - धूर्तस्वामिभाष्यादिसमेतम्—सं० नरसिंहाचारी, मैसूर। (दशप्रश्नपर्यन्तमात्रम्)।

आश्वलायनश्रौतसूत्रम्-आनन्दाश्रम पूना, १९१७

कात्यायनश्रौतसूत्रम्—वेबर, चौखम्बा संस्कृत सीरीज वाराणसी,

जेमिनीयश्रौतसूत्रम्—(जैमिनीयश्रौतसूत्रवृत्तिः)-प्रेमनिधि शास्त्री सरस्वती विहार दिल्ली, १९६६

द्राह्यायणश्रौतसूत्रम्—डा० रघुवीर, मेहरचन्द लक्ष्मणदास लाहौर।

बौधायनश्रौतसूत्रम्—कालैण्ड-संपुटत्रयम् एशियाटिक सो० कलकत्ता, १४-४-१३

मशकश्रौतसूत्रम्—कैलेण्ड, लैदजिंग, १९०८

मानवश्रौतसूत्रम्—डा० जे० एम० वार्नगल्डनर, इण्टर० एके० दिल्ली, १९५१

भारद्वाजश्रौतसूत्रम्-सी० जी० काशीकर, वैदिक संशोधन मण्डल, पूना, १८८६ शा०

लाट्यायनश्रौतसूत्रम्—म० म० मुकुन्द झा बक्शी चौ० सं० सी० वाराणसी, १९८७ सं०

वाधूलश्रौतसूत्रम्—कैलेण्ड, अकटा ओरियन्टल वोल्यूम, १,२,४,६

वाराहश्रौतसूत्रम्—डा० कालैण्डः, रघुवीरश्च, दिल्ली, १९७१

वैखानसश्रौतसूत्रम्-डा० कालैण्ड, रायल एशि० सोसा० कलकत्ता, १९४१

वैतानश्रौतसूत्रम्—विश्वेश्वरानन्दसंस्थानम्, होशियापुर, १९६७

शांखायनश्रौतसूत्रम्—डा० कालैण्डः, लोकेशचन्द्रश्च इण्डरनेशनल एकेडेमी, नागपुर, १९५३

सत्याषाढश्रौतसूत्रम्—आनन्दाश्रम संस्कृतग्रन्थावली, १९०८

वैखानसस्मार्तसूत्रम्—कालैण्ड, एशियाटिक सोसाइटी, कलकत्ता, १९२९

**गृह्यसूत्राणि—**

आपस्तम्बगृह्यसूत्रम्—विण्टरनीत्स, वीयना, १८८७
आपस्तम्बीयमन्त्रपाठः—विण्टरनीत्स, आक्सफ़ोर्ड, १८९७
पारस्करगृह्यसूत्रम्—वेंकटेश्वर प्रेस, बम्बई
शांखायनगृह्यसूत्रम्—सीताराम सहगल, ब्रह्मविहार, राजौरी गार्डन, दिल्ली।

**धर्मसूत्राणि—**

आपस्तम्बधर्मसूत्रम्—सं० उमेशचन्द्र चौ० सं० सी० वाराणसी, १९६९
बौधायनधर्मसूत्रम्—चिन्नस्वामी शास्त्री चौ० सं० सी० वाराणसी १९९१ सं०
गौतमधर्मसूत्रम्—डा० वेदमित्र, नेशनल प० हाउस, १९६९

**शुल्वसूत्राणि—**

आपस्तम्बशुल्वसूत्रम्—सं० डा० सत्यप्रकाश, प्राचीन वै० अ० संस्थान, दिल्ली
कात्यायनशुल्वसूत्रम्—अच्युत ग्रन्थमाला काशी, १९८५ सं०
बौधायनशुल्वसूत्रम्—डा० सत्यप्रकाश, प्राचीन वैज्ञानिकाध्ययन अनुसन्धानसंस्थानम्, दिल्ली, १९६८

**कर्मकाण्डग्रन्थाः—**

कर्मप्रदीपः–कात्यायनः, एशियाटिक सो० बंगाल, कलकत्ता, १९२३
निदानसूत्रम्—के० भटनागर, दिल्ली।
मीमांसादर्शनम्–शाबरभाष्योपेतम्, आनन्दाश्रम संस्कृत ग्रंथावली
मीमांसनुक्रमणिका—मण्डनमिश्रः, १९८७
यज्ञसरस्वती—वि० वा० मधुसूदन ओझा, जयपुर, २००३

**दैवतग्रन्थाः—**

बृहद्देवता—अनु० रामकुमार राय, चौ० सं० सी०, १९६३
सामवेदार्षेयदीपः—भट्टभास्कर बी० रामचन्द्र के सं० वि० तिरुपति, १९६७

**दर्शनशास्त्रम्—**

न्यायभाष्यम्—चौखम्बा संस्कृत सीरीज, वाराणसी

सांख्यकारिका—सांख्यतत्त्वकौमुदी टीकासहिता, चौखम्बा संस्कृत सी०, वाराणसी।
श्रीमद्भगवद्गीता—गीताप्रेस गोरखपुर, २०२३

**धर्मशास्त्रम्—**

मनुस्मृतिः—कुल्लूककृतमन्वर्थमुक्ता० बम्बई १९१३
याज्ञवल्क्यस्मृतिः—वेंकटेश्वर प्रेस, बम्बई, १९००
अर्थशास्त्रम्—कौटिलीयम्, मैसूर।

**काव्यानि—**

कृष्णचरितम्—समुद्रगुप्त, रसशाला औषधालय, गोंडल, १९४१

**इतिहासपुराणानि—**

ब्रह्माण्डपुराणम् श्रीवेंकटेश्वर प्रेस, बम्बई
मत्स्यपुराणम्—गुरुमण्डल ग्रन्थमाला, कलकत्ता, १९५४
वायुपुराणम्—श्रीराम शर्मा, बरेली, १९६९
विष्णुपुराणम्—गीताप्रेस, गोरखपुर।
महाभारतम्—हिन्दी अनुवाद सहित, ४ भागाः, गीताप्रेस, गोरखपुर।
वाल्मीकीयरामायणम्—गीताप्रेस, गोरखपुर, २०२०
युगपुराणम्—डी० आर० मनकड, चारुता प्रका०, बलभविद्यानगर, १९५१
हरिवंशपुराणम् गीताप्रेस, गोरखपुर, २०२४

**व्याकरणग्रन्थाः, भाषाविज्ञानम्—**

अष्टाध्यायी—(सूत्रपाठः वार्तिकं, गणपाठः, धातुपाठः, शिक्षा च) मेलापुर, मद्रास, १९३७।
अमरकोशः—प्रभाटीकायुतः चौ० सं० पुस्तकालय वाराणसी, १९४९
अरविन्द'स वेदिकग्लोसरी—ए० बी० पुराणी अरविन्दाश्रम पाण्डेचेरी, १९६२
ए ग्रामर आफ संस्कृत लैंग्वेज–कीलहार्न चौ० सं० सी० वाराणसी, १९७०
ऋक्तन्त्रम्—डा० सूर्यकान्त, मेहरचन्द लक्ष्मणदास, दिल्ली १९७०

काशकृत्स्नधातुव्याकरणम्–चन्नवीरकविकृत कन्नड टीका, युधिष्ठिर मीमांसक, अजमेर, २०२२।

गणरत्नमहोदधि: जे० एगलिंग, मो० ब० दिल्ली

निरुक्तशास्त्रम्—पं० भगवद्दत्तकृत अनुवादसहितम् रामलाल कपूर अमृतसर, २०२१

निरुक्तसम्मर्शः—स्वामी ब्रह्ममुनि परिव्राजक, अजमेर, १९६६

निरुक्तम्—गुरुग्रन्थमाला कलकत्ता, १९५३

भाषा का इतिहास—पं० भगवद्दत्त, इतिहास प्रकाशन मण्डल दिल्ली।

महाभाष्यम्—श्री चारुदेव शास्त्री, मोतीलाल बनारसीदास, वाराणसी, २०१९

शुक्लयजु:प्रातिशाख्यम्—इन्दु रस्तोगी, चौ० सं० सी, वाराणसी, १९६७

काशिका—चौखम्बा सं० सी० १९३१

वैदिक वाङ्मय में भाषा चिन्तन—शिवचरण शास्त्री, दिल्ली, १९७२

संस्कृत व्याकरण ह्विटने—हिन्दी अनुवाद मुनीश्वर झा, लखनऊ, १९७१

वैदिक व्याकरण—डा० रामगोपाल, ने० प० हा०, दिल्ली

शिक्षासूत्राणि—सं० युधिष्ठिर मीमांसक, अजमेर।

सिद्धान्तकौमुदी—सं० गोपाल शास्त्री नेने, चौ० सं० सी० वाराणसी, १९५८

**इतिहासा:—**

ए हिस्ट्री आफ संस्कृत लिटरेचर–वेबर, चौ० सं० सी० वाराणसी, १९५८

ए हिस्ट्री आफ एशेंट संस्कृत लिटरेचर—मैक्समूलर, चौ० सं० सी०, वाराणसी, १९६८

ए हिस्ट्री आफ संस्कृत लिटरेचर–मैकडानल, मुन्शीराम मनोहरलाल, दिल्ली, १९६८

भारतवर्ष का बृहद् इतिहास, द्वौ भागौ—पं० भगवद्दत्त—इति० प्रका० मण्डल, दिल्ली, २०१७–१८

वैदिक वाङ्मय का इतिहास, भाग १, पं० भगवद्दत्त, लाहौर
वैदिक वाङ्मय का इतिहास, भाग २, पं० भगवद्दत्त—प्रणव प्रकाशन, दिल्ली, १९७४
संस्कृत व्याकरण शास्त्र का इतिहास—भाग १, पं० युधिष्ठिर मीमांसकः—रामलाल कपूर ट्रस्ट, २००७, अमृतसर।

आलोचनाग्रन्थाः—

ए क्रिटिकल स्टडी आफ कात्यायनश्रौतसूत्र डा० के० पी० सिंह, बनारस हि० यू०, १९६९
अर्ली ब्राह्मनीकल सिस्टम आफ गोत्र एण्ड प्रवर जोहन ब्रू, कैम्ब्रिज, १९५३
आन दी वेदाज—अरविन्द-अरविन्दाश्रम, पाण्डेचेरी, १९७१
आरिजन एण्ड डिवलपमेण्ट आफ रिचुअल आफ एन्सेस्टर वर्शिप इन इण्डिया, कलकत्ता, १९६३
आरिजनल संस्कृत टैक्सट्स—जे० मूइर, चौ० विद्याभवन, वाराणसी
इण्डिया आफ वैदिक कल्पसूत्राज्—डा० रामगोपाल, नेशनल प० हाउस, दिल्ली
ऐतरेयालोचनम्-पं० सत्यव्रत सामाश्रमी, एशियाटिक सो० बंगाल, कलकत्ता, १९०६
ऋग्वेद रैपीटीशन म० ब्लूमफील्ड, हार्वर्ड, १९१६
गृह्यमन्त्र और उनका विनियोग डा० कृष्णलाल, ने० प० हा०, दिल्ली, १९७०
जातककालीन भारतीय संस्कृति—पं० मोहनलाल महतो वियोगी, पटना, १९५८
धर्मशास्त्र का इतिहास—म० म० पाण्डुरंग वामन काणे, अनु० अर्जुन काश्यप, लखनऊ।
पाणिनि हिज प्लेस इन संस्कृत लिटरेचर—गोल्डस्टकर, चौ० सं० सी०, वाराणसी, १९६५
वेदों में भारतीय संस्कृति—आद्यादत्त ठाकुर, लखनऊ।
पाणिनिकालीन भारतवर्ष—वासुदेवशरण अग्रवाल, बनारस, सं० २०१२

पुराणगत वैदिकसामग्री का समीक्षात्मक अध्ययन—रामशंकर भट्टाचार्य, हि० सा० स०, प्रयाग ।
भारतीय ज्योतिष बालकृष्ण दीक्षित, लखनऊ, १९६३
मेरा धर्म प्रियव्रत वेदावाचस्पति, हरिद्वार, २०१४
यमपितृपरिचय:—प्रियरत्न आर्य, दिल्ली दयानन्दाब्द १०९
वेदकालीन राज्यव्यवस्था श्यामलाल पाण्डेय, हिन्दी समिति, लखनऊ, उ० प्र०, १९७१
वेदसंज्ञा मीमांसा—पं० युधिष्ठिर मीमांसक, अजमेर, २०२३
वेदान्तदर्शन का इतिहास—उदयवीर शास्त्री, गाजियाबाद ।
वैदिकसम्पत्ति रघुनन्दन शर्मा, बम्बई २००८
वैदिकविज्ञान और भारतीयसंस्कृति-म० म० गिरधर शर्मा, पटना
वैदिकसाहित्य एवं संस्कृति—डा० निर्मला भार्गव, १९७२
वैदिकछन्दोमीमांसा—पं० युधिष्ठिर मीमांसक, रामलाल कपूर ट्रस्ट, अमृतसर, १९५९
वैदिक देवशास्त्र—मैकडानल, अनु०—रामकुमार राय, चौ० सं० सी० बनारस ।
वैदिक इण्डैक्स ए० मैकडोनल, कीथ, मोतीलाल बनारसीदास, वाराणसी, १९५८
सेक्रेड बुक्स आफ ईस्ट—अनु० ओल्डनबर्ग, मोतीलाल बनारसीदास, दिल्ली, १९६४
हरिवंशपुराण का सांस्कृतिक विवेचन-वीणापाणि पाण्डे लखनऊ

**प्रकीर्णका ग्रन्था:—**

आयुर्वेद का इतिहास, कविराज सूरमचन्द, शिमला
ऋग्वेद पर व्याख्यान पं० भगवद्दत्त, १९२०, लाहौर
श्रौतकोश:, भाग २, डांडेकर, पूना
श्रौतकोश:—जी० सी० काशीकर, वैदिक सं० मण्डल, पूना
चरणव्यूह:, वाराणसी, १९५९
सत्यार्थप्रकाश, स्वामिदयानन्द, गोविन्दराम हासानन्द, दिल्ली, १९६३
सर्वदर्शनसंग्रह, उमाशंकर ऋषि, चौखम्बा सं० सी०, बनारस
सुश्रुतसंहिता—चौखम्बा सं० सी०, बनारस, १९६३ ।

—::●::—

# डा० कुंवरलाल जैन कृत इतिहास ग्रन्थ

(१) **पुराणों में प्राङ्महाभारतकालीन इतिहास**
पृष्ठ ६६०; रैक्सीन जिल्द, प्लास्टिककवर मू० ३०० रु०

(२) **पुराणों में आदिभारत का इतिहास**
पृष्ठ २२६, रैक्सीन जिल्द, प्लास्टिककवर, मू० १०० रु०

(३) **पुराणों में इतिहास**
(हिन्दी अकादमी दिल्ली द्वारा पुरस्कृत ग्रन्थ)
सजिल्द, पृष्ठ २२६, मूल्य ७५ रुपया

(४) **पुराणों में ऐतिहासिक परिवर्तयुग**
सजिल्दपुस्तक, पृष्ठ १२०, मूल्य ७५ रुपया

(५) **Indian Asuras Colonized Europe**
रैक्सीनजिल्द, पृष्ठ ९८, मूल्य ८० रुपया

(६) **पुराणों में भारतोत्तरवंश**
सजिल्द, पृष्ठ १२८, मूल्य ५० रुपया

(७) **चतुर्दश मनुओं का इतिहास**
सजिल्द, पृष्ठ ५६, मूल्य ३० रुपया

(८) **वैदिकी यज्ञविद्या**
मूलसंस्कृत में—रैक्सीन जिल्द, प्लास्टिककवर ४०० रुपया
संस्कृत हिन्दी में—रैक्सीन जिल्द, प्लास्टिककवर ५०० रुपया
केवल हिन्दी में—रैक्सीन जिल्द, प्लास्टिककवर १०० रुपया

(९) **वेदपुराणेष्वैतिह्यसन्दर्भाः**—११३ रुपया

(१०) **तीर्थंकरों का इतिहास**—१०० रुपया

—::●::—

**इतिहासविद्या प्रकाशन**
**बी–२६ धर्म कालोनी,**
**नांगलोई, दिल्ली–४१**

# शब्दानुक्रमणी